# विज्ञापनम् ।

विवादरत्नाकराख्यः स्मृतिनिबन्ध एष प्राचीनः प्रामाणिकश्च विशेषतो मिथिलाप्रदेशेषु । विलुप्तप्रायमिवेमं मन्यमानाया आसियिक-समितेरभ्यनुज्ञया संशोधनेन मुद्राङ्कनाय अस्य नियुक्तोऽभवम् । स चाहं तदादेशेन तत्समितेः पुस्तकागारात्पुस्तकमेकं कलिकाता-संस्कृतविद्यालयस्य स्मृत्यध्यापक श्रीयुक्तमधुसूदनस्मृतिरत्नमहाशयसकाशाद्द्वितीयं पुस्तकं भूतपूर्वपण्डितवर-भवशङ्करविद्यारत्नमहाशयस्य दौहित्र-श्रीयुक्ततारापदभट्टाचार्य्यसकाशात्तृतीयं पुस्तकं संगृह्य प्रकृष्ट-प्रयासेन कार्य्यमेतत्समाहितवान् । पुस्तकेष्वेषु आसियिक-समितेः पुस्तकागारासंगृहीतं पुस्तकं समधिकविशुद्धतया प्रायशः प्राधान्येन परिगृहीतम्, अपरयोः पुस्तकयोः क्वचित्क्वचिदन्यविधपाठदर्शनात्ताभ्यां पाठान्तरं परिगृह्य सन्निवेशितं विषमपदव्याख्यानञ्च क्वचित्क्वचित्प्रदत्तम् ।

पुस्तकस्यास्य प्रणेता चण्डेश्वरो नाम महामहोपाध्यायः पण्डितप्रवरो मिथिलायां महासन्धिविग्रहिकठक्कुरराजमन्त्रिणः श्रीवीरेश्वरात्प्रादुरभूत् । यो हि मिथिलाधिपस्य नृपतेर्हरदेव-सिंहस्य महामन्त्री महासन्धिविग्रहिकठक्कुरश्चाभवत् । यश्चैकदा महोत्साहशीलो नेपालस्य समग्रभूपालान् जिगाय । येन च महैश्वर्यशालिना रसगुणभुजचन्द्रमिते (१२३६) शाकवर्षे वाग्वतीसिन्धुतीरे तुलापुरुषदानविधौ आत्मना तुलितः स्वर्ण-

राशिर्ब्राह्मणेभ्यः प्रदत्तः । यश्च न केवलमिममेव रत्नाकरमपरांश्च कृत्यरत्नाकर-दानरत्नाकर-व्यवहाररत्नाकर-शुद्धिरत्नाकर-पूजारत्नाकर-गार्हस्थरत्नाकराख्यान् षट् रत्नाकरान् रचितवान् । मिताक्षरा कल्पद्रुम-पारिजात-हलायुध प्रकाशादीन् सन्दर्भान्दृष्ट्वा समाकृष्य च तेषां सारान् संहिताश्च मन्वादिप्रणीताः पुराणानि च बहूनि समालोच्य ग्रन्थोऽयं शततरङ्गमितो विरचितः । अस्मिंश्च ये ये संहिताकारा ऋषयः पुराणादीनि सन्दर्भाश्च समुद्धृतास्तेषां नामानि यथा—

संहिताकारा ऋषयः ।

| | | |
|---|---|---|
| १ अङ्गिराः | १० पैठीनसिः | १८ वशिष्ठः |
| २ आपस्तम्बः | ११ प्रजापतिः | २० विष्णुः |
| ३ उशना | १२ बौधायनः | २१ वृद्धमनुः |
| ४ ऋष्यशृङ्गः | १३ भागुरिः | २२ बृहस्पतिः |
| ५ कात्यायनः | १४ मनुः | २३ व्यासः |
| ६ गौतमः | १५ मरीचिः | २४ शङ्खः |
| ७ दक्षः | १६ यमः | २५ संवर्त्तः |
| ८ देवलः | १७ याज्ञवल्क्यः | २६ हारीतः |
| ९ नारदः | १८ लिखितः | |

पुराणादीनि ।

| | | |
|---|---|---|
| १७ छन्दोगपरिशिष्टम् | २० मत्स्यपुराणम् | २३ रामायणम् |
| १८ देवीपुराणम् | २१ महाभारतम् | |
| १९ ब्रह्मपुराणम् | २२ मार्कण्डेयपुराणम् | |

सन्दर्भाः ।

| | | |
|---|---|---|
| ३४ असहायाचार्य्यः* | ३८ प्रकाशः | ४४ स्मृतिः |
| ३५ उदयकर* | ४० भाष्यकार.* | ४५ स्मृतिमहार्णवः |
| ३६ कल्पतरुः | ४१ मिताक्षरा | ४६ हरिहर* |
| ३७ कामधेनुः | ४२ मेधातिथि.* | ४७ हलायुधः* |
| ३८ पारिजातः | ४३ लक्ष्मीधरः* | |

प्रायेण सांसारिकाणां मानवानामृणादानवाक्पारुष्यादिषु सततं परस्परप्रवृत्तिर्दृश्यते। तदेतन्निवारणाय राज्ञा बहवो विधयः कर्त्तव्याः। सन्ति च तद्विधायका बहवः सन्दर्भाः, तेषु चायमेव सन्दर्भः प्राधान्येन ख्यायते। अस्य प्रतिपाद्यमेतद्यत्तत्तद्विवादपदलक्षणनिरूपणानन्तरं तन्निवारणोपायस्तदनिवृत्तौ शासनञ्च।

अस्मिंश्च विवादरत्नाकरमुद्रणविधौ कलिकाता प्रेसिडेन्सी-विद्यामन्दिरे सहकारिसंस्कृताध्यापकेन पण्डितवरश्रीयुक्त-हरिश्चन्द्रभट्टाचार्य्य कविरत्नमहाशयेन सम्यक् सत्साहाय्यं कृतम्। यदि चात्र मया समधिकः प्रयासः कृतः, तथापि आपरितोषात्सुधियां न तृप्तिरस्ति मे। दोषाश्चात्र सुधीभिः कृपया क्षन्तव्या इत्यलं पल्लवितेन।

---

* तारामयुक्तानि सन्दर्भकारनामानि, इतराणि तु ग्रन्थनामानि।

प्राप्ते शकाब्दे ग्रहखाहिभूमे (१८०९)
विषादरत्नाकरनामकोऽयम् ।
ग्रन्थः प्रकाशं गमितः प्रयत्नात्
स्थानेषु पाठार्थनिवेशनेन ॥

श्रीदीननाथशर्म्मविद्यालङ्कारस्य ।

## निर्घण्टपत्रम्।

# श्रीविवादरत्नाकरः ।



कुसुमशरविलासे भङ्गुरस्याद्रिपुत्री-
करतलवलयस्य स्थानगतस्यार्द्धमेकम् ।
निजमिव मणिखण्डं मन्यमानस्य शम्भो-
र्भवतु सह विवादः कान्तया कौतुकाय ॥

जटायां गङ्गायां मदनजयिना विश्वपतिना
विवादं जातं तद्धनविभजने तत्तनययोः ।
परिच्छिन्दन् ब्रह्मा गणपतिविशाखौ नियमयन्
मुदे दायादायव्यवहृतिविपश्चिद्भवतु वः ॥

श्रीचण्डेश्वरमन्त्रिणा मतिमतानेन प्रसन्नात्मना
नेपालाखिलभूमिपालजयिना धर्म्मेन्दुदुग्धाब्धिना*।
वाग्वत्याः सरितस्तटे सुरधुनीसाम्यं दधत्याः शुचौ
मार्गे मासि यथोक्तपुण्यसमये दत्तस्तुलापूरुषः ॥

यो गम्भीरविवादवारिधिजले निर्मज्जतामुद्धृतिं
कुर्व्वन् पोत इवोल्लसद्गुणलसः कीर्त्तिं परामश्नुते ।
मीमांसानयनो विचारचतुरो मन्त्रीन्द्रचण्डेश्वरः
स श्रीमान् परमत्र वादविषयं प्रस्तौति रत्नाकरम् ॥

---

* पुण्यात्मना कर्म्मणेति पाठान्तरम् ।

श्रीमान् विवादपददुर्गतिपातुकाना-
मुद्धारहेतुक्षतनिर्णयलब्धपुण्यः ।
चण्डेश्वरः सचिवरत्नमिमं विवाद-
रत्नाकरं रचयति श्रुतिशास्त्रविज्ञः ॥

ऋणादानं ततो वृद्धिरक्षता वृद्धिरप्यथ ।
वृद्धेश्च परमा वृद्धिर्निषेधस्तदनन्तरम् ॥
अथाधिविधिसिद्धिश्च ततोऽपि प्रतिभूविधिः ।
ऋणादानमिति प्रोक्तमुद्ग्राहणविधिस्ततः ॥
निःक्षेपोऽथ ततोऽस्वामिविक्रयः परिकीर्त्तितः ।
सम्भूय च समुत्थानं ततो दत्ताप्रदानिकम् ॥
अथाभ्युपेत्याशुश्रूषा दास्यमोचस्ततः परम् ।
अथ दास्याधिकारी च वेतनस्यानपक्रिया ॥
पण्यस्त्रीणां विधिश्चात्र कथितस्तदनन्तरम् ।
स्वामिपालविवादश्च ततः संविद्व्यतिक्रमः ॥
विक्रीयासम्प्रदानञ्च क्रीत्वा चानुशयस्ततः ।
सीमाविवादोऽप्यपरः सेतुश्च कथितस्ततः ॥
क्षुष्टाक्षुष्टे शस्यरचा शस्यघातकदण्डनम् ।
अदण्ड्योऽथ वाक्पारुष्यं दण्डपारुष्यमप्यथ ॥
स्तेयं स्तेनः प्रकाशानां तस्कराणाञ्च दण्डनम् ।
दण्ड्याश्चाप्रकाशानां तस्कराणामिहोदितः ॥
चौरान्वेषणमप्यत्र स्तेनस्यायातिदेशनम् ।
सर्वतस्तेनकथनमस्मिन् रत्नाकरे कृतम् ॥

स्त्रीमालाभे तथाद्यर्नं साहसञ्चाथ कीर्त्तितम्।
घातकान्वेषणञ्चात्र तथा संग्रहणं ततः॥
दण्डयाभिगमे प्रोक्तः कन्याया दूषणं ततः।
कन्यक्यभिगमे दण्डो धर्मः स्त्रीपुंसयोस्ततः॥
स्त्रीरक्षा योषितां धर्मः प्रोषितस्वामिनीविधिः।
मृतस्वामिवधूधर्मौ नियोगश्च ततः परम्॥
पश्चात् दायभागो जीवत्पितृकखण्डनम्।
प्रमीतपितृकाणाञ्च विभागस्तदनन्तरम्॥
अनेकमातृकभ्रातृविभागश्च ततः परम्।
विभागानधिकारी च विभाज्यमथ कीर्त्तितम्॥
अविभाज्यं ततः स्त्रीणां धनस्वत्वमनन्तरम्।
स्त्रीणां धनविभागश्च निष्पुत्राया धने ततः॥
सवर्णं स्त्रीधने सुतविभागश्च ततः परम्।
नानावर्णसुतानाञ्च विभागोऽथ विभक्तजैः॥
विभक्तागतभागश्च विभागस्तनयान्तरैः।
औरसः क्षेत्रजः पुत्रः पुत्रिकातत्सुतावपि॥
पौनर्भवश्च कानीनो गूढोत्पन्नस्ततः पुनः।
सहोढो दत्तकः क्रीतः स्वयञ्चोपागतस्तथा॥
अपविद्धः कृत्रिमश्च शूद्रापुत्रस्ततः परम्।
पुत्रत्वस्य विचारोऽभिव्यक्तिदेयः सुतस्य च॥
अथ पुत्रनिरुक्तादि निन्दितायाश्च कीर्त्तिताः।
अपुत्रार्थविभागश्च भागः संसृष्टिनां ततः॥

विभागनिर्णयः कृत्यं विभक्तानां ततः परम् ।
समाह्वयय सद्यूतः क्रियाभेदः प्रकीर्णकम् ॥
तरङ्गुल्कं ततः प्रोक्तं निधिः परनिधिस्तथा ।
विधिर्दण्डप्रणयने दण्डोत्कर्षादिकं ततः ॥
ब्राह्मणस्य परीहारः परीहारः पुरस्य च ।
दण्डसंज्ञा मानसंज्ञा संज्ञास्मिन् नैगमादिनः ॥
शतमेकं तरङ्गाणां विदुषां चित्तरञ्जनम् ।
विधीयते विधिज्ञेन श्रीचण्डेश्वरमन्त्रिणा ॥



## अथ ऋणादानविवादपदम् ।

तत्र बृहस्पतिः ।

पदाङ्गसहितः सम्यग्विवादस्त्वेष कीर्त्तितः ।
विवादकारणान्यत्र पदानि शृणुताधुना ॥
ऋणादानप्रदानानि द्यूताह्वानाह्निकानि च ।
क्रमशः संप्रवक्ष्यामि क्रियाभेदांश्च तत्त्वतः ॥

पदं भाषादि, अङ्गं संशयप्रयोजनादि, तत्सहितः । पदानि अधिकरणानि ऋणादीनि । केनचित् विवादकारणानीति पठित्वा विवादः क्रियते येषु ऋणादानादिषु तानीति व्याख्यातं, तत्र पदमनर्थकं स्यात् । द्यूताह्वानाह्निकानि द्यूताह्वानापसाम्नानि ।

नारदः ।

ऋणं देयमदेयञ्च येन यत्र यदा भवेत् ।
दानग्रहणधर्म्माच्च ऋणादानमिति स्मृतम् ॥
स्थानलाभनिमित्तं यद्दानग्रहणमिष्यते ।
तद् कुसीदमिति प्रोक्तं तेन वृत्तिः कुसीदिनाम् ॥

स्थानं प्रयुक्तधनस्थितिः, लाभः कलादिप्राप्तिः, तन्निमित्तं दानं दीयमानं मूलधनं धनिकेन, ग्रहणं गृह्यमाणं तदेव खादकेन ।

बृहस्पतिः ।

कुत्सितात् सीदतश्चैव निर्विशङ्कैस्तु गृह्यते ।
चतुर्गुणं वाष्टगुणं कुसीदाख्यमृणञ्च तत् ॥
परिपूर्णं गृहीत्वाधिं बन्धं वा साधु लग्नकम् ।
लेख्यारूढं साक्षिमद्वा ऋणं दद्याद्धनी सदा ॥

कुत्सितात् सीदतश्चाधमर्णात् सकलं धनं यद्गृह्यते निर्विशङ्कैरुत्तमर्णैः । चतुर्गुणं वाष्टगुणमिति वाकारोऽनास्थायां, तेन द्वैगुण्यादिलाभः । अत्र कुसीदमृणमित्येव लक्षणम् । तच्च नारदोक्तौ स्फुटमेव, शेषन्तु कुसीदपदे अवयवव्युत्पत्तिमात्रकथनम् । आधिबन्धशब्दौ भोग्याधिपरौ । लग्नकसाधुत्वम् ऋणदापयितृत्वस्थैर्य्येण ऋणप्रयोक्तुर्न्यायमुपदेशः ।

नारदः ।

विश्रम्भहेतू द्वावत्र प्रतिभूराधिरेव च ।
लिखितं साक्षिणश्च द्वे प्रमाणे व्यक्तिकारके ॥

विप्रम्भः प्रयुक्तऋणप्राप्तिविश्वासः, व्यक्तिरभिव्यक्तिः, प्राधान्येन द्वयोरुपन्यासः।

कात्यायनः।

न स्त्रीभ्यो दासबालेभ्यः प्रयच्छेत् किञ्चिदुद्धृतम्।
दाता न लभते तत्तु तेभ्यो दत्तन्तु यद्वसु॥

उद्धृतमुद्धरणऋणमिति यावत्।

इति विवादरत्नाकरे ऋणादानतरङ्गः।

---

## अथ वृद्धिः।

तत्र वशिष्ठः।

वशिष्ठवचनप्रोक्तां वृद्धिं वार्द्धुषिके शृणु।
पञ्च माषास्तु विंशत्यामिति धर्मो न हीयते॥

विंशतिः पलानाम्।

गौतमः।

*कुसीदवृद्धिर्धर्म्या विंशतिः पञ्चमाषिकी मासम्।*

धर्म्या शास्त्रानुमता। पलविंशतिर्मूलं मासेन पञ्चमाषक-वृद्धिमती भवतीत्यर्थः।

स्मृतिः।

माषो विंशतिभागस्तु पलस्य परिकीर्त्तितः।

मनुः ।

वशिष्ठविहितां वृद्धिं सृजेद्वित्तविवर्द्धिनीम् ।
अशीतिभागं गृह्णीयात् मासाद्वार्द्धुषिकः शते ॥

मासात् मासमतीत्येत्यर्थः । भोग्याधिविषयमेतत् ।

यदाह याज्ञवल्क्यः ।

अशीतिभागो वृद्धिः स्यात् मासि मासि सबन्धके ।
वर्णक्रमात् शतं द्वित्रिचतुःपञ्चकमन्यथा ॥

शते सबन्धके ऋणे मासेन अशीतितमो भागो वृद्धिरिति पूर्व्वखण्डार्थः । अबन्धके शते ऋणे ब्राह्मणक्षत्रियवैश्यशूद्राणां यथासंख्यं पुराणस्य द्वयं त्रयं चतुष्टयं पञ्चतमञ्च वृद्धिरिति द्वितीयखण्डार्थः ।

बृहस्पतिः ।

अशीतिभागो वर्द्धेत लाभे द्विगुणतामियात् ।
प्रयुक्तं सप्तभिर्वर्षैस्त्रिभागो नैव संशयः ॥

व्यासः ।

सबन्धे भाग आशीतः षाष्टभागः सलग्नके ।
निराधाने द्विकशतं मासलाभ उदाहृतः ॥

आशीतः अशीतितमः । अयमेव अशीत्यष्टमभागसहितः सलग्नके । तेन पणद्वयोनपुराणद्वयं लभ्यते । निराधानद्वत्यत्राधानशब्दो लग्नकसहिताधानपरः । तेन लग्नकबन्धकशून्ये पुराणद्वयं लभ्यते । एतच्च ब्राह्मणविषयं, क्षत्रियादौ पुराणत्रयादिविधानात् ।

मनुः ।

> द्विकं शतं वा गृह्णीयात् सतां धर्म्ममनुस्मरन् ।
> द्विकं शतं हि गृह्णानो न भवत्यर्थकिल्बिषी ॥

हारीतः ।

> पुराणपञ्चविंशत्यां मासे अष्टपणा वृद्धिः, एवं सद्विमासैश्चतुर्भिर्वर्षैर्द्विपर्य्यागतं सन्तिष्ठते, एषा धर्म्म्या वृद्धिः, नानया धर्म्मात् च्यवते ।

पुराणः षोड़श पणाः । द्विपर्य्यागतं द्विगुणीभूतं, एवं प्रतिमासं द्विकं शतं भवति, सन्तिष्ठते न पुनर्वर्द्धते । एतदुभयमपि अधमर्णब्राह्मणविषयम् ।

मनुः ।

> द्विकं त्रिकं चतुष्कं वा पञ्चकञ्च शतं समम् ।
> मासस्य वृद्धिं गृह्णीयात् वर्णानामनुपूर्व्वशः ॥

द्वौ पुराणौ मासि वृद्धिरस्मिन् गृह्यते इति द्विकं, एवं त्रिकाद्यपि । वर्णानां ब्राह्मणक्षत्रियवैश्यशूद्राणां पार्श्वात् मासे यथासंख्यं शते चटणे पुराणस्य द्वयं त्रयं चतुष्टयं पञ्चतमञ्च वृद्धिं गृह्णीयादित्यर्थः ।

विष्णुः ।

> अथोत्तमर्णोऽधमर्णात् यथादत्तमर्थं गृह्णीयात् द्विकं त्रिकं चतुष्कं पञ्चकञ्च सर्व्ववर्णानुक्रमेण प्रतिमासम् ।

गौतमः ।

> नातिसांवत्सरीमेके ।

मनुः।

नातिसांवत्सरीं वृद्धिं न चादिष्टां पुनर्हरेत्।

चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या॥

संवत्सरमतिक्रान्ता अतिसांवत्सरी। यद्युत्तमर्णः स्वल्पैरेव दिवसैरधमर्णकर्त्तृकं धनदानमाशङ्क्य वृद्धिं नियमयेत्, तदा संवत्सरपर्य्यन्तमेव, न तु तदधिकदिनवृद्धिमपीत्यर्थः। हला-युधस्तु यदाऽप्राप्तलाभे* ऋणे लाभग्रहणवासनावानुत्तमर्णः स्यात्, तदा संवत्सरादर्व्वागेव लाभं गृह्णीयात्, न तु संवत्सरा-दूर्द्ध्वमित्याह। न चादिष्टां पुनर्हरेदिति न शास्त्रानुक्तप्रकारेण वृद्धिं हरेत्। चक्रवृद्धिः कालवृद्धिः कारिता कायिका च या वृद्धिस्तां शास्त्रानुक्तप्रकारेण न हरेदित्यर्थः।

वृहस्पतिः।

वृद्धिश्चतुर्विधा प्रोक्ता पञ्चधान्यैः प्रकीर्त्तिता।

षड्विधास्मिन् समाख्याता तत्त्वतस्तां निबोधत॥

कायिका कालिका चैव चक्रवृद्धिरथापरा।

कारिता च शिखावृद्धिर्भोगलाभस्तथैव च॥

व्यासः।

दोह्यवाह्यकर्म्मयुता कायिका समुदाहृता।

* अप्राप्तलाभे अभिष्टाशौ अव्यवस्थितत्वादित्यर्थः।

नारदः ।

कायाविरोधिनी शश्वत् पणार्द्धाद्या तु कायिका।
प्रतिमासं स्रवति या वृद्धिः सा कालिका मता॥
वृद्धेरपि पुनर्वृद्धिश्चक्रवृद्धिरुदाहृता ।
वृद्धिः सा कारिता नाम यर्णिकेन स्वयं कृता ॥

दोह्यं गवादि, वाह्यं बलीवर्दादि, कायाविरोधिनीति कायः मूलधनशरीरम्। शश्वत् पणार्द्धाद्या पणतदर्द्धादिक्रमेण नित्यशुभाभ्यां व्यवस्थापिता, सा नारदमते कायिका। ॰हलायुधेन तु पणार्द्धाद्येत्यत्र पणवाह्येति लिखितं, व्याख्यातञ्च पणस्य मूलधनस्य यावदवस्थानं तावत् शश्वत् वर्षसहस्रमपि उत्तमर्णेन वाह्यते प्राप्यते सा कायिकेति। तच्च सकलनिबन्धान्तरेषु पणार्द्धाद्या* इति पाठदर्शनादुपेक्षितम्। वृद्धेरपि पुनर्वृद्धिरिति यत्र वृद्धिरूपं धनं दातुमशक्तोऽधमर्णः सवृद्धिकमिदं दास्यामीति अङ्गीकरोति, तत्र या वृद्धिः सा चक्रवृद्धिरित्यर्थः।

कात्यायनः ।

ऋणिकेन तु या वृद्धिरधिका सम्प्रकल्पिता।
आपत्कालकृता नित्यं दातव्या सा तु कारिता ॥
अन्यथा कारितावृद्धिर्दातव्या न कथञ्चन ।

ऋणिकेन तु या स्वकार्य्यतया आयीतभागद्विकशतादिरूप-वृद्धितोऽधिका वृद्धिर्व्यवस्थापिता, सा कारिता, सा च तेन

---

* सकलनिबन्धकारादृतपणार्द्धाद्या इति पाठान्तरम् ।

देया, अन्यथा तेनाव्यवस्थापिता बलेन स्वीकारितापि न देयेत्यर्थः।

याज्ञवल्क्यः।

कान्तारगास्तु दशकं सामुद्रा विंशकं शतम्।

कान्तारोऽरण्यम्। ये मूलधनं गृहीत्वा कान्तारं समुद्रं वा गच्छन्ति, ते उत्तमर्णाय दशकं शतं विंशकञ्च शतं कृतायामकृतायामपि वृद्धौ दापयितव्याः।

कृतायां याज्ञवल्क्यएव।

दद्युर्वा स्वकृतां वृद्धिं सर्व्वे सर्व्वासु जातिषु।

सर्व्वे ब्राह्मणादयोऽधमर्णा अबन्धके सबन्धके वा स्वकृतां स्वाभ्युपगतां वृद्धिं सर्व्वासु जातिषु दद्युरित्यर्थः।

मनुः।

समुद्रयानकुशला देशकालार्थदर्शिनः।

स्थापयन्तीच्छया* वृद्धिं सा तत्राधिगमं प्रति॥

समुद्रयानकुशला इति वणिङ्मात्रोपलक्षणम्। देशकालार्थदर्शिनः अस्मिन् देशे इयान् लाभ इति ये पश्यन्ति। अधिगमो निश्चयः। तेन सा तत्र निश्चेतव्येत्यर्थः।

हारीतः।

पुराणी पणिकं मासमित्येके।

एतत् सङ्करजात्यधमर्णविषयं चातुर्वर्ण्ये द्विकत्रिकादीनां धर्म्मत्वाभिधानात्।

---

* स्ति तु याभिरिति वा पाठ।

तथा ।

तूले तु द्विगुणं धान्यं त्रिगुणमेव वर्द्धते तयोर्णा कार्पासः
संवत्सरेण तृणशलाकं घृतलवणगुड़मष्टगुणम् ।

तूले नवशस्यागमे द्वित्रादिभिरपि मासैर्नवशस्यागमे द्विगुणं धान्यं भवतीत्यर्थः । यदि तूलागमे न दत्तं तदा त्रिगुणमेव, न ततः परं वर्द्धते । तयोर्णेति धान्यवदूर्णा कार्पासोऽपि वर्द्धते इत्यर्थः । शलाका ईषिका, तृणादिषु संवत्सरेणाष्टगुणा वृद्धिरित्यर्थः ।

नारदः ।

ऋणानां सार्व्वभौमोऽयं विधिर्वृद्धिकरः स्मृतः ।
देशाचारस्थितिस्त्वन्या यत्रर्णमवतिष्ठते ॥

योऽयमाधीतादिवृद्धिप्रकारः, स सार्व्वभौमएव शास्त्रीयत्वात् । देशाचारस्थितिस्तु अन्या सार्व्वत्रिकत्वविरोधिनी ।

देशाचारस्थितिमाह ।

द्विगुणं त्रिगुणञ्चैव तथान्यस्मिंश्चतुर्गुणम् ।
तथाष्टगुणमन्यस्मिन् देयं देशेऽवतिष्ठते ॥

बृहस्पतिः ।

प्रत्यहं गृह्यते या तु शिखावृद्धिस्तु सा मता ।
शिखेव वर्द्धते नित्यं शिरश्छेदान्निवर्त्तते ।
मूले दत्ते तथैवैषा शिखावृद्धिस्ततः स्मृता ॥

कात्यायनः ।

आधिभोगस्त्वशेषो यो वृद्धिस्तु परिकल्पिता ।
प्रयोगो यत्र चैवं स्यादाधिभोगः स उच्यते ॥

आहितस्य भोगो वृद्धिरित्येवं कल्पयित्वा यत्र ऋणप्रयोगः तत्र या वृद्धिरसावशेष आधिभोग इत्यर्थः।

वृहस्पतिः।

गृहात् क्षोमः सद्यः क्षेत्रात् भोगलाभः प्रकीर्त्तितः।
शिखावृद्धिं कायिकाञ्च भोगलाभं तथैव च॥
धनी तावत् समादद्यात् यावन्मूलं न शोधितम्॥

क्षोमोऽत्र गृहवासनिमित्तकं भाटकम्। गृहमत्रोपलक्षणम्, तेन घट्टादावपि* क्षोमएव लाभ इति बोद्धव्यम्। सद्यः क्षेत्रभवं फलादि।

याज्ञवल्क्यः।

आधिस्तु भुज्यते तावत् यावत् तन्न प्रदीयते।

आधिधनं यावत् न प्रदीयते, तावत् तदुत्तमर्णेन आधिधिरमपि भुज्यते इत्यर्थः। तेन द्वैगुण्यादिप्रत्याकलनेऽपि वृद्धिभोगरूपा भवत्येवेति तात्पर्य्यम्। ऋणं लेख्यकृतं देयं पुरुषैस्त्रिभिरेव तु। आधिस्तु भुज्यते तावत् यावत् तन्न प्रदीयते इति वाक्यम् ऋणादानप्रकरणे यदर्थकं लिखितं तदर्थोऽस्य यद्यपि स्वरसतः प्रतिभाति, तथाप्यनेकनिबन्धृभिरतदर्थतयैव उत्तरार्द्धस्य सम्मतत्वात् तथैवात्रापि लिखितम्।

उत्तमर्णो दद्यादित्यनुवृत्तौ विष्णुः।

भन्यवृद्धौ प्रविष्टायामपि न स्थावरमाधिमृते वचनात्।

क्षेत्रादेर्भोगद्वारेण परमहत्त्वादुत्तमर्णप्रविष्टायामपि यावत्

* घट्टादिष्वपीति पाठान्तरम्।

मूलधनं न दीयते, तावत् पर्याप्तकाले प्रविष्टे तव आधिं परित्यक्ष्यामीति विशेषव्यवस्थां विना उत्तमर्णो नाधिं त्यजेदित्यर्थः। एतदेव उत्तरत्र चयाधिमदर्शनेन व्यञ्जयति विष्णुः।

> गृहीतधनप्रवेशार्थमेव यत् स्थावरं दत्तं तत् गृहीतधनप्रवेशे दद्यादिति।

मनुः।

> कृतानुसारादधिका व्यतिरिक्ता न सिध्यति।
> कुसीदपथमाहुस्तं पञ्चकं शतमर्हति॥

पूर्व्वोक्तशास्त्रानुसारात् द्विकशतादिरूपादधिका अधमर्णेनाकृता वृद्धिर्न सिध्यति, यतः कुसीदपथमाहुस्तम्।* यदा तु व्यवहारावष्टम्भात् उत्तमर्णोऽधिकमधमर्णेनाकारितं लाभमिच्छति तदा ब्राह्मणे पञ्चकं शतं ग्रहीतुमर्हति, न ततोऽधिकमधमर्णाकारितम्।

वृहस्पतिः।

> भोगो यत् द्विगुणादूर्द्ध्वं चक्रवृद्धिश्च गृह्यते।
> मूलञ्च सोदयं पश्चात् वार्द्धुष्यं तद्विगर्हितम्॥

अस्यार्थः, भोगद्वारा द्विगुणाधिकधने प्रविष्टेऽपि क्षेत्रादिविषयस्य यो भोगः, या च चक्रवृद्धिः, यदपि आधिमोक्षणसमये पुनः सोदयधनग्रहणं, तद्वार्द्धुष्यं विगर्हितम् अधर्म्माय तद्भवति, न तु भोगादिकं तत्र लभते एव तत्राभ्यर्थं शेषं मार्गेर्बोधनात्।

[illegible]

---

* कुसीदपथमिति पाठान्तरम्।

# अथाक्षतवृद्धिः ।

तत्र कात्यायनः ।

कृत्वोद्धारमदत्त्वा यो याचितस्तु दिशं व्रजेत् ।
ऊर्द्ध्वं मासत्रयात्तस्य तद्धनं वृद्धिमाप्नुयात् ॥

उद्धारोऽत्र कलामव्यवस्थाप्य गृहीतं धनम्। दिशं व्रजेत् अर्थिसाद्देशं त्यजेत्। तस्य अधमर्णस्य देयं तद्धनं भवति।

पण्यं गृहीत्वा यो मूल्यमदत्त्वैव दिशं व्रजेत्।
ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात्।
निक्षेपं वृद्धिशेषञ्च क्रयं विक्रयमेव च।
याच्यमानमदत्तञ्चेत् वर्द्धते पञ्चकं शतम् ॥

वृद्धिशेषमिति यद्यपि कर्म्मधारयसमासोऽभ्यर्हितत्वात् अत्र विवक्षितः, तथापि वृद्धिपदसमानाधिकरणः शेषपदार्थः शेषिणमपेक्षते एव तदाकाङ्क्षायाञ्च वृद्धिशब्देन साक्षादुपस्थापितायाएव वृद्धेः शेषित्वं युक्तमिति वृद्धेरेव शेषः* स च दत्तवृद्धेरन्यः। क्रयं क्रय्यद्रव्यं वस्त्रादि। विक्रयं विक्रयसाधनमूल्यम्। तेन यो मूल्यं गृहीत्वा विक्रीतमपि वस्त्रादि याचितं न ददाति, क्रेता वा क्रीत्वा क्रयसाधनमूल्यं याचितं न ददाति, स पञ्चकशतक्रमेण वृद्धिं दद्यादित्यर्थः। तथा।

प्रीतिदत्तं न वर्द्धेत यावन्न प्रतियाचितम्।
याच्यमानमदत्तञ्चेत् वर्द्धते पञ्चकं शतम् ॥

प्रीतिदत्तं प्रीत्या प्रामितिकं दत्तम्।

---

* वृद्धेरेव शेषित्वमिति पाठान्तरम्।

यो याचितकमादाय तदत्त्वा दिशं व्रजेत् ।
ऋतुत्रयस्योपरिष्टात् तद्धनं वृद्धिमाप्नुयात् ॥

याचितकमर्पितम् ।

स्वदेशस्थोऽपि वा यस्तु न दद्यात् याचितोऽसकृत् ।
स तत्राकारितां वृद्धिमनिच्छन्नपि चावहेत् ॥

अत्र च वत्सरातिक्रमे द्विकादिरूपा वृद्धिर्बोद्धव्या ।

तथाच विष्णुः ।

वृद्धिं दद्युरकृतामपि वत्सरातिक्रमे यथाभिहिताम् । अकृतामनवधारितां च यथाभिहितां वर्णक्रमेण प्रतिमासं प्रतिशतं द्विकादिरूपाम् ।

नारदः ।

न वृद्धिः प्रीतिदत्तानां स्यादनाकारिता क्वचित् ।
अनाकारितमप्यूर्द्धं वत्सरार्द्धात् विवर्द्धते ॥
एष वृद्धिविधिः प्रोक्तः प्रीतिदत्तस्य धर्म्मतः ।
वृद्धिस्तु योक्ता धान्यानां वार्द्धुष्यं तदुदाहृतम् ॥

वृद्धिस्तु योक्ता धान्यानामिति धान्यानां वृद्धिमनुक्ता गृहीतानां याचितानां अदाने या वर्णक्रमेण द्विगुणादिरूपा वृद्धिरुक्ता, सैव भवति, सा च वार्द्धुष्यमुच्यते इत्यर्थः ।

इति विवादरत्नाकरे अकृतवृद्धितरङ्गः ।

त्र गौतमः।

चिरकालव्यवस्थाने द्वैगुण्यं प्रयोगस्य।

युक्तधनस्य कथितद्वैगुण्यसमयातिरिक्तसमयेऽपि द्वैगुण्यमेव नश्यति। सामान्यधनप्रयोगविषयश्चैतत्।

कात्यायनः।

मणिमुक्ताप्रवालानां सुवर्णरजतस्य च।
तिष्ठति द्विगुणा वृद्धिः फालकौटाविकस्य च॥

तिष्ठति चिरादपि द्वैगुण्याधिका न भवतीत्यर्थः। फालं फलोद्भवं कार्पासादि। कौटं कीटभवं वस्त्रादि। आविकं मेषभवं कम्बलादि।

मनुः।

कुसीदवृद्धिर्द्वैगुण्यं नात्येति सकृदाहृता।
धान्ये सदे लवे वाह्ये नातिक्रामति पञ्चताम्॥

अस्यार्थः,—धान्ये व्रीहियवादौ। सदे वृक्षसमुत्थफलादौ। लवे मेषादिसमुत्थोर्णादिचामरादौ लूयते इति व्युत्पत्त्या। वाह्ये तुरगादौ वाहनीयतया। हिरण्यवत् द्विकशतादिमर्यादया वृद्ध्या प्रयुक्ते सति न पञ्चगुणत्वं वृद्धिरतिक्रामति। सम्भवति कश्चिदेतादृशो यो धान्यशतमश्वशतं वा द्विकशतमर्यादया उद्धारेण गृह्णाति, स महतापि कालेन धान्यादि पञ्चशतमेव दातुमर्हति नाधिकमिति। अत्र च धान्ये पञ्चगुणत्वमुक्तं, वृहस्पतिना धान्ये चतुर्गुणत्वमुक्तं, विष्णुमरीचिवशिष्ठहारीतैश्च त्रिगुणत्वमुक्तं; तदत्राधमर्णापकृष्टगुणत्वमध्य-

गुणत्वोत्कृष्टगुणत्वैर्व्यवस्था, महार्घसमार्घधान्यके कालदेश-
भेदेन वा व्यवस्था। एवमन्यत्रापि।

गौतमः।

कुसीदं पशूपजलोमक्षेत्रसदवाह्येषु नातिक्रामति पञ्च-
गुणत्वम्।

पशूपजं क्षीरघृतादि। लोम ऊर्णादि। क्षेत्रसदः क्षेत्रसमुत्थं
फलं यवगोधूमकदलचूतादि। तेषु प्रयुक्तेषु या वृद्धिः, सा
पञ्चगुणत्वं नातिक्रामतीत्यर्थः।

बृहस्पतिः।

हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके।
धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेषु च॥

हिरण्ये सुवर्णरजते, कुप्यशब्दोऽत्र हिरण्यरजतान्यताम्रादि-
परः।

विष्णुः।

हिरण्यस्य परा वृद्धिर्द्विगुणा, त्रिगुणा वस्त्रस्य, धान्यस्य
चतुर्गुणा, रसस्य अष्टगुणा, सन्ततिः स्त्रीपशूनाम्।

स्त्रीणां पशूनाञ्च दास्यादीनां गोमहिष्यादीनाञ्च पोषणासम-
र्थस्य कस्मैचित् क्षीरं व्यूढिं वा व्यवस्थाप्य पोषणसन्तत्यर्थं
प्रयुक्तस्य चिरावस्थाने सन्ततिरेव वृद्धिर्न द्रव्यान्तरमित्यर्थः।

वशिष्ठः।

द्विगुणं हिरण्यं त्रिगुणञ्च धान्यं धान्येनैव रसा व्या-
ख्याताः, पुष्पमूलफलानि च तुलाधृतमष्टगुणम्।

रसा इक्षुरसादयः, तेऽपि त्रिगुणाइत्यर्थः । एवं पुष्पादीनि । तुलाधृतं, कर्पूरादि । एतद्दशवत्सरावरुद्धतुलाधृतान्यविषयम् ।

बृहस्पतिः ।

उक्ता पञ्चगुणा धान्ये वीजैश्चै षड्गुणा स्मृता ।

लवणस्नेहमद्येषु वृद्धिरष्टगुणा स्मृता ॥

गुड़े मधुनि चैवोक्ता प्रयुक्ते चिरकालिके ॥

कात्यायनः ।

तैलानाञ्चैव सर्व्वेषां मद्यानामथ सर्पिषाम् ।

वृद्धिरष्टगुणा प्रोक्ता गुड़स्य लवणस्य च ॥

बृहस्पतिः ।

तृणकाष्ठेष्टकासूत्रकिण्वपर्णास्थिचर्म्मणाम् ।

हेतिपुष्पफलानाञ्च वृद्धिस्तु न निवर्त्तते ॥

किण्वं सुरावीजभूतद्रव्यं क्षथइति प्रसिद्धम् । अस्थि दन्त-प्रह्वादि । चर्म्म कृष्णसारादेः कृत्तिः । हेतिरायुधम् । अत्र वृद्धिविशेषवत्तया पुष्पफलयोर्बोधनात् विरोधे तत्र दुर्लभे पुष्पफले विवक्षिते, अत्र तु सुलभे इति परीहारः ।

विष्णुः ।

किण्वकार्पाससूत्रचर्म्मवर्म्मायुधेष्टकाङ्गाराणामक्षयानुक्तानां द्विगुणा ।

इति विवादरत्नाकरे परमवृद्धितरङ्गः ।

---

गुणत्वोत्कृष्टगुणत्वैर्व्यवस्था, महार्घसमार्घधान्यके कालदेश-भेदेन वा व्यवस्था। एवमन्यत्रापि।

गौतमः।

> कुसीदं पशूपजलोमचैत्रसदवाह्येषु नातिक्रामति पञ्च-गुणत्वम्।

पशूपजं चीरघृतादि। लोम ऊर्णादि। चैत्रसदः चैत्रसमुत्थं फलं यवगोधूमकदलचूतादि। तेषु प्रयुक्तेषु या वृद्धिः, सा पञ्चगुणत्वं नातिक्रामतीत्यर्थः।

वृहस्पतिः।

> हिरण्ये द्विगुणा वृद्धिस्त्रिगुणा वस्त्रकुप्यके।
> धान्ये चतुर्गुणा प्रोक्ता सदवाह्यलवेषु च॥

हिरण्ये सुवर्णरजते, कुप्यशब्दोऽत्र हिरण्यरजतान्यताम्रादि-परः।

विष्णुः।

> हिरण्यस्य परा वृद्धिर्द्विगुणा, त्रिगुणा वस्त्रस्य, धान्यस्य चतुर्गुणा, रसस्य अष्टगुणा, सन्ततिः स्त्रीपशूनाम्।

स्त्रीणां पशूनाञ्च दास्यादीनां गोमहिष्यादीनाञ्च पोषणासमर्थस्य कस्मैचित् चीरं व्यूढिं वा व्यवस्थाप्य पोषणसन्तत्यर्थं प्रयुक्तस्य चिरावस्थाने सन्ततिरेव वृद्धिर्न वृद्ध्यन्तरमित्यर्थः।

वशिष्ठः।

> द्विगुणं हिरण्यं त्रिगुणञ्च धान्यं धान्येनैव रसा व्याख्याताः, पुष्पमूलफलानि च तुलाधृतमष्टगुणम्।

रसा इक्षुरसादयः, तेऽपि त्रिगुणा इत्यर्थः। एवं पुष्पादीनि। तुलाधृतं कर्पूरादि। एतद्ग्रन्थान्तरावरुद्धतुलाधृतान्यविषयम्।

बृहस्पतिः।

उक्ता पञ्चगुणा शाके वीजेचौ षड्गुणा स्मृता।
लवणस्नेहमद्येषु वृद्धिरष्टगुणा स्मृता॥
गुड़े मधुनि चैवोक्ता प्रयुक्ते चिरकालिके॥

कात्यायनः।

तैलानाञ्चैव सर्व्वेषां मद्यानामथ सर्पिषाम्।
वृद्धिरष्टगुणा प्रोक्ता गुड़स्य लवणस्य च॥

बृहस्पतिः।

तृणकाष्ठेष्टकासूत्रकिण्वपर्णास्थिचर्म्मणाम्।
हेतिपुष्पफलानाञ्च वृद्धिस्तु न निवर्त्तते॥

किण्वं सुरावीजभूतद्रव्यं क्वथइति प्रसिद्धम्। अस्थि दन्तशङ्खादि। चर्म्म क्षणसारादेः कृत्तिः। हेतिरायुधम्। अत्र वृद्धिविशेषवत्तया पुष्पफलयोर्बोधनात् विरोधे तत्र दुर्लभे पुष्पफले विवक्षिते, अत्र तु सुलभे इति परीहारः।

विष्णुः।

किण्वकार्पाससूत्रचर्म्मवर्म्मायुधेष्टकाङ्गाराणामचयानुक्तानां द्विगुणा।

इति विवादरत्नाकरे परमवृद्धितरङ्गः।

तत्र नारदः ।

पण्यमूल्यं भृतिर्न्यासो दण्डो यच्चाभिहारिकम् ।
वृथा दानाक्षिकपणा वर्द्धन्ते नाविवक्षिताः ॥

पण्यमूल्यं विक्रय्यमूल्यं, भृतिर्वेतनं, न्यासो निक्षेपः । पण्यमूल्यन्यासयोश्च याचितादत्तान्ययोरुपादानं, तयोः पूर्वं वृद्धिविधानात् । दण्ड उत्तमसाहसादिरूपः । आभिहारिकं छलादिना गृहीतम् । वृथादानं धर्म्ममनुद्दिश्य दत्तमनर्पितम् । आक्षिकपणो द्यूतेन जितं धनम् । अविवक्षिताः उभाभ्यां अपरिभाषितवृद्धयः । यदि तूभाभ्यामेष्वपि वृद्धिः परिभाषिता स्यात् तदा स्यादेव ।

कात्यायनः ।

चर्म्मसस्यासवद्यूतपण्यमूल्येषु सर्व्वदा ।
स्त्रीशुल्के च न वृद्धिः स्यात् प्रातिभाव्यागतेषु च ॥

सस्यं धान्यस्तम्बः । आसवो मद्यविशेषः । स्त्रीशुल्कम् आसुरादिविवाहे देयद्रव्यं वेश्यादिदेयञ्च । प्रातिभाव्यागतं लग्नकस्य प्रातिभाव्यात् देयतां गतम् । धर्म्मादावकृता वृद्धिर्न भवतीति तात्पर्य्यम् ।

संवर्त्तः ।

न वृद्धिः स्त्रीधने लाभे निक्षेपे च तथास्थिते ।
सन्दिग्धे प्रातिभाव्ये च यदि न स्यात् स्वयं कृता ॥

स्त्रीधने षड्विधे परिभाषिते भर्त्रा गृहीते, लाभे वृद्धौ, निक्षेपे च तथास्थिते याचितादत्तान्यस्मिन्, देयमदेयं वेति

प्रथमं सन्देहास्पदे अर्थे देयतया च निश्चितेऽपि न वृद्धिः। यदि न स्यात् स्वयं कृतेति स्वयं कृता चेत्तेष्वपि देयैवेति।

व्यासः।

प्रातिभाव्यं भुक्तबन्धमगृहीतञ्च दित्सतः।
न वर्द्धते प्रपन्नस्य दमः शुल्कं प्रतिश्रुतम्॥

भुक्तं बन्धं गोप्यं यस्य धनस्य तत् भुक्तबन्धं, गोप्याधिभोगे न वृद्धिरिति। दित्सतः अधमर्णात् उत्तमर्णेनागृहीतधनम्। प्रपन्नस्य धनिकवशगतस्य यथोक्तमसाहसादिरूपो दमः। प्रतिश्रुतं यच्च शुल्कं दातुमङ्गीकृतं दित्सतो यदगृहीतं धनं न वर्द्धते इति।

अत्र विशेषमाह याज्ञवल्क्यः।

दीयमानं न गृह्णाति प्रयुक्तं यः स्वकं धनम्।
मध्यस्थस्थापितं तत् स्यात् वर्द्धते न ततः परम्॥

विष्णुः।

दीयमानं प्रयुक्तमर्थमुत्तमर्णस्यागृह्णतस्ततः परं न वर्द्धते, तथाध्युपभोगे वृद्ध्यभावः।

आध्युपभोगे गोप्याध्युपभोगे।

गौतमः।

भुक्ताधिर्न वर्द्धते दित्सतोऽवरुद्धस्य च।

भुक्तो गोप्याधिर्यस्य धनस्य, स न वर्द्धते। धनं दित्सतोऽधमर्णस्य वृद्धिर्न देया भवति। तथावरुद्धस्य गृहीतमृणं मोक्तुमवरुद्धस्याधमर्णस्यावरोधनदिनावधि वृद्धिर्न देया भवति।

इति विवादरत्नाकरे वृद्धिनिषेधतरङ्गः।

# अथाधिविधिः।

तत्र बृहस्पतिः।

आधिर्बन्धः समाख्यातः स च प्रोक्तश्चतुर्विधः।

जङ्गमः स्थावरश्चैव गोप्यो भोग्यस्तथैव च॥

याटच्छिकः सावधिश्च लेख्यारूढोऽथ साक्षिमान्॥

अत्र जङ्गमत्वस्थावरत्वादियुग्मचतुष्टयेन चतुर्विधत्वं स्वरूप-प्रकारकालप्रमाणैश्चतुष्टं तद्भेदेनाष्टत्वमिति कल्पतरुकारः।

नारदः।

अधिक्रियत इत्याधिः स विज्ञेयो द्विलक्षणः।

कृतकालोपनेयश्च यावद्देयोद्यतस्तथा॥

स पुनर्द्विविधः प्रोक्तो भोग्यो गोप्यस्तथैव च॥

उपचारस्तथैवास्य लाभहानिर्विपर्यये।

प्रमादाद्धनिनस्तद्वदाधौ विकृतिमागते॥

द्विलक्षणः स्थावरजङ्गमरूपः। कृतकालोपनेयः व्यवस्थापित-समये उपनेयः। यावद्देयोद्यतः यावता समयेन देयदानो-द्यतोऽधमर्णः, स एव दानसमयः, तेनावधिभूतसमयशून्य-इत्यर्थः। आभ्यां सावधिकत्वयाटच्छिकत्वे उक्ते। गोप्य-भोग्ये द्वे शाब्दे एव। लेख्याधिरूढत्वसाक्षिमत्त्वे चोद्दनीये। उपचारो लक्षणं, तथैव प्रकारभेदानुसारेणास्य कर्त्तव्यत्वम्। ततो धनिकप्रमादादविपर्य्यये आधिनाशे विकृतिं वा गते आधौ धनिकस्य लाभहानिर्भवति।

बृहस्पतिः।

अगाप्तलाभे च ऋणे तथा पूर्णेऽवधौ धनी।

यो भुङ्क्ते बन्धकं लोभात् न स लाभो भवेत् पुनः ॥
न्यासवत् परिपाल्योऽसौ हृद्धिर्नश्यति ह्रापिते ॥

अत्र गोप्याधिः शान्तलाभे ऋणे भोक्तव्य इति परिभाषितोऽशान्तलाभे ऋणे न भोक्तव्यः। भोग्याधिस्तु इयत्समयो नायमस्मिन् काले भोक्तव्य इति परिभाषितः पूर्णेऽवधौ भोक्तव्य इत्यर्थः। पारिजाते तु पूर्णे इत्यत्राकारप्रश्लेष आहतः; अवधिमपेक्ष्य व्यवस्थापितभोगे आधौ अवधावपूर्णे आधिर्न भोक्तव्य इत्युक्तम्। उभयमपि चैतद्युक्तम्। न्यासवत् परिपाल्योऽसाविति नासौ ह्रापनीयः, ह्रापिते तु हृद्धिर्नश्यतीत्यर्थः।

यदाह याज्ञवल्क्यः।

गोप्याधिभोगे नो वृद्धिः सोपकारे च ह्रापिते।

गोप्याधेस्ताम्रकटाहादेर्भोगेन भोक्तुर्धनिकस्य न वृद्धिर्लभ्या। सोपकारे च बलीवर्दादौ ह्रापिते सम्यग्व्यवहाराक्षमतां नीते धनिकदोषेण, न नेतुर्धनिकस्य वृद्धिर्लभ्या भवतीत्यर्थः।

मनुः।

नत्वेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयात्।

सोपकारे भुक्ते।

तथा।

यः स्वामिनाननुज्ञातमाधिं भुङ्क्तेऽविचक्षणः।
तेनार्द्धवृद्धिर्मोक्तव्या तस्य भोगस्य निष्कृतिः ॥

तथा ।

न भोक्तव्यो बलादाधिर्भुञ्जानो वृद्धिमुत्सृजेत् ।
मूल्येन तोषयेदेनमाधिस्तेनोऽन्यथा भवेत् ॥

अत्र यदाननुज्ञातमाधिं धनिको भुङ्क्ते तदार्द्धवृद्धित्यागः। यदा तु निषिध्यमानो बलाद्भुङ्क्ते, तदा सर्व्ववृद्धित्यागः। यदा तु वृद्धिं न त्यजति, तदा यावत् तेन भुक्तं तावद्भोगमूल्याकलनया मूल्येन एनमाधातारं भोक्ता तोषयेत् ।

यदाह कात्यायनः ।

अकाममननुज्ञातमाधिं यः कर्म्म कारयेत् ।
भोक्ता कर्म्मफलं दाप्यो वृद्धिं वा लभते न सः ॥

अकामं कर्म्म कर्त्तुमिच्छाशून्यं स्वामिना कर्म्मण्यननुमतम् आधिं दासादिकं यो भोक्ता कर्म्म कारयेत् स कर्म्मफलं दाप्यः। वृद्धिं वा न लभते इत्यर्थः।

विष्णुः ।

आध्युपभोगे वृद्ध्यभावो दैवराजोपघातादृते विनष्टमाधिमुत्तमर्णो दद्यात् ।

नारदः ।

विनष्टे मूलहानिः स्याद्दैवराजकृतादृते ।

दैवकृतमग्न्युदकादिप्रयत्नानपेक्षम्। राजकृतं राजप्रयत्नापेक्षम्। अत्रापि स्वापराधं विनाकृतत्वं विवक्षितम्। आधेरदानपक्षे मूलहानिरतो न विष्णूक्तविरोधः।

बृहस्पतिः।

भुक्ते चासारतां प्राप्ते मूलहानिः प्रजायते।
बहुमूल्यं यत्र नष्टस्थिकं तत्र शोधयेत्॥

असारतां प्राप्ते सर्व्वथा व्यवहाराक्षमतां नीते। बहुमूल्यं लभ्यधनापेक्षया।

व्यासः।

यद्दीलदोषात् नष्टश्चेत् धनं हेमादिकं भवेत्।
ऋणं सलाभं संशोध्य तन्मूल्यं दाप्यते धनी॥

याज्ञवल्क्यः।

नष्टो देयो विनष्टश्च राजदैवकृतादृते।

नष्टो भग्नत्वचौरितत्वादिना सर्व्वथा व्यवहाराक्षमतां नीतः। विनष्टो नामात्यन्तनाशं प्राप्तः। इमौ च द्वावपि तन्मूल्यद्वारा अन्यथा वा देयौ।

कात्यायनः।

यथाधिं कर्म्म कुर्व्वाणं वाचा दण्डेन कर्म्मभिः।
पीडयेद्भर्त्सयेच्चैव प्राप्नुयात् पूर्व्वसाहसम्॥

एतत् वाक्यं प्रकरणादेवंविधभर्त्सनादौ तत्कर्त्तुर्वृद्धिग्रहणाभावमेवाह, प्रसङ्गाच्च पूर्व्वसाहसाभिधानमिह।

बृहस्पतिः।

राजदैवोपघातेन यत्राधिर्नाशमाप्नुयात्।
तत्रान्यं दापयेद्बन्धं सोदयं वा धनं ऋणी॥

नाशमाप्नुयात् सर्व्वथा व्यवहाराक्षमतां गच्छेत्।

व्यासः।

राजदैवोपघातेषु न दोषो धनिनः क्वचित्।
ऋणं दाप्यं तु तत्राधि बन्धं वान्यदृणी सदा॥

नारदः।

रक्ष्यमाणोऽपि चेदाधिः कालेनेयादसारताम्।
आधिरन्योऽथवा कार्य्यो देयं वा धनिने धनम्॥

याज्ञवल्क्यः।

आधेः स्वीकरणात् सिद्धी रक्ष्यमाणोऽप्यसारताम्।
यातश्चेदन्य आधेयो धनभाग्वा धनी भवेत्॥

आधेर्गोप्यस्य भोग्यस्य वा स्वीकरणात् स्वगृहेऽवस्थापनभोगादिलक्षणादाधित्वं सिध्यति, न तु लेख्यसाक्ष्यादिमात्रेणेत्यर्थः।

कात्यायनः।

न चेत् धनिकदोषेण निष्पतेद्वा म्रियेत वा।
आधिमन्यं स दाप्यः स्यादृणान्मुच्येत नर्णिकः॥

धनिकदोषं विनैव यदाधिर्व्यवहारायोग्यो भवति, तदा तत्समानमाध्यन्तरमधमर्णेन देयं, न तु विनैव दानमृणादसौ मुक्तो भवतीत्यर्थः। यत्तु बन्धकितगवादौ दैवान्नष्टे धनिकस्य धनं याति, आधातुराधीकृतगवादिकं धनं यातीति केऽपि वदन्ति, तत्राविगीतशिष्टाचार एव मूलम्। तत्र च भोग्याधिर्विषय इति मन्तव्यम्।

याज्ञवल्क्यः।

स्रोतसापहृते क्षेत्रे राज्ञा चैवापहारिते।

आधिरन्यः प्रदातव्यो देयं वा धनिने धनम् ॥

आधिरन्य इति चेत्तरूप एवाधिर्देयः। यदि तन्न ददाति तदा सवृद्धिकं धनं अधमर्णेन देयम्।

तदाह कात्यायनः।

आधीकृतन्तु यत् किञ्चित् विनष्टं राजदैवतः।
तद्दणं सोदयं दाप्यो धनिनामधमर्णिकः॥

बृहस्पतिः।

बन्धद्दस्तस्य यद्देयं चित्रेण चरितेन वा।
अदत्तेऽर्थेऽखिलं बन्धं नाकामो दाप्यते क्वचित्॥

अस्यार्थः,—गृहीतबन्धकस्य उत्तमर्णस्य कृते यदाधिधनं देयं तस्मिन् समस्ते दत्त एव परं बहुमूल्यमपि बन्धकं उत्तमर्णेन मोक्तव्यम्। कियत् बन्धकधनं गृहाण, बहुमूल्यं बन्धकं समर्पय, शेषबन्धकधनदाने तव पत्रिकां ददामि साक्षिणं वा करोमीत्युक्तेऽप्येवं चित्रचरितादिना प्रकारेण राज्ञा बन्धकं न दापयितव्य इति।

तथा।

धनं मूलीकृतं दत्त्वा यदाधिं प्रार्थयेदृणी।
तदैव तस्य मोक्तव्यस्त्वन्यथा दोषभाग्धनी॥

एतच्चावधिविरहितभोग्याधिविषयम्।

याज्ञवल्क्यः।

उपस्थितस्य मोक्तव्य आधिस्तेनोऽन्यथा भवेत्।
प्रयोजकेऽसति धनं कुले न्यस्याधिमाप्नुयात्॥

आधित्याजनार्योपस्थितस्याधमर्णस्य धनिना धनं गृहीत्वा आधिर्मोक्तव्यः। अमोचने तु चौरवत् भवेत्। प्रयोजके आधिधनप्रयोक्तरि असन्निहिते तस्य कुले पुत्रादौ आधिधनं दत्त्वा अधमर्ण आधिं गृह्णीयादित्यर्थः। हलायुधस्तु यदि ग्रामादिकमाधिं कृत्वा द्वितीयेऽह्नि आधिकपर्द्दकम् उत्तमर्णायाधमर्णो दातुमुपस्थितः, तदा तेन तद्धनं गृहीत्वा तस्याधिर्मोक्तव्यः न तु वृद्धिलोभात् स्वयमेव धर्त्तव्यः धारणे चौरवत् ग्राह्य इति पूर्व्वार्द्धं व्याख्याय अत्रैव धनं मूलीकृतमित्यादि वृहस्पतिवाक्यमवतारितवानिति।

यदोत्तमर्णोऽस्य धनसमर्पणयोग्यो न भवत्यधमर्णस्तु विक्रयेण अन्यथा वा ऋणं कृत्वाधिं मोचयितुमिच्छति, तदा किं करणीयमित्यपेक्षायाम् याज्ञवल्क्यः।

तत्कालकृतमूल्यो वा तत्र तिष्ठेदवृद्धिकः।

तत्राधिमोचनसमये यदाधेर्मूल्यं तदवधार्य अदत्तेऽपि धने आधिरुत्तमर्णभोग एव स्थाप्यः। किन्तु ततः परमवृद्धिकं तद् धनं न वर्द्धते यावद्धनं गृहीत्वोत्तमर्णस्तत्कुल्यो वा प्राप्तः संविधाय तमाधिं मुञ्चति।

आधिमुत्तमर्णो दद्यादित्यनुवृत्तौ विष्णुः।

अन्यवृद्धौ प्रविष्टायाम्।

याज्ञवल्क्यः।

यदा तु द्विगुणीभूतमृणमाधौ तदा खलु।
मोच्य आधिस्तदुत्पन्ने प्रविष्टे द्विगुणे धने॥

तदुत्पन्नशस्यादिद्वारा प्रविष्टे द्विगुणे धने त्वया आधिर्मोक्तव्य इत्युक्त्वा य आधिः कृतः, तद्विषयमिदम्। एतच्च वृद्धौ भवन्त्यां, अन्यथा तु मूलमात्रम्। अयमेव च लोके चयाधिरित्युच्यते।

अत्रैव विष्णुः।

गृहीतधनप्रवेशार्थमेव यत् स्थावरं दत्तं तत् गृहीतधनप्रवेशे दद्यात्।

तथा च बृहस्पतिः।

क्षेत्रादिकं यदा भुक्तमुत्पन्नमधिकं ततः।
मूलोदयं प्रविष्टञ्चेत्तदाधिं प्राप्नुयादृणी॥

अधिकं सवृद्धिकम्, एतदेवाग्रिमखण्डे मूलोदयमित्युक्तम्। समाहारद्वन्द्वः।

पुनः स एव।

परिभाष्य यदा क्षेत्रं प्रदद्यात् धनिके ऋणी।
त्वयैतत् प्राप्तलाभेऽर्थे भोक्तव्यमिति निश्चितः॥
प्रविष्टे सोदये द्रव्ये प्रदातव्यं पुनर्मम।
कुसीदादिविधिस्त्वेष धर्म्मज्ञः सम्परिकीर्त्तितः॥

निश्चितः कृतनिश्चयः। प्राप्तलाभेऽर्थे परिसमाप्तलाभे निमित्तीभूते सति सवृद्धिकधनलाभं यावत् भोक्तव्यमित्यर्थः।

याज्ञवल्क्यः।

आधिः प्रणश्येत् द्विगुणे धने यदि न मोक्ष्यते।
काले कालकृतो नश्येत् फलभोग्यो न नश्यति॥

अत्र कल्पतरुः। आधिः प्रणश्येदिति द्विगुणीभूते धने यद्याधिरधमर्णेन न मोच्यते, तदा नश्यति, धनप्रयोक्तुः स्वो भवति। कालकृतः कृतकालः, तेन यः कालोऽवधिः, तस्मिन् प्राप्ते यदि न मोच्यते, तदा नश्यतीत्यर्थः। यदाह हलायुधः। अस्यार्थः। यदि गोप्याधिरधमर्णेन द्विगुणीभूते धने न मोच्यते, तदोत्तमर्णस्यैव तत्र स्वत्वमुत्पद्यते, अधमर्णस्य तु स्वत्वं नश्यति। कालकृतस्तु गोप्यो भोग्यो वा यद्येतावति काले अहमेनं न मोचयामि तदा तवैव स्वीभवति इति परिभाषितः। स धन-द्वैगुण्यादर्व्वाक् ऊर्द्ध्वं वा परिभाषितकाले नश्यत्येवाधमर्ण-स्येति। अनयोश्चाधिभावे गोप्याधौ वा द्विगुणीभूते कपर्द्दके सति धनिकस्यैव स्वत्वं जायते इत्यापाततोऽभिमतं यद्यपि लक्ष्यते, तथापि कांस्यादौ परिभाष्य बन्धकिते आधातुरनुमतिं विना धनिकस्वत्वोचितव्यवहारस्य विशेषामदर्शनादन्यथैव तद्व्याख्येयम्। आधिर्द्विगुणे धने यदि मया न मोच्यते, तदा तवैवायमिति परिभाषितः, सः प्रणश्येत् द्विगुणे धने यदि न मोच्यते अत्र हेतुमन्निगदः। काले कालकृतो नश्येत् कालकृतः कृतकालः कृतः कालविशेषोऽवधिर्यस्य स्वस्वत्वध्वंसे उत्तमर्णस्वत्वे च सः काले तादृशि प्राप्ते नश्येत्। यतः यत्र यथा स्वामी स्वे द्रव्ये स्वस्वत्वं परस्वत्वं वा नियमयति, तत्र तथैव तत् स्यादित्युत्सर्गादित्याशयः। फलभोग्यो न नश्यतीति फलभोग्यस्तु भोग्याधिरकृतकालः संवत्सरसहस्रेणापि न नश्यतीति।

अत्रैव ज्ञातकाले पुनरपरदशदिनानि शास्त्रीयमवधिमाह बृहस्पतिः ।

पूर्णावधौ शान्तलाभे बन्धे स्वामी धनी भवेत् ।
अनिर्गते दशाहे तु ऋणी मोचितुमर्हति ॥

न तु परिभाषितमेवेदम् द्विगुणधनानन्तरदशदिनावधिलङ्घनेन बोध्यते व्यवहारविरोधादेव ।

एवं व्यासोऽपि एवंविधे शास्त्रीयं द्विसप्ताहमवधिमाह ।

हिरण्ये द्विगुणीभूते पूर्णे काले कृतेऽवधौ ।
बन्धकस्य धनी स्वामी द्विसप्ताहं प्रतीक्षते ॥
फलभोग्यं पूर्णकालं दत्त्वा द्रव्यन्तु सामकम् ॥

समकमेव सामकं कलाशून्यमित्यर्थः । अतोऽन्तरा धनं दत्त्वा ऋणी बन्धमवाप्नुयात् । अत्र दिनदशकद्विसप्ताहयोः सुस्थितासुस्थिताधमर्णावादाय व्यवस्था । यदि त्वपरिभाष्यैव विश्वासार्थं बन्धकं समर्प्य ऋणं गृह्यते, तदा बन्धकशून्यऋणवत् ऋणोद्ग्राहणप्रकरणोक्ता एव धनग्रहणोपायप्रकाराः । बन्धकस्तु विश्वासार्थमाधात्रा समर्पितो रक्षणीयो धनिकेन । प्राप्ते सर्व्वकपर्दके तस्मै समर्पणीय इति मन्तव्यम् ।

मनुः ।

न चाधेः कालसंरोधात् निसर्गोऽस्ति न विक्रयः ।

कालसंरोधश्चिरकालावस्थानं, निसर्गोऽन्यत्राधीकरणं । विक्रयः स्वस्वत्वव्युदासहेतुक्रिया । तेन चिरकालावस्थितोऽपि गृहीताधिः स्वयं यावति धने गृहीतस्तदधिकधनेऽपि अस्मिन् उत्तम-

येन नाधीकर्त्तव्यः। न च तस्य स्वीयत्वभ्रमात् दानविक्रयात्मक-परिवर्त्ताः करणीया इत्यर्थः। न्यायसाम्यादक्षतव्यवस्थगोप्याधिविषयत्वाप्येतस्य, अतो भोग्याधिविषयमेतदिति कल्पतरौ प्रायो वादः। हलायुधस्तु निसर्गपदेन दानमाह, तन्मते प्रत्याधिनिषेधो नानेन। कश्चित्तु स्वयमन्यस्मिन् कृत आधिः कालसंरोधादवधिकरणेन अधमर्णेनान्यत्राधिः कर्त्तव्यो न चान्यत्र विक्रेतव्य इत्यस्यार्थमाह, तन्न, एतत्पूर्व्वखण्डे नष्टेवाधौ सोपकारे कौसीदीं वृद्धिमाप्नुयादित्यत्रावश्य कर्त्तृतया अन्वितस्योत्तमर्णस्यैव प्रकृतत्वात्। अतएव कल्पतरु-पारिजात मिताक्षरासूत्तमर्णेन न कर्त्तव्य इति पूरणं कृतम्। आधानविक्रययोः फलभेदेन विरोधात्। स्वत्वजनकस्य विक्रयस्य कालसंरोधेन निषेद्धुमशक्यत्वात् आधानांशे कालसंरोधस्य फलविरोधमुखेन निषेधकत्वेऽपि फलवैधर्म्यप्रसङ्गात्। अनिर्मुक्तस्य चैवाधेर्न दानं न च विक्रय इति वाक्यस्य अमूलकतया निबन्धृभिरलिखनाद्यानादेयत्वात्। आधिः प्रणश्येत् द्विगुणे धने इत्यादि याज्ञवल्क्यवचनं परिभाविताधौ, न चाधेः कालसंरोधादिति वाक्यञ्चापरिभाविताधाविति न विरोधश्चापि।

बृहस्पतिः।

यत्राहितं गृहञ्चैव भोगेन प्रकर्षान्वितम्।
तत्रर्णी नाप्नुयाद्द्रव्यं धनी चैव ऋणं तथा॥
पूर्णे प्रकर्षे तत् स्वाम्यमुभयोरपि कीर्त्तितम्।
अपूर्णे तु प्रकुर्य्यातां परस्परमतेन तौ॥

यत्र गृहक्षेत्रं भोगी भोगनिमित्तं आहितं आधीकृतं न प्रकर्षान्वितं प्रकर्षेण पूर्णेनावधिनान्वितं न भवति तत्र ऋणी नाप्नुयात् धनं धनी चैव ऋणं नाप्नोति। पूर्णे प्रकर्षे अवधौ तत्र स्वाम्य-* मुभयोरपि ऋणिकस्य धनग्रहणे, धनिकस्य ऋणग्रहणे। अपूर्णे तु परम्परानुमत्या स्वातन्त्र्यमित्यर्थः।

गोप्याधिर्द्विगुणादूर्द्धं कृतकालस्तथापरः।
श्रावयित्वा ऋणिकुले भोक्तव्यः समनन्तरम्॥

अकृतकालो गोप्याधिः द्विगुणादूर्द्धं कृतकालश्च पूर्णेऽवधौ ऋणिकुले श्रावयित्वा भोक्तव्यः। अयञ्च गोप्याधावकृतकाले स्वत्वमन्तरेणापि भोगविधिः।

तथा।

नष्टे मृते वा ऋणिके धनी पत्रं प्रदर्शयेत्।
तत्कालावधिसंयुक्तं स्थानलेख्यञ्च कारयेत्॥

यदा त्वधमर्णः पलायितो मृतो वा भवेत्, ऋणिकुले च श्रावणमशक्यं, तदा राजस्थाने धनी पत्रं प्रदर्शयेत्। तत्कालावधिसंयुक्तं तत्र लेख्यञ्च कारयेत् निबन्धं कारयेदित्यर्थः। एवञ्चाधिं भुञ्जानस्य न दोषः।

याज्ञवल्क्यः।

चरित्रं बन्धककृतं सवृद्धा दापयेद्धनम्।

---

* तत्स्वाम्यमिति वा पाठः।

चरित्रं गङ्गास्नानादिकं यदि सम्यक् कृतं, तदा राज सवृद्धिकं धनं दापयेत् ।*

कात्यायनः ।

आधाता यत्र नष्टः स्याद्धनी बन्धं निवेदयेत् ।
राज्ञस्ततः समाख्यातो विक्रेय इति धारणा ।
सवृद्धिकं गृहीत्वा तच्छेषं राजन्यथार्पयेत् ॥

यदा आधाता अन्यो वा तदधिकारी न भवति, तदा तमाधिं द्विगुणे ऋणधने सति विक्रीय स्वलभ्यं द्विगुणं धनं गृहीत्वा उत्तमर्णस्तन्मूल्यशेषं राजन्यर्पयेदित्यर्थः ।

याज्ञवल्क्यः ।

विना धारणकाद्वापि विक्रीणीत ससाक्षिकम् ।

धारणकादधमर्णात् ।

इति विवादरत्नाकरे आधितरङ्गः ।

---

## अथाधिसिद्धिः ।

तत्र व्यासः ।

आधयो द्विविधाः प्रोक्ताः स्थावरा जङ्गमास्तथा ।
सिद्धिरस्योभयस्यापि भोगो यद्यस्ति नान्यथा ॥

---

* तदाधातारं सवृद्धिकं धनं दापयेदिति पाठान्तरम् ।

हहस्पतिः।

न भुङ्क्ते यः समाधानं नादद्यान्न निवेदयेत्।
प्रमीतसाचिकर्णिकं तस्य लेख्यमपार्थकम्॥

अत्र ययातथेत्यध्याहरणीयम्। प्रमीतसाचिकर्णिकं साचिकर्णिकशून्यं, तेन यथा साचिकर्णिकौ विना लिखितमसाचिकर्णिकं लेख्यमपार्थकं भवति, तथा यो न भुङ्क्ते समाधानं आधिं तं नात्मीयं करोति न च तमाधिं गृहीतमन्यस्मै बोधयति तस्य सम्पूर्णमपि लेख्यं साध्यांशे न प्रमाणमित्यर्थः। अत्र च न भुङ्क्ते इति भोग्याधौ द्रष्टव्यं, नादद्यादिति गोप्याधौ द्रष्टव्यं, न निवेदयेदित्युभयत्र। एतच्च प्रायिकतया भुक्ताभुक्तयोर्विभावनाभावेऽपि भोग्यगोप्ययोराधिलस्यैर्थ्यात्।

तथा।

गृहवार्थ्यापणं धान्यं पशुस्त्रीवाहनानि च।
उपेक्षया विनश्यन्ति यान्ति चासारतां तथा॥

आपणः पण्यविक्रयस्थानम्। गृहादीन्याधीकृतानि यदि आधिग्रहीतृदोषात् विनश्यन्ति असारतां वा यान्ति तदा आधित्वमेव तेषां नश्यतीत्यर्थः। तेन तदाधिदोषेण आधिकर्त्रा आध्यन्तरादि न दातव्यमिति तात्पर्य्यम्।

कात्यायनः।

आधिमेकं द्वयोर्यस्तु कुर्य्यात् का प्रतिपद्भवेत्।
द्वयोः पूर्व्वतरं ग्राह्यमाधाता चौरदण्डभाक्॥

प्रतिपत् व्यवस्था, पूर्व्वमाधानं ग्राह्यमित्यर्थः।

विष्णुः ।

गोचर्म्ममात्रामपि भूमिमन्यस्याधीकृतां तस्मादनिर्मोच्य अन्यस्य यः प्रयच्छेत्, स वध्यः, अनाश्रित् षोडशसुवर्णान् दण्ड्यः ।

अनेन चाधिरनिर्मुक्तो येन गृहीतस्तस्याधिर्न सिद्ध्यति, येन पूर्व्वं गृहीतस्तस्य सिद्ध्यति । अनिर्मुक्तमाधिमन्यत्र कुर्व्वतो वध्यत्वदण्डत्वे भवत इत्युक्तम् ।

गोचर्म्मपदार्थे विष्णुरेव ।

एकोऽश्नीयाद्यदुत्पन्नं नरः संवत्सरं फलम् ।
गोचर्म्ममात्रा सा क्षोणी स्तोका वा यदि वा बहुः ॥

तथा ।

ययोर्निक्षिप्त आधिस्तौ विवदेतां यदा नरौ ।
यस्य भुक्तिर्भुवस्तस्य बलात्कारं विना कृता ॥

भुक्तिर्बलात्कारं विना कृता भुवो भुक्तिरित्यन्वयः । तस्य सा भूमिरिति शेषः । हलायुधेन तु यस्य भुक्तिर्जयस्तस्येति पठितं, तत्र सुगमतैव ।

बृहस्पतिः ।

क्षेत्रमेकं द्वयोर्बन्धे दत्तं यत् समकालिकम् ।
येन भुक्तं भवेत् पूर्व्वं तस्य तत् सिद्धिमाप्नुयात् ॥

समकालिकं पूर्व्वापरभूततया अप्रकाशावधारणम् । आभ्यां माकाभ्यां पूर्व्वापरभूततया अप्रकाशावधारणे आधित्वाभिमत-

द्वये,* यस्य बलात्कारशून्या भुक्तिस्तस्याधित्वं भवतीत्युक्तम्।
यत्र तु द्वयोरपि न तादृशो भोगस्तत्राह।

तुल्यकालोपस्थितयोर्द्वयोरपि समं भवेत्।
प्रदाने विक्रये चैव विधिः स परिकीर्त्तितः॥

तथा।

आधानं विक्रयो दानं साचिलेख्यकृतं यदा।
एकक्रियानिबन्धेन लेख्यं तत्रापहारकम्॥

यत्रैका क्रिया साक्षिमती, अन्या च साचिलेख्यवती, तत्र लेख्यं साक्षिमत् अपहारकं बलवत् आधित्वसाधकमिति यावत्। एकक्रियानिबन्धेन एकस्य पुंसः क्रियाया निबन्धेन लेख्ये निवेशेन हेतुनेत्यर्थः। हलायुधस्तु यत्राधानक्रिया विक्रयक्रिया वा साक्ष्यादिगुणवल्लेख्यवती, तत्र एकक्रियानिबन्धेन एकेन श्रेष्ठेन क्रियाया निबन्धेन लेख्ये निवेशेन लेख्यमपहारकं भोगाभावमात्रेणाधातुर्विमर्त्तेर्बाधकमित्याह। अत्र च न भुङ्क्ते यः स्वमाधानमित्यादिना विरोधः।

तथा।

यस्तु सर्वमनुद्दिश्य प्राक् पयाग्रामचिह्नितम्।
आदध्यात्तत् कथं न स्याच्चिह्नितं बलवत्तरम्॥
मर्य्यादाचिह्नितं चेत् गृहं वापि यदा भवेत्।
ग्रामादयश्च लिख्यन्ते तदा सिद्धिमवाप्नुयात्॥

---

* आधित्वाभिमतधने इति पाठान्तरम्।

अनिर्दिष्टञ्च निर्दिष्टमेकत्र च विशेषितम् ।

विशेषनिखितं ग्राह्य इति कात्यायनोऽब्रवीत् ॥

एभिर्वाक्यैर्यत्र सामान्येन रूपेणैकमेकत्राधीकृतम् अन्यस्मिंश्च तदेव नामचिह्नितं तत्र विरोधे सति नामादिचिह्नितमाधिलं भजते इत्युक्तम् ।

तथा ।

यो विद्यमानं स्वधनमनिर्दिष्टस्वरूपकम् ।

आकाशभूतमादध्यादादिष्टं नैव तद्भवेत् ॥

योऽविद्यमानमनिर्दिष्टस्वरूपमेवाकाशभूतं हस्ते निधाय आदध्यात् न तदादिष्टमाहितं भवतीत्यर्थः एतदेव स्पष्टीकृतम् । यद्यदुत्तदास्य विद्येत तदादिष्टं विनिर्दिशेत् इति । एतच्चा-कायार्थी क्वचित् व्यक्तक्रियमाणे आधिलं विनापि व्यवस्था-विशेषात् भोगदानम् ।

तथा ।

बलादकामं यत्राधिमनिर्दिष्टं प्रवेशयेत् ।

प्राप्नुयात् साहसं पूर्व्वमाधाता चाधिमाप्नुयात् ॥

यत्राहितक्षेत्रादेरधिकमपि क्षेत्रादि बलादार्थी प्रवेश्य धनिको भुङ्क्ते तत्रासौ दण्ड्यः । आधाता च देयमृणमदत्त्वैवाधीकृतं क्षेत्रादि लभते इत्यर्थः ।

इति विवादरत्नाकरे आधिविवादतरङ्गः ।

## अथ प्रतिभूविधिः।

तत्र कात्यायनः।

न स्वामी न च वै शत्रुः स्वामिनाधिकृतस्तथा।
निरुद्धो दण्डितश्चैव संशयस्थश्च न क्वचित्॥
नैव रिक्थी न मित्रञ्च न चैवान्तेनिवासिनः।
नैव राजनियुक्ताश्च ये च प्रव्रजिता नराः॥
नाशक्तो धनिने दातुं दण्डं राज्ञे च तत्समम्।
नाविश्वासी* ग्रहीतव्यः प्रतिभूः स्वक्रियां प्रति॥

स्वाम्यत्र अनभिभाव्यप्रभुः। संशयस्थ इत्यासन्नमरणविषयः। अभिशस्त इति केचित्। रिक्थी धनिकेन ऋणिकेन वा साधारणरिक्थः। अन्तेनिवासिनः शिष्याः। मिताक्षराकारेण तु अत्यन्तवासिन इति पठित्वा नैष्ठिकब्रह्मचारिण इति विवृतम्। दण्डं राज्ञे च तत्समं दातुमशक्त इत्यनुषङ्गः। एतच्चादानपक्षे प्राप्तराजदण्डाभिप्रायं यस्मिन् मृते धनप्राप्तिविश्वासो न भवति स प्रतिभूर्न ग्राह्य इत्येतत्तात्पर्य्यकचेदमिति मन्तव्यम्।

याज्ञवल्क्यः।

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु स्मृतम्॥

विभागात् पूर्व्वं भ्रातॄणां दम्पत्योश्च पितापुत्रयोश्च प्रातिभाव्य-

* नाविश्वास्यः इति पाठान्तरम्।

ऋणिधनिव्यवहारः साक्ष्यञ्च न युक्तमित्यर्थः ।

अत्रैव नारदः ।

साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव च ।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम् ॥

प्रातिभाव्यादिकं न कुर्य्युरित्यर्थः ।

वृहस्पतिः ।

दर्शने प्रत्यये दाने ऋणिद्रव्यार्पणे तथा ।
चतुःप्रकारः प्रतिभूः शास्त्रे दृष्टो मनीषिभिः ॥
आद्यैकोदर्शयाम्येनः साधुरेषोऽपरोऽब्रवीत् ।
दाताहमेतद्द्रविणमर्पयाम्यपरो वदेत् ॥
आद्यौ तु वितथे दाप्यौ तत्कालावेदितं धनम् ।
उत्तरौ तु विसंवादे, तौ विना तत्सुतावपि ॥

ऋणिद्रव्यार्पणे ऋणिद्रव्यस्य धनिकायार्पणे । आद्यौ तु वितथे दाप्यौ, वितथे दर्शनाकरणे उपदर्शितसाधुत्वभङ्गे च तत्काला-वेदितं धनं दाप्यौ । उत्तरौ तु विसंवादे, स्वरसेन स्वयं दान-विरहे अनर्पणे वा दाप्यौ । तौ विना दातृत्वार्पकत्वाभ्यां विना तत्सुतावपि दाप्यौ ।

याज्ञवल्क्यः ।

दर्शनप्रतिभूर्यत्र मृतः प्रात्ययिकोऽपि वा ।
न तत्पुत्रा ऋणं दद्युर्दद्युर्दानाय ये स्थिताः ॥

---

* दर्शयामीत्येति पाठान्तरम् ।

दानाय ये स्थिता दाद्वलग्नकादिसुता इत्यर्थः ।

कात्यायनः ।

दानोपस्थानविश्वासविवादप्रपथाय च ।
लग्नकं दापयेद्दैयं* यथायोगं विपर्य्यये ॥

दानाय ऋणिकोपस्थानाय† विश्वासाय धनिकेन समं विवादाय प्रपथप्रवर्त्तनाय च यो लग्नकः, स तदसम्पादयन् धनिकस्य धनं दाप्य इत्यर्थः ।

नारदः ।

उपस्थानाय दानाय प्रत्ययाय तथैव च ।
त्रिविधः प्रतिभूर्दृष्टस्त्रिष्वेवार्थेषु सूरिभिः ॥
ऋणिष्वप्रतिकुर्व्वत्सु प्रत्ययेऽपि विरोधिनि ।
प्रतिभूस्तदृणं दद्यादनुपस्थापयंस्तथा ॥

ऋणिषु अप्रतिकुर्व्वत्सु ऋणमददत्सु दानप्रतिभूस्तदृणं दद्यात् । प्रत्ययप्रतिभूः साधुत्वव्यभिचारे, दर्शनप्रतिभूर्दर्शनाकरणे तदृणं दद्यादित्यर्थः । इदञ्च वाक्यं लक्ष्मीधरायलिखितमपि हलायुधनिबन्धे दर्शनात् लिखितम् ।

कात्यायनः ।

दर्शनप्रतिभूर्यत्र काले देशे न दर्शयेत् ।
निबन्धमावहेत्तत्र राजदैवकृतादृते ॥

---

* देवेति पाठान्तरम् ।

† धारकोपस्थानायेति पाठान्तरम् ।

काले व्यतीते प्रतिभूर्यदि तन्नैव दर्शयेत् ।
निबन्धं दापयेत्तत्र प्रेते चैवं विधिः स्मृतः ॥

दर्शनप्रतिभूर्यश्च देशे काले वा दर्शनं कारयितुं स्वीकृतवान् तत्र राजदैवोपघातमन्तरेणादर्शयन् लिखितनिबन्धरूपं धनिकस्य दद्यात् । दैवराजोपघाते तु उपघातकालेऽतीते यो न दर्शयेत् सोऽपि निबन्धं दद्यात् । प्रेते चैवं विधिः स्मृतः, प्रेतेऽप्यधमर्णे दर्शनप्रतिभूर्धनं दद्यादित्यर्थः ।

तथा ।

देशकालौ क्रियाकारे यद्यल्पमपि लङ्घयेत् ।
*साधितं प्रतिभूर्दाप्यस्तमर्थं साधिते विधिः ॥*

क्रियाकारे दिव्यकृतौ यौ देशकालौ, तौ यदि शपथप्रतिभूरल्पमपि लङ्घयेत् तत्र दिव्यं न प्रवर्त्तयेत्, तदासावर्थः प्रतिभूदेयत्वेन साधितो भवतीति तमर्थं प्रतिभूर्दाप्यः । साधिते अयमेव विधिः प्रकारो मत इत्यर्थः ।

तथा ।

पराश्रयमभव्यं वाप्यसत्संसर्गमेव वा ।
अपकारक्षमो यस्तु द्वेषात्कर्त्तुमनाः क्वचित् ॥
कारयेत्प्रत्ययायैव तद्भयाल्लग्नकं तथा ।
विसंवादेऽथ भीतस्य दाप्यते प्रतिभूस्तथा ॥

पराश्रयं प्रभुसमाश्रयम् अभव्यमनिष्टम् असत्संसर्गं चौरादिसंसर्गं योऽपकारक्षमः कर्त्तुमर्हति, तद्भयात् प्रत्ययाय विश्वासाय लग्नकं कारयेदिति पूर्व्वखण्डार्थः । विसंवादे

व्यभिचारे शीलस्य चरितस्य प्रत्ययाय दाप्यते च प्रतिभूरित्यु-त्तरखण्डार्थः । वस्तुतस्तु यत्र यत्राविश्वाससम्भवस्तत्र तत्र विश्वासाय राज्ञा प्रतिभूर्दाप्य इत्येवानुगतम् ।

मनुः ।

दानप्रतिभुवि प्रेते दायादानपि दापयेत् ।

दानप्रतिभुवि दास्यामीति सङ्कल्पवति प्रतिभुवीत्यर्थः । तौ विना तत्सुतावपीति वचनाद्दायादाः पुत्राः ।

कात्यायनः ।

गृहीत्वा बन्धकं यत्र दर्शनस्य स्थितोऽभवत् ।

विभाव्य वादिना तत्र दाप्यः स्यात्तदृणं सुत. ॥

बन्धकं गृहीत्वा दर्शनप्रतिभूरयमभूदिति विभाव्य तस्मिन् मृते धनिकाय दर्शनप्रतिभूपुत्रस्तदृणं दाप्य इत्यर्थः ।

मनुः ।

अदातरि पुनर्दाता विज्ञातप्रकृतावृणम् ।

पश्चात्प्रतिभुवि प्रेते परीप्सेत्केन हेतुना ॥

निरादिष्टधनश्चेत्तु प्रतिभूः स्यादलन्धनः ।

स्वधनादेव तद्दद्यान्निरादिष्ट इति स्थितिः ॥

अदातरि दानप्रतिभूव्यतिरिक्ते प्रतिभुवि विज्ञातप्रकृतौ बन्धकं गृहीत्वा प्रतिभूरभूदिति विज्ञातस्वरूपे प्रेते मृते दाता ऋण-दाता पश्चात् ऋणं केन हेतुना परीप्सेत् साधयितुमिच्छेदिति प्रश्नः, अत्रोत्तरं निरादिष्टधन इत्यादि । निरादिष्टं विसर्जितं धनं येन प्रतिभुवे खादकेन सः, तथा स चेदलन्धनः प्राप्तधनो

भवेत् तदा तस्मिन् मृते निरादिष्टो निरादिष्टधनपुत्रः स्वधनादेव तदृणं दद्यादित्यर्थः। निरादिष्टपदञ्च पुत्रे लाक्षणिकम्। हलायुधनिबन्धे तु बन्धकमगृहीत्वा लग्नको वृत्त इति विज्ञाता प्रकृतिर्यस्येति विज्ञातप्रकृतिपदं व्याख्याय तादृशे प्रतिभुवि प्रेते ऋणदाता केन हेतुना ऋणं परीप्सेत् अपि तु न केनापि हेतुना गृह्णीयादिति निषेधार्थतयैव प्रथमः श्लोकोऽवतारितः। फलतश्चात्र न विशेषः।

व्यासः।

ऋणं पैतामहं पौत्रः प्रातिभाव्यागतं सुतः।
समं दद्यात्तत्सुतौ तु न दाप्याविति निश्चयः॥

समं निष्कलं पितामहस्य सकलमृणं पौत्रेण निष्कलं देयम्। पितुः प्रातिभाव्यागतमृणं पुत्रेण निष्कलं देयम्। तत्सुतौ प्रपौत्रपौत्रौ न दद्यातामित्यर्थः।

कात्यायनः।

प्रातिभाव्यागतं पौत्रैर्दातव्यं न तु तत् क्वचित्।
पुत्रेणापि समं देयमृणं सर्व्वं पैतृकम्॥

पैतृकं प्रातिभाव्यागतमृणं पुत्रेण निष्कलं दातव्यं तत्पुत्रादिभिस्तु देयमेव नेत्यर्थः।

याज्ञवल्क्यः।

बहवः स्युर्यदा स्वांशैर्दद्युः प्रतिभुवो धनम्।
एकच्छायाश्रितेष्वेषु धनिकस्य यथारुचि॥

एकस्य प्रतिभुवश्छाया सादृश्यं निरपेक्षसकार्यकर्तृत्वम्

श्रान्त्रितेषु एकैकोऽपि धनिकस्य सर्व्वं धनं दापयितव्यः।
बृहस्पतिः।

नष्टस्यान्वेषणे कालं दद्यात्प्रतिभुवे धनी।
देशानुरूपतः पक्षं मासं सार्द्धमथापि वा॥
नात्यन्तं पीड़नीयाः स्युर्ऋणं दाप्याः शनैः शनैः।
स्वसाक्ष्ये न नियोज्याः स्युर्विधिः प्रतिभुवामयम्।

नष्टस्य पलायितस्याधमर्णस्य। स्वसाक्ष्ये स्वसमक्षे तिष्ठति दिसति वा अधमर्णे न प्रतिभुवो दर्शनाय धनदानाय वा नियोज्या इत्यर्थः।

तथा।

प्रातिभाव्यन्तु यो दद्यात्पीड़ितः प्रतिभावितः।
त्रिपक्षात्परतः सोऽर्थं द्विगुणं लब्धुमर्हति॥

प्रतिभावितः प्रतिभूत्वं कारितः।

विष्णुनारदौ।

यश्चार्थं प्रतिभूर्दद्याद्धनिकेनोपपीड़ितः।*
ऋणिकस्तं प्रतिभुवे द्विगुणं दातुमर्हति॥

याज्ञवल्क्यः।

प्रतिभूर्दापितो यत्तु† प्रकाशं धनिना धनम्।
द्विगुणं प्रतिदातव्यं ऋणिकैस्तस्य तद्भवेत्॥

---

* धनिकेनपपीड़ित इति धनिकेन च पीड़ित इति च पाठान्तरम्।

† यचेति पाठान्तरम्।

कात्यायनः ।

यस्यार्थे येन यद्दत्तं विधिनाभ्यर्द्दितेन* तु ।

साक्षिभिर्भावितेनैव† प्रतिभूस्तत्समाप्नुयात् ॥

यत् प्रतिभुवा दत्तं तत् समाप्नुयादिति वचनात् निष्कलत्व-मवगम्यते । एतच्च त्रिपक्षादर्व्वाक् । याज्ञवल्क्याद्युक्तद्विगु-णन्तु त्रिपक्षादूर्द्धमित्यविरोधः । ग्रहेश्वरमिश्रैस्तु यस्यार्थे येन यद्दत्तमित्यादि प्रतिभुवा धनिकसमाधानाय यदन्यदपि दत्तं स्यात्तदपि तेन ऋणिकपार्श्वे ग्रहीतव्यमित्यर्थेऽवता-रितमिदम् । एतच्च प्रतिभूकर्त्तृकं धनदानं मध्यस्थस्य वचनात् कृतम् ऋणिकपार्श्वे धनग्रहणाय क्षममिति मध्यस्थे भभिधाय तद्वारेणैव कार्य्यम् ।

यदाह बृहस्पतिः ।

साधुत्वाच्चेन्मन्दधिय ऋणं दद्युरभाविताः ।

तदन्यदापिताः कस्मात्तैरस्ते कार्य्यं पुनः ॥

अभाविता मध्यस्थेन ।

इति विवादरत्नाकरे प्रतिभूतरङ्गः ।

---

* धनिका चोदितेनैवेति पाठान्तरम् ।

† भाविते चैवेति पाठान्तरम् ।

## अथ ऋणादानविधिः।

तत्र वृहस्पतिः।

परहस्तादगृहीतं यत् कुसीदविधिना ऋणम्।
येन यत्र यथा देयमदेयञ्चोच्यतेऽधुना॥
याचमानाय दातव्यमप्रकालकृतमृणम्।
पूर्णावधौ प्राप्तलाभमभावे च पितुः सुतैः॥

प्रकालोऽवधिः तेनावधिमन्तरेण यदगृहीतमृणं याचमानाय याचमानमात्राय तद्दातव्यं सावधि तु यदगृहीतम् अवधौ पूर्णे देयमित्यर्थः। अभावे च पितुः सुतैर्दातव्यमित्यन्वयः

तथा।

पित्र्यमेवाग्रतो देयं पश्चादात्मीयमेव च।
तयोः पैतामहं पूर्व्वं देयमेवमृणं सदा॥

पैतामहादि-ऋणत्रयस्य भाजनं पुमान्। प्रथमं पैतामहं तदनु पित्र्यं तदनु चात्मीयमृणं दद्यादित्यर्थः।

नारदः।

पितर्य्युपरते पुत्रा ऋणं दद्युर्यथांशतः।
विभक्ता ह्यविभक्ता वा यो वा तामुद्वहेद्धुरम्॥

याज्ञवल्क्यः।

पितरि प्रोषिते प्रेते व्यसनाभिप्लुतेऽपि वा।
पुत्रपौत्रैर्ऋणं देयं निह्नवे साक्षिभावितम्॥

विष्णुः।

धनग्राहिणि प्रेते प्रव्रजिते द्विदशाः समाः प्रवसिते वा

तत्पुत्रपौत्रैर्धनं देयं नातः परमनीप्सुभिः।

द्विदशाः समा इति प्रवसित इत्यनेन सम्बध्यते, नातः परम् अतस्तृतीयात् पुरुषात् परं चतुर्थादिभिर्न देयम्।, अनीप्सुभिरित्यनेन प्रपितामहादीनां यदि हितेच्छा, तदा तेषामपि ऋणं चतुर्थादिभिर्देयमित्युक्तम्।

नारदः।

नार्वाक् संवत्सराद्विंशात् पितरि प्रोषिते सुतः।

ऋणं दद्यात् पितृव्ये वा ज्येष्ठे भ्रातर्यथापि वा॥

कात्यायनः।

विद्यमाने तु रोगार्त्ते स्वदेशात् प्रोषिते तथा।

विंशात् संवत्सराद्देयमृणं पितृकृतं सुतैः॥

एतच्च रोगार्त्तस्य अशक्यप्रतिक्रियत्वसम्भावनायां प्रोषितस्य पुनरागमनसम्भावनायाञ्च ज्ञेयम्। यदि त्वसाध्यत्वेनैव रोगावधारणं प्रवासिनश्च पुनरागमनव्यतिरेकावधारणं भवति, तदा जीवतोऽपि वृद्धस्य* पितुः पुत्रस्तत्कालएव ऋणं दातुमर्हति। विंशतिवर्षाणि यावत् प्रतीक्षा न कर्त्तव्या।

तदाह† स एव।

---

* मतश्चेति पाठान्तरम्।

† यदेति पाठान्तरम्।

व्याधितोन्मत्तवृद्धानां तथा दीर्घप्रवासिनाम् ।
ऋणमेवंविधं पुत्रान् जीवतामपि दापयेत् ॥

बृहस्पतिरपि असाध्यचयादिरोगाक्रान्ते सन्निहितेऽपि तदृणं पुत्रैरेव देयमित्याह ।

सान्निध्येऽपि पितुः पुत्रैर्ऋणं देयं विभावितम् ।
जात्यन्धपतितोन्मत्तचयखित्रादिरोगिणः ॥

जात्यन्धो जन्मान्धः, चयखित्रादिरोगिण इत्यसाध्यरोगि णाम् । अत्र यदि पिता सर्व्वथा दानासमर्थः तदा पुत्रेण दातव्यमिति समुदायार्थ इति पारिजातस्वरसः* । यदसार्थस्थानधिकारप्रयोजकरूपवान् पिता अविभक्तधन स्तदा पुत्रेणैव तदृणं देयम् । यदा त्वसाधारणधन तथाभूतोऽपि तदा तेनैव दातव्यम् । यदा तु पिता ऋणदानासमर्थः पुत्रस्तु समर्थस्तदा पुत्रेणैव दातव्यमिति तथा ।

एकच्छायाश्रितं सर्व्वं दद्यात्तु प्रोषिते सुतः ।
मृते पितरि पित्रंशं मरणे न कदाचन ॥

यत् परेण सह पिता एकच्छायया कृतमृणं तत् परस्य प्रोषिते पितरि पित्रंशं परांशञ्च पुत्रो दद्यात् । मृते पित्रंशमात्रं दद्यादित्यर्थः ।

---

* पारिजात इति पाठान्तरम् ।

नारदः ।

दाप्यः पररणं ह्येकोऽपि जीवन्नविभुतैः कृतम् ।

मृतेषु तु न तत्पुत्रः पररणं दातुमर्हति ॥

अविभुतैः एकच्छायाश्रितैः यदृणं कृतं तदेकोऽपि जीवन् सर्व्वं दाप्यः । सर्व्वेषु तु एकच्छायावत्सु ऋणिकेषु मृतेषु तत्पुत्रा अंशकल्पनया* दातुमर्हन्ति न त्वेकएव सर्व्वं दातुमर्हतीत्यर्थः ।

कात्यायनः ।

एकच्छायाप्रविष्टानां दाप्यो यस्तत्र दृश्यते ।

प्रोषितस्य सुतः सर्व्वं पित्रंशर्णं† मृतस्य च ॥

एकच्छायावतामृणग्राहिणां मध्ये यदेको ग्रहीतैव दृश्यते, तदा सएव सर्व्वं दाप्यः । यदि वा प्रोषितपितृकस्तत्सुतो दृश्यते, सोऽपि सर्व्वं दाप्यः । यदि च प्रमीतपितृको दृश्यते, तदासौ पित्रंशमेव दाप्यो न तु सर्व्वमेवेत्यर्थः‡ ।

विष्णुः ।

अविभक्तैः कृतमृणं तदेकोऽपि यस्तेषां मध्ये तिष्ठेत्§ स दद्यात् पैतृकमप्यविभक्तानां भ्रातॄणाम् । विभक्ताश्च दायानुरूपमंशम् ।

---

* स्वांशकल्पनयेति पाठान्तरम् ।

† पित्र्यमन्विति पाठान्तरम् ।

‡ सर्व्वेषामेवेत्यर्थ इति पाठान्तरम् ।

§ तिष्ठतीति पाठान्तरम् ।

अविभक्तैरेकच्छायायितैर्यदृण' कृतं तदेकोऽपि यस्तेषां मध्ये तिष्ठेत् स दद्यात्, मैत्रकमप्यविभक्तानां भ्रातॄणां मध्ये यस्तिष्ठेत् स सर्व्वमेकोऽपि दाप्यः, विभक्ताश्च भ्रातरो यथांशं दद्युरित्यर्थः ।

याज्ञवल्क्यः ।

अविभक्तैः कुटुम्बार्थे यदृणन्तु कृतं भवेत् ।
दद्युस्तद्रिक्थिनः प्रेते प्रोषिते वा कुटुम्बिनि ॥

अविभक्तानां मध्ये एकेनापि कुटुम्बार्थे यदृणं कृतं तत् कर्त्तरि मृते प्रोषिते वा अन्येऽप्यविभक्ता दद्युरित्यर्थः ।

नारदः ।

पितृव्येणाविभक्तेन भ्रात्रा वा यदृणं कृतम् ।
मात्रा वापि कुटुम्बार्थे दद्युस्तत्सर्व्वरिक्थिनः ॥

मनुः ।

ग्रहीता यदि नष्टः स्यात्कुटुम्बार्थे कृतव्ययः ।
दातव्य बान्धवैस्तत्स्यात्प्रविभक्तैरपि स्वतः ॥

नष्ट इत्युपलक्षणं, स्वतो धनात्, तेनान्योन्यविभक्तस्वानामपि* दायादानां यद्येकः सर्व्वदायादावश्यपोष्यभरणार्थमृणं गृहीत्वा मृतत्वादिना दानासमर्थः स्यात्तदा तदृणं सर्व्वैरेव दायादैर्देयमित्यर्थः ।

---

* विभक्तानामिति पाठान्तरम् ।

बृहस्पति ।

पितृव्यभ्रातृपुत्रस्त्रीदासशिष्यानुजीविभिः ।
यदगृहीतं कुटुम्बार्थे तदगृही दातुमर्हति ॥

अत्र गृहकुटुम्बार्थमन्यैरपि कृतमृणं गृहिणा दातव्यमिति तात्पर्य्यम् ।

नारदः ।

अप्राप्तव्यवहारश्च स्वतन्त्रोऽपि हि नर्णभाक् ।

कात्यायनः ।

नाप्राप्तव्यवहारैस्तु पितर्य्युपरते क्वचित् ।
काले तु विधिना देयं वसेयुर्नरकेऽन्यथा ॥

पितरि प्रेतेऽप्यप्राप्तव्यवहारैः पुत्रैः ऋणं न देयं, व्यवहारप्राप्तिकाले तु देयम् । विधिना यथांशं यथाप्राप्ति वेत्यर्थः ।*

नारदः ।

इच्छन्ति पितरः पुत्रान् स्वार्थहेतोर्यतस्ततः ।
उत्तमर्णाधमर्णेभ्यो मामयं मोचयिष्यति ॥
अतः पुत्रेण जातेन स्वार्थमुत्सृज्य यत्नतः ।
ऋणात् पिता मोचनीयो यथा न नरकं व्रजेत् ॥
तपस्वी चाग्निहोत्री वा ऋणवान् म्रियते यदि ।
तपश्चैवाग्निहोत्रञ्च तत्सर्व्वं धनिनां भवेत् ॥

---

* यथांशमप्राप्तेश्चेति पाठान्तरम् ।

उत्तमर्णाधमर्णेभ्य इति उत्तमानां देवर्षिपितॄणाम् ऋणानि उत्तमर्णानि अधमानां मनुष्याणाम् ऋणानि अधमर्णानि तेभ्यः। हलायुधस्तु मनुष्यर्णप्रकरणमेवेदमिति मत्वा उत्तमर्णाय देयानि अधमानि ऋणानि उत्तमर्णाधमर्णानि इत्याह अधमत्वन्तु ऋणानामदत्तानामत्यन्तानिष्टहेतुतया, शेषं सुगमम्।

बृहस्पतिः।

उद्धारमादिकमादाय स्वामिने न ददाति यः।
स तस्य दासः पुत्रः स्त्री पशुर्वा जायते गृहे॥

उद्धारपदस्मरणार्थकम्। आदिशब्देन निक्षेपादिग्रहणम्।

मनुः।

कुटुम्बार्थेऽध्यधीनोऽपि व्यवहारं यमाचरेत्।
स्वदेशे वा विदेशे वा तं ज्यायान्न विचारयेत्॥

अध्यधीनो दासादिः। ज्यायान् प्रभुरिह।

नारदः।

शिष्यान्तेवासिदासस्त्रीवैयावृत्यकरैश्च यत्।
कुटुम्बहेतोरुच्छिन्नं* दातव्यन्तु कुटुम्बिना॥

वैयावृत्यकरः व्यापारकरः† उच्छिन्नमुद्धारः।

विष्णुः।

प्राक् प्रतिपन्नं देयं कस्यचित् कुटुम्बार्थकृतं वा।

---

* उच्छिन्नमिति पाठान्तरम्।

† व्यापारक इति पाठान्तरम्।

ऋणमिति शेषः। कुटुम्बार्थमपि परेण कृतं ऋणं गृहिणा चेत् प्रतिपन्नं दातुं स्वीकृतं, तदा तेन देयम्। कुटुम्बार्थकृतं देयमेवेत्यर्थः।

कात्यायनः।

कुटुम्बार्थमशक्तेन गृहीतं व्याधितेन वा।
उपप्लवनिमित्तञ्च विद्यादापत्कृतन्तु तत्॥
कन्यावैवाहिकञ्चैव प्रेतकार्य्ये च यत्कृतम्।
एतत्सर्व्वं प्रदातव्यं कुटुम्बेन कृतं प्रभोः॥

प्रभोरिति कर्त्तरि षष्ठी, तेन प्रभुणा दातव्यमित्यर्थः।

तथा।

प्रोषितस्यामतेनापि कुटुम्बार्थमृणं कृतम्।
दासस्त्रीमातृशिष्यैर्वा दद्यात्पुत्रेण वा भृगुः॥

पुत्रेण दासादिभिर्वा यत् प्रोषितस्यामतेनापि तत्कुटुम्बपोषणार्थमृणं कृतं, तदसौ प्रोषितो दद्यादिति भृगुर्मन्यते इति योजना।

नारदः।

पितुरेव नियोगाद्वा कुटुम्बभरणाय वा।
कृतं वा यदि वा कृच्छ्रे दद्यात्पुत्रस्य तत् पिता॥

कृच्छ्रे आपत्समये।

बृहस्पतिः।

ऋणं पुत्रकृतं पित्रा शोध्यं यदनुमोदितम्।
सस्नेहेन वा दद्यान्नान्यथा दातुमर्हति॥

कात्यायनः ।

ऋणं पुत्रकृतं पित्रा न देयमिति धर्मतः ।
देयं प्रतिश्रुतं यत्स्यात् यच्च स्यादनुवर्णितम् ॥

प्रतिश्रुतमत्र ऋणादानसमयाङ्गीकृतम् । आदानानन्तरस्वीकृतमनुवर्णितम् । पुत्रग्रहणञ्चोपलक्षणम् ।

मनुः ।

प्रातिभाव्यं वृथादानमाक्षिकं सौरिकञ्च यत् ।
दण्डशुल्कावशिष्टञ्च न पुत्रो दातुमर्हति ॥
दर्शनप्रातिभाव्ये तु विधिरेष* प्रचोदितः ।

प्रातिभाव्यमित्यत्र दर्शनप्रत्ययप्रतिभुवौ विवक्षितौ । वृथादानमफलदानम्, आक्षिकं द्यूतनिमित्तं,† सौरिकं सुरापाननिमित्तम् । अत्र द्यूतसुरापानयोरनर्हयोर्निमित्तत्वं विवक्षितं, दर्शनप्रातिभाव्ये तु इत्यनेन प्रत्ययप्रातिभाव्यमप्युपलक्षणीयम् ।

बृहस्पतिः ।

सौराक्षिकं वृथादानं कामक्रोधप्रतिश्रुतम् ।
प्रातिभाव्यं दण्डशुल्कशेषं पुत्रान्न दापयेत् ॥

कामेन क्रोधेन वा प्रतिश्रुतम् । कामक्रोधप्रतिश्रुते चात्र विवरणीये‡ ।

---

* विधिः पूर्व इति विधि पूर्वमिति च पाठान्तरम् ।

† द्यूतमेव निमित्तमिति पाठान्तरम् ।

‡ विवेचनीये इति विवक्षिते इति च पाठान्तरम् ।

गौतमः ।

प्रातिभाव्यवणिक्शुल्कमद्यद्यूतदण्डा न पुत्रानध्याभवेयुः ।
प्रातिभाव्यं वाणिज्यादिनिमित्तानि ऋणानि न पुत्रान् अध्याभवेयुः न पुत्रान् परिभवेयुः न पुत्रैर्देयानीत्यर्थः ।

व्यासः ।

दण्डो वा दण्डशेषो वा शुल्कं तच्छेषमेव वा ।
न दातव्यन्तु पुत्रेण यच्च न व्यावहारिकम् ॥

अत्र दण्डोवेत्यनेनैव तच्छेषोपादानात्* पुनः तच्छेषग्रहणादतिमहति दण्डे वा दातव्यमिति कियच्छेषन्तु सर्व्वथा न दातव्यम् । अल्पेऽपि दण्डे सर्व्वं न दातव्यमिति लभ्यते ।

लिखित्वा मुक्तकं वापि देयं यत्तु प्रतिश्रुतम् ।
परपूर्व्वस्त्रियै तत्तु विद्यात् कामकृतम् ऋणम् ॥
यत्र हिंसां समुत्पाद्य क्रोधाद्द्रव्यं विनाश्य वा ।
दत्तं तुष्टिकरं यत्तु विद्यात् क्रोधकृतन्तु तत् ॥

उक्तं प्रतिश्रुतं, लिखित्वेति लिखनपूर्व्वकं मुक्तकम् अलिखनपूर्व्वकं वा । परपूर्व्वायै धनं प्रतिश्रुत्यासम्पत्तावृणं कृत्वा दीयते यत् तत् कामकृतमृणम् । परपूर्व्वागम्यापरिणीतस्त्रीमात्रपरः । यत्तु क्रोधवशेन परद्रव्यं विनाश्य परस्य हिंसां वा

---

* तच्छेषस्योपादानादिति पाठान्तरम् ।

ज्ञात्वा तदीयतुष्ट्यर्थं धनं दातुमृणं करोति तत् क्रोधकृतम्।
एते एव पूर्व्वं कामक्रोधप्रतिश्रुते उक्ते।

याज्ञवल्क्यः।

न योषित् पतिपुत्राभ्यां न पुत्त्रेण कृतं पिता।
दद्यादृते कुटुम्बार्थान्न पतिः स्त्रीकृतं तथा॥

विष्णुः।

न स्त्रीकृतं पतिपुत्त्रौ।

कात्यायनः।

देयं भार्य्याकृतमृणं भर्त्रा पुत्त्रेण मातृकम्।
भक्तस्यार्थे कृतं यत् स्यादभिधाय गते दिशम्॥

पत्यौ पुत्रे वा भार्य्याया मातुश्च वृत्तिमकल्पयित्वा स्थिते अन्यत्र गते वा भार्य्यया मात्रा वा भक्ताच्छादनाय यदृणं कृतं तत् पतिपुत्राभ्यां देयमित्यर्थः। अभिधायेति प्रायोवादः। अनभिधानेऽपि न्यायसाम्यात्।

न च भार्य्याकृतमृणं कथञ्चित् पत्युराभवेत्।
आपत्कृताद्दृते पुंसः कुटुम्बार्थौ हि दुस्तरः॥

आपत्कृतकुटुम्बार्थकृताद्दृते भार्य्याकृतमृणं न पत्युराभवेत् न पत्युर्देयमित्यर्थः।

याज्ञवल्क्यः।

गोपशौण्डिकशैलूषरजकव्याधयोषिताम्।
ऋणं दद्यात्पतिस्तासां यस्माद्वृत्तिस्तदाश्रया॥

शैलूषो नटः।

बृहस्पतिः ।

गौण्डिकव्याधरजकगोपनाविक*योषिताम् ।

अधिष्ठाता ऋणं दाप्यस्तासां भर्तृक्रियासु तत् ॥

तासामृणमधिष्ठाता भर्त्ता दाप्यः यस्मात् भर्त्तुरेव क्रियासु तदृणं ताभिः कृतमिति योजना। अत्र च तदाश्रयवृत्तित्वमेव प्रयोजकं न तु जात्यादरः ।

याज्ञवल्क्यः ।

प्रतिपन्नं स्त्रिया देयं पत्या वा यत् कृतं सह ।

स्वयं कृतं वा यदृणं नान्यत् स्त्री दातुमर्हति ॥

कात्यायनः ।

भर्त्रा पुत्रेण वा सार्द्धं केवलेनात्मना कृतम् ।

ऋणमेवंविधं देयं नान्यथा तत्कृतं स्त्रिया ॥

तत्कृतं भर्तृपुत्रकृतम् ।

तथा ।

मर्तुकामेन वा भर्त्रा उक्ता देयमृणं त्वया ।

अप्रपन्नापि सा दाप्या धनं यद्याश्रितं स्त्रिया ॥

प्रत्यासन्नमरणेन प्रत्यासन्नप्रवासेन वा भर्त्रा उक्ता यदृणं त्वया देयमित्याभाषिता या सा तस्मिन्† मृते देशान्तरगते वा तत् ऋणमनिच्छन्त्यपि राज्ञा दापयितव्या, यदि भर्तृधनं तदाश्रितमित्यर्थः। मर्तुकामेनेत्युपलक्षणम् ।

* नाविकेति पाठान्तरम् ।

† भर्त्तरि पाठान्तरम् ।

नारदः ।

दद्यादपुत्रा विधवा नियुक्ता वा मुमूर्षुणा ।

यो वा तद्रिक्थमादद्याद्दद्यात्तस्य ऋणञ्च सः ॥

योवेत्यनेन अन्योऽपि यो यद्रिक्थग्राही, सोऽपि तदृणं दद्यादित्यर्थः ।

विष्णुः ।

सपुत्रस्यापुत्रस्य च* ऋक्थग्राही धनं दद्यादधनस्य स्त्रीग्राही । धनमृणम्, अधनस्येत्यत्र धनशब्द ऋक्थवचनः ।

इदानीं यादृशीं स्त्रियं परिगृह्णता तत्पतिकृतमृणं स्त्रीग्राहिणा देयं, तादृशीमाह नारदः ।

अन्तिमा स्वैरिणीनां या पुनर्भूर्या† प्रथमा च या ।

ऋणं तयोः पतिकृतं दद्यायस्ते समश्नुते ॥

अयमर्थः । चतुर्विधानां स्वैरिणीनां व्यभिचारिणीनां मध्ये या अन्तिमा चतुर्थी, पुनर्भ्वाञ्च त्रिविधानां मध्ये प्रथमा प्रथमोक्ता, ते एव स्त्रियौ परिगृह्णन् तत्पतिकृतमृणं दद्यात् न स्त्र्यन्तरपतिकृतम् ।

पुनर्भूत्रैविध्यं स्वैरिणीचातुर्विध्यञ्चाह नारद एव, तद्यथा ।

परपूर्व्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।

पुनर्भूस्त्रिविधा तासां स्वैरिणी च चतुर्विधा ॥

---

* अपुत्रस्येति पाठान्तरम् ।

† पुनर्भूरिति पाठान्तरम् ।

कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनःसंस्कारकर्म्मणा ।
देशधर्म्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसान्यस्मिन् द्वितीया सा प्रकीर्त्तिता ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते ।
सवर्णाय सपिण्डाय सा तृतीया प्रकीर्त्तिता ॥
स्त्री प्रसूताप्रसूता वा पत्यावेव तु जीवति ।
कामात् समाश्रयेदन्यं प्रथमा स्वैरिणी तु सा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं पुरुषं श्रिता* ।
पुनः पत्युर्गृहं यायात् सा द्वितीया प्रकीर्त्तिता ॥
मृते भर्त्तरि तु प्राप्ता देवरादीनपास्य या ।
उपागच्छेत् परं कामात् सा तृतीया प्रकीर्त्तिता ॥
प्राप्ता देशाद्धनक्रीता क्षुत्पिपासातुरा तु या ।
तवाहमित्युपगता सा चतुर्थी प्रकीर्त्तिता ॥

कात्यायनः ।

निर्धनैरनपत्यैश्च यत् कृतं गौष्ठिकादिभिः ।
यः स्त्रीणामुपभोक्ता स दद्यात्तदृणमेव हि ॥

नारदः ।

अधनस्य ह्यपुत्रस्य मृतस्योपैति यः स्त्रियम् ।
ऋणं वोढुः स भजते तदेवास्य धनं स्मृतम् ॥

---

* त्वन्यं मे पुरुषं श्रितेति, अन्यं पुरुषमाश्रितेति च पाठान्तरम् ।

इदमपि नारदीयवचनं कात्यायनोक्तयौण्डिकादिविषयं नेतव्यम्।

याज्ञवल्क्यः।

ऋक्थग्राही ऋणं दाप्यो योषिद्ग्राहस्तथैव च।
पुत्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिनः॥

पुत्र इत्यादिना जीवत्यपि पुत्रे अन्याश्रितद्रव्यश्चेत् पुत्रोन ऋणं दातुमर्हति। अत्र न ऋणं दाप्य इति सम्बन्धः। अत्र च पितृधनग्रहणयोग्यः पुत्रो विवक्षितः नतु लब्धपितृधनः तस्य ऋक्थग्राहिपदेनैव गतत्वात्। एतच्चान्धपङ्ग्वादेः पितृधनानधिकारिणः पुत्रस्य ऋणापाकरणे अधिकारो माभूदित्येवमर्थमिति कल्पतरुः।

नारदः।

धनस्त्रीहारिपुत्राणामृणभाग्यो धनं हरेत्।
पुत्रोऽसतोः स्त्रीधनिनोः स्त्रीहारी धनिपुत्रयोः॥

अस्यार्थः। ऋणिकस्य धनग्राहिणि स्त्रीहारिणि पुत्रे च कात्यायनोक्तविशेषवति, धनग्राहक एव तदृणं दाप्यः नेतरौ, एवं स्त्रीहारिणि तादृशे पुत्रे च स्त्रीग्राहक एव, न पुत्रः। यदि तु कात्यायनोक्तनिरुपद्रवत्वादिगुणयोगी पुत्रो भवति, तदा स एव ऋणं दद्यात्।

तदाह कात्यायनः।

ऋणं तु दापयेत्पुत्रं यदि स्यान्निरुपद्रवः।
द्रविणार्हश्च धुर्य्यश्च नान्यथा दापयेत्सुतम्॥

व्यसनाभिप्लुते पुत्रे बाले* वा यत्र दृश्यते ।

द्रव्यहृद्दापयेत्तत्र तस्याभावे पुरन्ध्रिहृत् ॥

द्रविणार्हो जात्यन्धबधिरत्वादिरहितः । धुर्य्यः ऋणोद्वहने समर्थः । व्यसनाभिप्लुतत्वादिमति यत्र द्रव्यहृद्दृश्यते, तदा तं दापयेदिति योजना ।

बृहस्पतिः ।

ऋणभाग्द्रव्यहारी च यदि सोपद्रवः सुतः ।

स्त्रीहारी तु तथैव स्यादभावे धनहारिणः ।

अनयोरभावे सोपद्रवोऽपि पुत्र ऋणभागिति नारदेन बोधितमेवेत्यवधेयम् ।

याज्ञवल्क्यः ।

ऋक्थग्राही† ऋणं दाप्यो योषिद्ग्राहस्तथैव च ।

पुत्त्रोऽनन्याश्रितद्रव्यः पुत्रहीनस्य ऋक्थिनः ॥

अत्रापि अनन्याश्रितद्रव्यत्वादिमति पुत्रे स एव दद्यात्, अतथात्वे धनग्राहिस्त्रीयाहिणाविति तात्पर्य्यम् ।

कात्यायनः ।

अमतेनैव पुत्रस्य प्रधना यान्यमाश्रयेत् ।

पुत्रेणैवापहार्य्यं तद्धनं दुहितृभिर्विना ॥

---

* व्यसनाभिप्लुते पुत्रे बाले वेति पाठान्तरम् ।

† ऋक्थग्राहइति पाठान्तरम् ।

ऋणार्थमाहरेत्तन्तु न सुखार्थं कदाचन* ।
अयुक्ते कारणे यस्मात् पितरौ तु न दापयेत् ॥
या स्वपुत्रन्तु जह्यात् स्त्री समर्थमपि पुत्रिणी ।
आहृत्य स्त्रीधनं तत्र पित्र्यर्णं शोधयेत्सुतः ॥

अमतेन असम्मत्या। प्रधना प्रकृष्टस्त्रीधना। दुहितृभिर्विना दुहितॄणामभावे। या स्त्री समर्थमपि पुत्रं परित्यज्य स्त्रीधनमादाय पुत्रस्य असम्मत्या पुरुषान्तरं श्रितवती, तस्याः स्त्रीधनमपि आच्छिद्य पुत्रेण ऋणं शोधनीयमिति तृतीयवाक्यार्थः। समर्थमपीत्यनेन असमर्थमपि। पुत्रपरित्यागे तु तस्याः स्त्रीधनं पुत्रेणाच्छेत्तव्यमिति दर्शितम्।

नारदः।

पुत्रिणी तु समुत्सृज्य पुत्रं या स्त्र्यन्यमाश्रिता।
तस्या ऋणं हरेत्सर्वं निःस्वायाः पुत्र एव च ॥

यदि पुत्रं परित्यज्य समस्तपूर्वधनशून्या पुरुषान्तरमाश्रयेत् तत्पतिकृतमृणं पुत्र एव दद्यादित्यर्थः।

तथा।

या तु सप्रधनैव स्त्री सापत्या चान्यमाश्रयेत्।
सो†ऽस्या दद्याद्दणं भर्त्तुरुत्सृजेद्वा तथैव ताम् ॥

---

* कथञ्चनेति पाठान्तरम्।

† सोऽस्या इति पाठो न समीचीनः।

सप्रधना सप्रकृष्टधना भर्त्तुरूढोढ़ः तथैव सापत्यप्रधनामेव ताम् ऋणदानविरहे त्यजेदित्यर्थः।

कात्यायनः।

बालपुत्राधिकार्थो च भर्त्तारं यान्यमाश्रिता।
आश्रितस्तद्दणं दद्याद्बालपुत्राविधि. स्मृतः॥
दीर्घप्रवासिनिर्बन्धुजडोन्मत्तादिलिङ्गिनाम्।
जीवतामपि दातव्यं तत्स्त्रीद्रव्यसमाश्रितैः॥

दीर्घप्रवासिप्रभृतीनां या स्त्री यच्च द्रव्यं, तद्ग्राहकैरित्यर्थः।

इति विवादरत्नाकरे ऋणादानतरङ्गः।

# अथोद्ग्राहणविधिः ।

तत्र मनुः ।

यैर्यैरुपायैरर्थं स्वं प्राप्नुयादुत्तमर्णकः ।
तैस्तैरुपायैः संगृह्य साधयेदधमर्णकम् ॥
धर्म्मेण व्यवहारेण छलेनाचरितेन च ।
प्रयुक्तं साधयेदर्थं पञ्चमेन बलेन च ॥

संगृह्य वशीकृत्य ।

धर्म्मेर बृहस्पतिः ।

सुहृत्सम्बन्धिसन्दिष्टैः सामोक्त्यानुगमेन च ।
प्रायेण वा ऋणी दाप्यो धर्म्मंर एष उदाहृतः ॥

ऋणिकस्य ये सुहृत्सम्बन्धिनस्तेषु सन्देशवचः यत्र सामवचनं यत्रानुगमनं प्रायोपवेशनं वा धनिकस्य धर्म्मंर ऋणोद्ग्राहणोपाय इत्यर्थः ।

व्यवहारे कात्यायनः ।

धार्य्योऽवरुद्धस्त्वृणिकः प्रकाशं जनसंसदि ।
यावन्न दद्याद्देयञ्च देशाचारस्थितिर्यथा ॥

यावद्दानं जनसंसदि ऋणिकस्य धनिकेन धारणं व्यवहार इत्यर्थः ।

छलाचरित-बलात्कारेषु बृहस्पतिः ।

छद्मना याचितञ्चार्थमानीय ऋणिकाद्धनी ।
अन्वाहितादि वाहृत्य दाप्यते यत्र सोपधिः* ॥

---

* अत्र छचित्तार्थं इति मौध्यम् ।

ऋणिकस्य धनमन्वाहितादि वा छद्मनाहृत्य यत्र दाप्यते, तत्र साधनोपाय उपधिश्छलमुच्यते इत्यर्थः।

तथा।

पुत्रदारपशून् रुद्धा कृत्वा द्वारोपवेशनम्।
यत्रर्णी दाप्यतेऽर्थं स्वं तदाचरितमुच्यते॥

पुत्रदारपशुरोधो द्वारोपवेशनञ्च ऋणोद्धाहरणोपाय आचरितमुच्यते इत्यर्थः।

तथा।

बद्धा स्वगृहमानीय ताड़नाद्यैरुपक्रमैः।
ऋणिको दाप्यते यत्र बलात्कारः स उच्यते॥

स्वगृहमानीय ताड़नादिलक्षण उद्धाहरणोपायः बलात्कार इत्यर्थः।

कात्यायनः।

पीड़नेनोपरोधेन साधयेद्दृणिकं धनी।
कर्मणा व्यवहारेण सान्त्वेनादौ विभावितः॥
आददीतार्थमेवन्तु* व्याजेनाचरितेन च।

पीड़नेन बन्धनादिना उपरोधेन प्रायोपवेशनादिना कर्मणा उदकाहरणादिना एवं व्यवहारादिना च प्रयुक्तमृणमुद्धारये-दित्यर्थः।

---

* आददीतार्थमेवार्थमिति पाठान्तरम्।

इदानीं कोऽधमर्णः केनोपायेन साध्यस्तदाह कात्यायनः ।

राजानं स्वामिनं विप्रं सान्त्वेनैव प्रसाधयेत् ।
रिक्थिनं सुहृदं वापि छलेनैव प्रसाधयेत् ॥

रिक्थिनं दायादम् ।

वणिजः कर्षकांश्चैव शिल्पिनश्चाश्रयीकृताः ।
देशाचारेण दाप्याः स्युर्दुष्टान् सम्पीड्य दापयेत् ॥

वणिजः कर्षकाश्च शिल्पिनश्चाधिकृत्याश्रयीकृताः, देशाचारेणैव ते दाप्याः स्युरिति* ।

बृहस्पतिः ।

प्रतिपन्नमृणी दाप्यः सामादिभिरुपक्रमैः ।
धर्मोपधिबलात्कारैर्गृहसंरोधनेन च ॥

कात्यायनः ।

धार्य्योऽपहस्त्वृणिकः प्रकाशं जनसंसदि ।
यावन्न दद्याद्देयञ्च देशाचारस्थितिर्यथा ॥
विण्मूत्रसंज्ञा यस्य स्याद्धार्य्यमाणस्य देहिनः ।
प्रहृतो वानुगन्तव्यं निबन्धं वा समुत्सृजेत् ॥
स कृतप्रतिभूश्चैव मोक्तव्यश्च दिने दिने ।
आहारकाले रात्रौ च निबन्धे प्रतिभूः स्थितः ॥

---

* स्युरित्यर्थ इति पाठान्तरम् ।

यो दर्शनप्रतिभुवं नाधिगच्छेन्न धारयेत् ।
स चारके निरोद्धव्यः स्थाप्यो वावेद्य रक्षिणः ॥
न धारके निरोद्धव्य आर्यः प्रात्ययिकः शुचिः ।
सोऽनिरुद्धः प्रमोक्तव्यो निरुद्धः शपथेन वा ॥

देशाचारस्थित्यनुसारेण ऋणिको यावन्न ऋणं दद्यात्, ताव धनिकेन धारणीयः । यदि तु तस्य विण्मूत्रसंज्ञा विण्मूत्र वेगसूचनं स्यात्, तदा पृष्ठतोऽनुगन्तव्यः । निबन्धं निगड़ा दिना बन्धं वा समुत्सृजेत् । यदि तु स क्षतप्रतिभूः क्षत लग्नकः स्यात्, तदा दिने दिने मोक्तव्यः । यतो निबर्न नियमे तस्य प्रतिभूः स्थितः । यस्तु दर्शनप्रतिभुवमन्यं वा नाधयेत् विसंवदेद्वा, तदा स धारके कारागृहे निरोद्धव्य धारणीयः रक्षिणी वावेद्य स्थापनीयः । यदि त्वसावार्य प्रात्ययिको विश्वसनीयः शुचिः स्यात्, तदा न धारके धार्यः । अविश्वासपक्षे शपथेन निरुद्धय प्रमोक्तव्य इत्यर्थः ।

मनुः ।

कर्मणापि समं कुर्य्याद्धनिकस्याधमर्णिकः ।
समोऽपकृष्टजातिश्च दद्याच्छ्रेयांस्तु तच्छनैः ॥

उत्तमर्णेन समजातिरपकृष्टजातिर्वा अधमर्णः कर्मणा कर्मकरणे-नापि ऋणनिर्यातनं कृत्वा उत्तमर्णेन समसात्मानं कुर्य्यात् । प्रकृते तु एक उत्तमर्णः अपरोऽधमर्ण इति वैषम्यम् । कर्मद्वारेण तु ऋणनिर्यातने कृते द्वावपि अधमर्णोत्तमर्णौ समौ भवतः । उत्तमर्णात् उत्कृष्टजातिस्त्वधमर्णो न तेन कर्म कारयितव्य-

इत्यर्थः। एतच्च यत्र ब्राह्मणतया उत्तमर्णाधमर्णौ समौ, तत्र ज्ञेयं, ब्राह्मणत्वावच्छेदेनैव शनैर्देय इत्यग्रिमवाक्यात्।

बृहस्पतिः।

निर्द्धनं ऋणिकं गेहमानीय कर्म्म कारयेत्।
शौण्डिकाद्यं ब्राह्मणस्तु दापनीयः शनैः शनैः॥

याज्ञवल्क्यः।

हीनजातिं परिक्षीणमृणार्थं कर्म कारयेत्।
ब्राह्मणस्तु परिक्षीणः शनैर्दाप्यो यथोदयम्॥

ऋणार्थं ऋणनिस्तारार्थं, यथोदयं यथाधनोत्पत्ति।

कात्यायनः।

कर्म्मणा क्षत्रविट्शूद्रान् समहीनांश्च दापयेत्।

कर्म्मणा कर्म्मकरणद्वारेण।

तथा।

यदि ह्यादावनादिष्टमशुभं कर्म्म कारयेत्।
प्राप्नुयात् साहसं पूर्व्वमृणान्मुच्येत धर्णिकः॥

यदि उत्तमर्ण ऋणमोचनार्थमादौ अपरिभाषितं निन्दितं कर्म्म कारयेत्, तदासौ राज्ञा पूर्व्वं साहसं दण्ड्यः। ऋणिकश्च ऋणान्मुच्येतेत्यर्थः।

नारदः।

अथ शक्तिविहीनः स्यादृणी कालविपर्य्ययात्।
शक्त्यपेक्षमृणं दाप्यः काले काले यथोदयम्॥

शक्तिविहीनः ऋणं दातुम्। कालविपर्य्ययात् दुर्भिक्षादेः।

बृहस्पतिः।

पूर्णावधौ शान्तलाभमृणमुद्ग्राहयेद्धनी।

कारयेद्वा ऋणी लेख्यं चक्रवृद्धिव्यवस्थया॥

शान्तलाभं परमवृद्धिप्राप्तम्।

कात्यायनः।

ग्राह्यं स्याद्द्विगुणं द्रव्यं प्रयुक्तं धनिना सदा।

लभेत चेन्न द्विगुणं पुनर्वृद्धिं प्रकल्पयेत्॥

आभ्यां वचनाभ्यां धनिकेन शान्तलाभमृणं यथोक्तप्रकारेणोद्ग्राहणीयम्। तदभावे परमवृद्ध्या सह मूलीकृत्य पुनर्वृद्ध्यादिकं कृत्वा धारयितव्यमित्युक्तम्।

बृहस्पतिः।

द्विगुणस्योपरि यदा चक्रवृद्धिः प्रगृह्यते।

भोगलाभस्तदा तत्र मूलं स्यात्सोदयम् ऋणम्॥

अत्र यत्र तत्रेत्यध्याहार्यम्। तेन यत्र चक्रवृद्धिर्गृह्यते तत्र यथा सोदयमृणं द्विगुणस्योपरि भवति, तथा भोगलाभोऽपि, एतदुक्तं भवति। तथा भोगलाभे दैववशाद्धनिकस्याहृते तेन भोगेन धनं मूलीकृत्य कलया धारणीयम्, येनाग्रिमो द्विगुणस्योपरि धनिकस्याधिको भोगो भवतीति, भोगधनं वा दातव्यमिति।

चक्रवृद्धिप्रकारत्रयमाह मनुः।

ऋणं दातुमशक्तो यः कर्तुमिच्छेत्पुनः क्रियाम्।

स दत्त्वा निर्जितां वृद्धिं करणं परिवर्त्तयेत्॥

अदर्शयित्वा तत्रैव हिरण्यं परिवर्त्तयेत्।
यावती सम्भवेद्वृद्धिस्तावतीं दातुमर्हति॥

निर्जितां धनिकस्य न्यायतोलभ्याम्। तेन निर्जितां वृद्धिं कियतीमपि सकलां वा दत्त्वा किञ्चिद्वृद्धिमति मूले मूलमात्रे वा कलया करणं लेख्यं परिवर्त्तयेत्। अदर्शयित्वा हिरण्यं अनुपनीय धनिके कलाकपर्दकम्, तेन यदि वृद्धिं न दद्यात्, तदा सवृद्धिकमेव धनं मूलीकृत्य करणं लेख्यं परिवर्त्तयेदित्यर्थः। सकलवृद्धिदाने प्राप्ते कियद्वृद्धिदानसमर्थनम् यावती सम्भवेदित्यादिना।

तथा।

चक्रवृद्धिं समारूढ़ो देशकालव्यवस्थितः।
अतिक्रामन्देशकालौ न तत्फलमवाप्नुयात्॥

देशकालव्यवस्थितचक्रवृद्धिं समारूढः, अमुकदेशे अमुककाले वा द्विगुणं धनं मया ग्राह्यमिति व्यवस्थापितचक्रवृद्धिः, स यदि तद्देशकालातिक्रमेण चक्रवृद्ध्या धनमर्थयते, तदा न चक्रवृद्धिमधनं लभते इत्यर्थः।

बृहस्पतिः।

हिरण्ये द्विगुणीभूते मृते नष्टेऽधमर्णिके।
द्रव्यं तदीयं संगृह्य विक्रीणीत ससाक्षिकम्॥
रक्षेद्वा कृतमूल्यञ्च दशाहं जनसंसदि।
ऋणानुरूपं परतो गृह्णीतान्यत्तु पर्णयेत्॥
स्वधनञ्च स्थिरीकृत्य गणनाकुशलैर्नरैः।

तद्वन्धुज्ञातिविदितं प्रतिग्टह्णन्नवाप्नुयात्* ॥

नष्टे पलायनादिना अत्यर्थं दर्शनाविषये तद्वन्धुज्ञातिविदितं तदधमर्णविषयविश्वासविदितम् ।

मनुः ।

य. स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णकात् ।

स राज्ञा नाभियोक्तव्यः स्वकं ससाधयन्धनम् ॥

यथाविषयं धर्मादीन् साधनोपायान्† प्रयुञ्जानो राज्ञा न निवर्त्तनीय इत्यर्थः ।

विष्णुः ।

प्रयुक्तमर्थं यथाकथञ्चित्साधयमानो न राज्ञो वाच्यः स्यात् ।

यथाकथञ्चित् अवरोधबन्धादिना ।

याज्ञवल्क्यः ।

प्रपन्नं साधयन्नर्थं न वाच्यो नृपतेर्भवेत् ।

साध्यमानो नृप गच्छन्दण्ड्यो दाप्यश्च तद्धनम् ॥

वाच्यो निषेध्यः ।

विष्णुः ।

साध्यमानश्चेद्राजानं गच्छेत्तत्समं दण्डः ।

तत्समं साध्यमानऋणसमम् ।

---

* प्रच्छन्नापराधुयादिति पाठः सङ्गच्छते ।

† धनसाधनोपायानिति पाठान्तरम् ।

मनुः ।

य: साधयन्तं छन्देन वेदयेद्धनिकं नृपे ।
स राज्ञा ऋणचतुर्भागं* दाप्यस्तस्य च तद्धनम् ॥

राज्ञ ऋणचतुर्थभागं दाप्य: धनिकस्य च तद्धनम्। एतच्चतुर्भागेण† दण्डाहं दण्ड्यस्य दण्डदानाशक्तौ गुणवत्तायाञ्च ज्ञेयम्। अन्यथा तु विष्णूक्तेनैव व्यवस्था।

बृहस्पतिः ।

प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु संसदि ।
लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यते ॥

व्यपलापी निह्नवकारी निरूपणानन्तरमेव परमासेद्धव्य:।

अत्रैवाह‡ बृहस्पतिः।

नासेद्धव्य: क्रियावादी सन्दिग्धेऽर्थे कथञ्चन ।
आसेधयंस्त्वनासेध्यं दण्ड्यो भवति धर्मतः ।
प्रदातव्यं यद्भवति धर्मतस्तद्दाम्यहम् ।
एवं यत्रार्थिको ब्रूते क्रियावादी स उच्यते ॥
रूपसंख्यादिलाभेषु यत्र भ्रान्तिर्द्वयोर्भवेत् ।
देयानादेययोर्वापि सन्दिग्धोऽर्थ: स उच्यते ॥

रूपे धनस्वरूपे सुवर्णरजतादौ, संख्यायामियत्तायाम्। आदि-

* राज्ञश्चतुर्भागमिति पाठान्तरम्।
† चतुर्थभागेनेति पाठान्तरम्।
‡ अत्रैवेति पाठान्तरम्।

तदनुज्ञातिविदितं प्रतिग्टह्णन्नवाप्नुयात्* ॥

नष्टे पलायनादिना अत्यर्थं दर्शनाविषये तदनुज्ञातिविदित
तदधमर्णविषयविश्वासविदितम् ।

मनुः ।

*यः स्वयं साधयेदर्थमुत्तमर्णोऽधमर्णकात् ।*

स राज्ञा नाभियोक्तव्यः स्वकं संसाधयन्धनम् ॥

यथाविषयं धर्म्मादीन् साधनोपायान्† प्रयुञ्जानो राज्ञा न
निवर्त्तनीय इत्यर्थः ।

विष्णुः ।

प्रयुक्तमर्थं यथाकथञ्चित्साधयमानो न राज्ञो वाच्यः
स्यात् ।

यथाकथञ्चित् अवरोधबन्धादिना ।

मनुः।

य: साधयन्तं छन्देन वेदयेद्धनिकं नृपे।

स राज्ञस्तु चतुर्भागं* दाप्यस्तस्य च तद्धनम्॥

राज्ञ ऋणचतुर्थभागं दाप्यः धनिकस्य च तद्धनम्। एतच्चतुर्भागेण† दण्डत्वं दण्ड्यस्य दण्डदानासमर्थौ गुणवत्ताशाश्च ज्ञेयम्। अन्यथा तु विशत्तिनैव व्यवस्था।

बृहस्पतिः।

प्रतिपन्नस्य धर्मोऽयं व्यपलापी तु संसदि।

लेख्येन साक्षिभिर्वापि भावयित्वा प्रदाप्यते॥

व्यपलापी निह्नवकारी निरूपणानन्तरमेव परमासेद्धव्यः।

अत्रैवाह बृहस्पतिः।

नासेद्धव्यः क्रियावादी सन्दिग्धेऽर्थे कथञ्चन।

आसेधयंस्त्वतासेध्यं दण्ड्यो भवति धर्मतः॥

प्रत्यन्तम्। मिथ्याभियोगे द्विदाप्यहम्।

इति याज्ञवल्क्यीयमधमर्णस्य ऋणसी स उच्यते॥

सन्देहे सति नेतव्यमित्यविरोधः।

व्यासः।

मिथ्याभियोगी द्विगुणमभियोगाद्धनं वहेत्।

कारणे विधिवैपम्यात्जितस्यैकतरस्य तु॥

प्राड्न्यायवादे तु तथा जितस्यैकतरस्य तु।

---

* धनमिति पाठान्तरम्।

† दानत्वधनाद्विगुणमिति पाठान्तरम्।

अभियोगादभियुक्तधनात्, कारणे प्रत्यवस्कन्दने। इमे याज्ञवल्क्यव्यासवाक्ये कामधेनाविह प्रकरणे* अदृष्टे अपि कल्पतरौ दर्शनाल्लिखिते।

यमः।

ऋणिकः सधनीयस्तु दौरात्म्यान्न प्रयच्छति।
राज्ञा दापयितव्यः स्याद्गृहीत्वा द्विगुणं ततः॥

नारदः।

ऋणिकः सधनीयस्तु दौरात्म्यान्न प्रयच्छति।
राज्ञा दापयितव्यः स्याद्गृहीत्वांशन्तु विंशकम्॥

*विंशकं विंशतितमभागम्।* एष च गुरुलघुदण्डविकल्पो दण्डनीयगुणजातिशक्त्यपेक्षया द्रष्टव्यः।

विष्णुः।

उत्तमर्णश्चेद्राजानमियात्तदा भावितोऽधमर्णो राज्ञोधनदशभागमंशं दण्डं दद्यात्, प्राप्तार्थश्चोत्तमर्णो विंशतितममंशम्।

अत्र चोत्तमर्णस्य अनपराधित्वेन तद्धनदापननिमित्तकमेव राज्ञोविंशतितमांशदण्डग्रहणम्।

याज्ञवल्क्यः।

राज्ञाधमर्णिको दाप्यः साधिताद्दशकं शतम्।
पञ्चकन्तु शतं दाप्यः प्राप्तार्थो ह्युत्तमर्णिकः॥

---

* एतत्प्रकरणे इति पाठान्तरम्।

तथा।

गृहीतानुक्रमाद्दाप्यो* धनिनामधमर्णिकः।

दत्त्वा तु ब्राह्मणायैव नृपतेस्तदनन्तरम्॥

नानर्णसमवाये तु यद्यत्पूर्ब्बकृतं भवेत्।

तत्तदेवाग्रतो देयं राज्ञः क्षत्त्रियतोऽनु च॥

आभ्यां नानर्णे प्रथमं ब्राह्मणस्य देयं, ततः क्षत्रियादेः। एकवर्णे ऋणग्रहणानुक्रमेण ऋणं देयमित्युक्तम्।

तथा।

एकाहे लिखितं यत्तु तत्र कुर्य्यादृणं समम्।

ग्रहणं रक्षणं लाभमन्यथा तु यथाक्रमम्॥

अस्यार्थः। यत्र द्वयोर्बहूनां वा एकस्मिन् दिवसे ऋणं कृतं, तदा क्रमगमनात्तस्यैव सर्व्वपरिशोधनासामर्थ्यं यत्राप्यते, तद्विभज्य धनिकैरुद्धाह्यमवशिष्टं धार्य्यं लाभो वा ग्राह्यः।

तथा।

यस्य द्रव्येण यत्पण्यं साधितं यो विभावयेत्।

तद्द्रव्यमृणिकेनैव दातव्यं तस्य नान्यथा॥

नानाऋणसन्निपातेऽपि यदि द्रव्यं निस्तारहेतुरेकस्यैव ऋणेन साधितं, तदा तस्यैकस्य तेन द्रव्येण ऋणनिस्तारः कर्त्तव्यो ऋणिकेन नान्यस्येत्यर्थः।

---

* गृहीतार्थक्रमादिति पाठान्तरम्।

याज्ञवल्क्यः ।

लेख्यस्य पृष्ठेऽभिलिखेद्दत्त्वा दत्त्वा धनम् ऋणी ।

धनी चोपगतं दद्यात्स्वहस्तपरिचिह्नितम्* ॥

उपगतमुपगतलिखनम् ।

विष्णुः ।

असमग्रदाने लेख्यासन्निधाने चोत्तमर्णः स्वलिखितं दद्यात् । लेख्यासन्निधाने चेति समस्तदानाभिप्रायम् ।

नारदः ।

गृहीत्वोपगतं दद्यादृणिकायोदयं धनी ।

अददद्याच्यमानस्तु† शेषहानिमवाप्नुयात् ॥

गृहीत्वा उदयमित्यर्थः । याच्यमानः‡उपगतमददत् ।

अत्रापि बृहस्पतिः ।

धर्मग्रादिनोद्ग्राह्य धनं यस्तूपरि न लेखयेत् ।

न चैवोपगतं दद्यात्तस्य तद्वृद्धिमाप्नुयात् ॥

वृद्धिर्हानिरिति कल्पतरुः । पारिजातस्तु तस्याधमर्णस्य तद्दत्तं वृद्धिमाप्नुयात् सकलं भवेदित्याह । कामधेनुहलायुधयोस्तु नासौ वृद्धिमवाप्नुयादिति पाठः। हलायुधस्तु व्याख्याने यस्तु धनी स्तोकमुद्ग्राह्य§ उपरि न लेखयेत् उपगतं वा न ददाति, तदासौ

* परिनिह्नितमिति पाठान्तरम् ।

† याच्यमानस्त्विति पाठान्तरम् ।

‡ याच्यमान उपगतमददिति पाठान्तरम् ।

§ ऋणितोधनमुद्ग्राह्येति पाठान्तरम् ।

अवशिष्टधनहान्या न वृद्धिं न धनोपचयं लभते शेषहानिः प्रतिपादितत्वादित्याह*। अत्र कल्पतरुहलायुधयोस्तु फलं प्रत्यविशेषएव। अत्र च दत्तस्य उपगतादानं स्वयमलेखनं पुनरुद्धरणाशयेन पर्य्यवसितं बोद्धव्यम्, अन्यथा व्यवहारविरोधात्†।

याज्ञवल्क्यः।

दत्त्वर्णं पाटयेल्लेख्यं शुद्धौ वान्यत्तु कारयेत्।
साक्षिमच्च भवेद्यद्वा‡ तद्दातव्यं ससाक्षिकम्॥

विष्णुः।

ससाक्षिकमृणं ससाक्षिकमेव दद्यात्, लिखितेऽर्थे प्रविष्टे लिखितं पाटयेत्।

नारदः।

लेख्यं दद्याद्विशुद्धार्थं तदभावे प्रतिश्रवम्§।
धनिकर्णिकयोरेवं विशुद्धिः स्यात्परस्परम्॥

प्रतिश्रवः लोके दत्तमनेनेति ख्यापनम्।

---

* प्रतिविद्धत्वादित्याहेति पाठान्तरम्।

† विरोधादिति पाठान्तरम्।

‡ भवद्यच्चेति पाठान्तरम्।

§ प्रतिश्रुतमिति पाठान्तरम्।

तथा ।

ब्राह्मणस्य तु यद्देयं सान्वयस्य तु नास्ति* सः ।
सकुल्येभ्योऽस्य† निनयेत्तदभावेऽस्य बन्धुषु ॥
यदा तु न सकुल्याः स्युर्न च सम्बन्धिबान्धवाः ।
तदा दद्याद्द्विजातिभ्यस्तेष्वसत्स्वप्सु निक्षिपेत् ॥

ब्राह्मणस्य धनिकस्य सान्वयस्य धनं दद्यात्‡ तेन तस्मै यदृत्तं तदन्वयाय दातव्यम् । यदि तु§ सान्वयो नास्त्यसौ, तदानुक्रमेण सकुल्यादिभ्यः तदभावेऽप्सु निक्षिपेदित्यर्थ. । बान्धवाश्चान्वयसकुल्यान्यमातापितृसम्बन्धाः ब्राह्मणस्येति वर्णमात्रोपलक्षणम् ।

इति विवादरत्नाकरे उद्धृताहृतविधितरङ्गः ।

---

* न चास्तीति पाठान्तरम् ।

† सकुल्ये तस्येति पाठान्तरम् ।

‡ देयमिति पाठान्तरम् ।

§ यदि चेति पाठान्तरम् ।

# अथ निक्षेपः ।

तत्र बृहस्पतिः ।

ऋणादानं प्रयोगाद्दिदापनान्तं प्रकीर्त्तितम् ।
निक्षेपस्याधुना सम्यग्विधानं श्रूयतामिति ॥

नारदः ।

स्वं द्रव्यं यत्र विश्रासान्निक्षिपत्यविशङ्कितः ।
निक्षेपोनाम तत्प्रोक्तं व्यवहारपदं बुधैः ॥

बृहस्पतिः ।

राजचौरादिकभयाद्दायादानाञ्च वञ्चनात् ।
स्थाप्यतेऽन्यस्य यद्द्रव्यं न्यासः स परिकीर्त्तितः ॥

अत्र च परं सम्बोध्य परस्थाने द्रव्यधारणमेव न्यासः । अन्यत्तु प्रपञ्चः, विश्वासोऽवश्यं प्रासव्यमेवेत्यादिविनिश्चयः । अविशङ्कितः अप्राप्तिशङ्काशून्यः ।

बृहस्पतिः ।

अनाख्यातं व्यवहितमसङ्ख्यातमदर्शितम् ।
मुद्राङ्कितञ्च यद्द्रव्यं तदौपनिधिकं स्मृतम् ॥

अनाख्यातं सुवर्णादिरूपतोऽकथितम् । व्यवहितं द्रव्यान्तरेण सम्पुटादिना । असङ्ख्यातं पणादिभावेनाविदितसङ्ख्यम् । यद्द्रव्यं स्थाप्यतइत्यनुषङ्गः ।

याज्ञवल्क्यः ।

वासनस्थमनाख्याय हस्तेऽन्यस्य यदर्पयेत् ।
द्रव्यं तदौपनिधिकं प्रतिदेयं तथैव तत् ॥

वासनं निचिप्तद्रव्याधारः सम्पुटादि ।

कात्यायनः ।

क्रयः प्रोषितनिचिप्तो बन्धान्वाहितयाचितम् ।

वैश्यहस्त्यर्पितश्चैव सोऽर्थस्तूपनिधिः स्मृतः ॥

क्रयः क्रीतद्रव्यं कुतश्चिन्निमित्ताद्विक्रेतृपार्श्वे स्थितम् । प्रोषितनिचिप्तः प्रवसता समर्पितः । बन्ध आधिः । याचितमलङ्कारार्थमेकेनापरस्य प्रार्थानीतम्* । वैश्यहस्तार्पितः वाणिज्यार्थं समर्पितः । एते सर्व्वे उपनिधयः उपनिधिद्रव्यवद्रष्टव्याः । तथाच याज्ञवल्क्येन औपनिधिकधर्म्मानभिधाय याचितादिषु एते धर्म्मा अतिदिष्टा याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिरिति ।

अन्वाहितस्वरूपमाह कात्यायनः ।

अनुमार्गेण† कार्य्येषु अन्यस्मिन् वचनान्मम ।

दद्यास्त्वमिति योदत्तः स इहान्वाधिरुच्यते ।

एकस्मिन् यदर्पितं वस्तु, तेन पुरुषान्तरे अमुष्मिन् स्वामिनि त्वं दास्यसीति निचिप्तं तदन्वाधिरित्यर्थः । हलायुधेन तु अत्र मार्गेणेति पठित्वा व्याख्यातम्—अत्र कार्य्येषु एतेषु कार्य्येषु मार्गेण याचनेन अमुष्मिन् पुरुषे त्वं दद्या इति परिभाष्य यत्समर्पितं तदन्वाधिरुच्यते इति ।

---

* सम्यार्थानीतमिति पाठान्तरम् ।

† अर्थमार्गेणेति पाठान्तरम् ।

मनुः ।

कुलजे वृत्तसम्पन्ने धर्मज्ञे सत्यवादिनि ।
महापक्षे धनिन्यार्य्ये निक्षेपं निक्षिपेद्बुधः ॥

महापक्षो बहुस्वजनः । निक्षेपं निक्षेप्यम् ।

बृहस्पतिः ।

स्थानं गृहं गृहस्थञ्च तद्बलं विभवं गुणान् ।
सत्यं शौचं बन्धुजनं परीक्ष्य स्थापयेन्निधिम् ॥

निधिं निक्षेपम् ।

नारदः ।

स पुनर्द्विविधः प्रोक्तः साक्षिमानितरस्तथा ।
प्रतिदानं तथैवास्य प्रत्ययः स्याद्विपर्य्यये ॥

प्रत्ययः स्याद्विपर्य्यय इति यदा राजदैवविनष्टं तन्निक्षिप्तमित्युक्त्वा निक्षेपं न ददाति, तदा निक्षेपार्थाश्रयस्याभिमतपुरुषेण राजदैवोपघातस्यानुरूपविभावनं* कार्य्यमित्यर्थः ।

बृहस्पतिः ।

ससाक्षिकं रहोदत्तं द्विविधं समुदाहृतम् ।
पुत्त्रवत्परिपाल्यन्तद्विनश्यत्यनवेक्षया ॥
ददतो यद्†भवेत्पुर्ण्यं हेमकुप्याम्बरादिकम् ।
तत्स्यात्पालयतोन्यासं तथैव शरणागतम् ॥

---

* राजदैवोपघातस्यार्थानुरूपं विभावनमिति पाठान्तरम् ।

† यद्दातुर्यदिति पाठान्तरम् ।

भर्त्तृद्रोहे यथा नार्य्याः पुंसः पुत्रसुहृद्वधे ।
दोषोभवेत्तथा न्यासे भक्षितोपेक्षिते नृणाम् ॥
न्यासद्रव्यं न गृह्णीयात्तथागस्त्वयशस्करः* ।
गृहीतं पालयेद्यत्नात्तद्दा† याचितमर्पयेत् ॥

मनुः ।

यो यथा निक्षिपेद्धस्ते यमर्थं यस्य मानवः ।
स तथैव ग्रहीतव्योयथा दायस्तथा ग्रहः ॥

दायो निक्षेपणं, ग्रहो ग्रहणम् ।

मिथो दायः कृतो येन गृहीतो मिथ एव वा ।
मिथ एव प्रदातव्यो यथा दायस्तथा ग्रहः ॥

येन च यथा निक्षिप्तं समुद्रमसमुद्रं‡ वा, ससाक्षिकमसाक्षिकं वा, एकाकिना मिलिता वा, एकाकिनि मिलिते वा, तस्य तथैव दातव्यमित्यर्थः ।

तथा ।

समुद्रे नाप्नुयात्किञ्चिद्यदि तस्मान्न संहरेत् ।

समुद्रे मुद्रासहिते निक्षिप्ते, यदि तस्मात् न संहरेत्, तदा नाप्नुयात् किञ्चिद्दूषणं, संहारे तु दूषणमेवाप्नुयादित्यर्थः ।

---

* नाथस्त्वस्यायशस्कर इति पाठान्तरम् ।

† यत्नाद्याचितमर्पयेदिति पाठान्तरम् ।

‡ चमसमुद्रमिति पाठान्तरम् ।

अप्रसुद्रे* किञ्चिदाहरन्नपि अग्रे प्रयच्छन्न दोषभागीति मन्तव्यम् ।

बृहस्पतिः ।

स्थापितं येन विधिना येन यत्र यथाविधि ।

तथैव तस्य दातव्यं न देयं प्रत्यनन्तरे ॥

प्रत्यनन्तरे पुत्रादौ ।

मनुः ।

निक्षेपोपनिधी नित्यं न देयौ प्रत्यनन्तरे ।

नश्यतो विनिपाते तावनिपाते त्वनाशिनौ ॥

जीवत्यसन्निहिते निक्षेप्तरि एतद्रक्थभागिनि पुत्रादौ निक्षेपोपनिधी न देयौ, यतः विनिपाते नाशे पुत्रादेरेतौ निक्षेपोपनिधी नश्येते न निक्षेप्तरि सम्पद्येते। अनिपाते त्वविनाशे तु कदाचिन्नाश्येते। अतो विनाशे तु सति निक्षेप्ता तत्नाशे पुनरपि तावत्परिमाणं द्रव्यं ग्टह्णीयादिति शङ्कया तौ जीवतो निक्षेप्तुरेव समर्पणीयावित्यर्थः ।

तथा ।

स्वयमेव तु यो दद्यान्मृतस्य प्रत्यनन्तरे ।

न स राज्ञाभियोक्तव्यो न निक्षेप्तुश्च बन्धुभिः ॥

मृते निक्षेप्तरि प्रत्यनन्तरेऽपि दानं न राजपर्य्यनुयोगाय, न वा निक्षेप्तृबन्धुपर्य्यनुयोगायेत्यर्थः । स्वयमेवेत्यनेन जीवति निक्षेप्तरि

---

* अपसुद्रे इति पाठान्तरम् ।

प्रत्यनन्तरेण याच्यमानमपि न देयम्। मृते तु अयाच्यमानेनापि देयमित्युक्तम्।

नारदः।

ग्रहीतुः सह योऽर्थेन नष्टो नष्टः स दायिनः।
दैवराजकृते तद्वत् चेत्तज्जिह्मकारितम्॥

दायिनो निक्षेप्तुः, तज्जिह्मकारितं निक्षेपधारिकौटिल्यकारितम्।

बृहस्पतिः।

दैवराजोपघातेन यदि तन्नाशमाप्नुयात्।
ग्रहीतृद्रव्यसहितं तत्र दोषो न विद्यते॥

निक्षेपानुवृत्तौ याज्ञवल्क्यः।

न दाप्योऽपहृतं तत्र राजदैवकतस्करैः।

कात्यायनः।

अराजदैविकेनापि निक्षिप्तं यत्र नाशितम्।
ग्रहीतुः सह भाण्डेन दातुर्नष्टं तदुच्यते॥

अत्र च सर्वत्र ग्रहीतृद्रव्यनाशोपन्यासस्तदीयाशेषदोषनिरासार्थः। तेन निक्षेपधारिदोषं विना निक्षिप्तमात्रमपि यदि नष्टं भवति, तदा न तस्य देयं भवति, यदि तु तज्जैह्म्याद्विनश्यति, तदा देयमेवेति तात्पर्य्यार्थः।

मनुः।

चौरैर्हृतं जलेनोढमग्निना दग्धमेव च।
न दद्याद्यदि तस्मात्स न संहरति किञ्चन॥

तस्मान्निक्षिप्तधनात् संहरति नापहरतीत्यर्थः।

नाध्याभवेयुरित्यनुवृत्तौ गौतमः।

निध्यन्वाधियाचितावक्रीतादयो नष्टाः सर्व्वाननिन्दितान् पुरुषापराधेन।

निधिर्निक्षेपः, अवक्रीतं भाटकगृहीतं शकटादि, सर्व्वान् पुत्रपौत्रानृक्थिनः अनिन्दितान् पुरुषापराधेन, तेन तं पुरुषापराधमन्तरेण निध्यादयोऽपगताः सर्व्वान् पुत्रादीन् नाध्याभवेयुः न परिभवेयुः न तेषां देया भवेयुरित्यर्थः।

कात्यायनः।

ज्ञात्वा द्रव्यवियोगन्तु दाता यत्र विनिक्षिपेत्।
सर्व्वापायविनाशेऽपि गृहीता नैव दाप्यते॥

वियोगं राजोपद्रवादिना विनाशम्। सर्व्वापायविनाशेऽपि शङ्कितापायहेतोरपायहेत्वन्तरेणापि, तेन यत्रापायहेतुमुत्कट-शङ्काविषयमुद्भावितं बुद्धापि निक्षिपति, तत्र शङ्कितापाय-हेतोरपायहेत्वन्तरेणापि द्रव्यनाशे उपेक्षमाणोऽपि निक्षेपधर्त्ता न धनं दाप्य इत्यर्थः।

यत्र तु निक्षेपधारिणा द्रव्यनाशहेतावुद्भावितेऽपि उपे-क्षान्यतद्दोषादेव निधिर्न विनष्टमिति ज्ञायते, तदा निक्षेप-धारक एव दद्यादित्याह स एव।

ग्राहकस्य हि यद्दोषान्नष्टन्तु ग्राहकस्य तत्।

तथा।

यस्य दोषेण यत्किञ्चिद्विनश्येत ह्रियेत वा।
तद्द्रव्यं सोदयं दाप्यो दैवराजकृतादिना॥

बृहस्पतिः ।

भेदेनोपेक्षया न्यासं गृहीता यदि नाशयेत् ।
याच्यमानो न दद्याद्वा दाप्यस्तं सोदयं भवेत् ॥

भेदेन स्वद्रव्यवद्विभावेन उपेक्षया ।

नारदः ।

याच्यमानोऽपि निक्षेपं यो दातुर्न प्रयच्छति ।
दण्ड्यः स राज्ञो भवति नष्टे दाप्यस्तु तत्समम् ॥

उपनिध्यधिकारे याज्ञवल्क्यः ।

*याचमानाय योऽदत्ते दाप्यो दण्ड्यश्च तत्समम् ।

यदि निक्षेप्त्रा याचितमुपनिधिं निक्षेपधर्त्ता न ददाति, तदा निक्षेपधारकदोषान्तरं विनापि नष्टं निक्षिप्तम् असौ दद्यात्येव दण्ड्यश्च तत्समं राज्ञ इत्यर्थः ।

नारदः ।

याच्यमानस्तु यो दातुर्निक्षेपं न प्रयच्छति ।
दण्ड्यः स राज्ञो भवति नष्टे दाप्यस्तु तत्समम् ॥
यचार्थं साधयेत्तेन निक्षेप्तुरननुज्ञया ।
तत्रापि स भवेद्दण्ड्यस्तस्य सोदयमावहेत् ॥

अननुज्ञया विमत्या ।

---

* केचौ नाम इत्यर्थः ।

बृहस्पतिः ।

न्यासद्रव्येण यः कश्चित्साधयेदर्थमात्मनः ।

दण्ड्यः स राज्ञो भवति दाप्यस्तच्चापि सोदयम् ॥

अनाज्ञयाऽननुज्ञयेति विवक्षितम् । अनुज्ञाप्य साधयतो निक्षिप्तं प्रकारान्तरेण प्रयच्छतः सोदयदानदण्डाभावस्तु धनिकस्य दायस्य सहिष्णुतया ।

व्यासः ।

भक्षितं सोदयं दाप्यः समं दाप्य उपेक्षितम् ।

किञ्चिन्न्यूनं प्रदाप्यः स्याद्द्रव्यमज्ञाननाशितम् ॥

मनुः ।

यो नार्पयति निक्षेपं यश्चानिक्षिप्य याचते ।

तावुभौ चौरवच्छास्यौ दाप्यौ वा तत्समं दमम् ॥

यः मार्थिने* च निक्षेपं न ददाति, विनैव निक्षेपं निक्षिप्तमिति याचते, तावुभौ चौरवत् शास्यौ† । महत्त्वर्थे अन्ये त्वर्थे तत्समं धनं राज्ञा दण्ड्यौ, निक्षेपग्राहस्तु इतरस्यानिक्षिप्तमपि दाप्य इत्यर्थः ।

मत्स्यपुराणे ।

यो नार्पयति निक्षेपं यस्त्वनिक्षिप्य याचते ।

तावुभौ चौरवच्छास्यौ दाप्यौ वा द्विगुणं दमम् ॥

---

* मार्थयमान इति पाठान्तरम् ।

† शास्यमनर्थेन प्रथमे इत्यधिक पाठोऽपि दृश्यते ।

अयच द्विगुणधनात्मको दण्डो धनवति निकृष्टाचारादौ* च द्रष्टव्यः, अतो मनुना सह न विरोधः।

मनुः।

निक्षेपस्यापहर्त्तारं दापयेत्तत्समं दमम्।
तथोपनिधिहर्त्तारमविशेषेण पार्थिवः॥

अत्र चौरवच्छास्तिविनाकृतं† पुनर्वचनात्समदमग्रहणञ्च महत्यल्पे च निक्षिप्ते विवक्षितं, तच्च ब्राह्मणे निक्षेपहर्त्तरि बोद्धव्यम्। तथेत्यविशेषेणेति वचनान्न्यायसाम्याच्च निक्षेपानर्पणादौ यदुक्तं, तत्सर्व्वं हर्त्तृत्वं विहाय उपनिध्यनर्पणादावपि मन्तव्यम्।

तथा।

उपधाभिस्तु यः कश्चित्परद्रव्यं हरेन्नरः।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः॥

उपधाभिश्छलैः, सहायोऽत्र छलेन परद्रव्यापहरणे सहकारी, प्रकाशं चत्वरादौ।

कात्यायनः।

सर्व्वेषूपनिधिष्वेते विधयः परिकीर्त्तिताः।

तथा।

यो याचितकमादाय न दद्यात्प्रतियाचितः।
स निरुध्य बलाद्दाप्यो दण्ड्यश्च न ददाति यः॥

---

* अपकृष्टाचारादाविति पाठान्तरम्।

† निरात्मकमिति पाठान्तरम्।

यदि तत्कार्य्यमुद्दिश्य कालं परिनियम्य वा।
याचितो*ऽर्द्दकृते तस्मिन्न प्राप्ते न तु दाप्यते॥

यो यत्कार्य्यसिद्ध्यर्थं याचित्वा आनीतः, स तस्मिन् अर्द्दकृते न नेतुं प्राप्यते। कालं परिनियम्य याचितेऽप्ययमेव विधिरित्यर्थः।

अयमेवास्यापवादमाह।

अथ कार्य्यविपत्तिस्तु तस्यैव स्वामिनो भवेत्।
अप्राप्ते वै स्वकाले तु दाप्यस्त्वर्द्दकृतेऽपि तत्॥

तथा।

याच्यस्तूपनिधिः काले कालहीनन्तु वर्जयेत्।
कालहीनेऽददद्दण्ड्यं द्विगुणञ्च प्रदाप्यते॥

याच्यो निक्षेपकारिणेति शेषः। काले व्यवस्थापितग्रहणसमये। कालहीने तत्समयहीने। तेन प्राप्ते तत्समये गृह्णीयात्, न तु अप्राप्ते। कालहीन इत्यादिना उपनिधिधार्य्यपि तत्समये दत्ते अददत् द्विगुणं दण्डनीय इत्युक्तम्। उपनिधिः कात्यायनेनैव पूर्व्वमुक्तः।

वृहस्पतिः।

गृहीत्वापह्नुते यस्तु साक्षिभिः शपथेन च।
विभाव्य दापयेन्न्यासं तत्समं विनयं तथा॥

---

* याचिते इति पाठान्तरम्।

मनुः।

निक्षेपो यः कृतो येन यावांश्च कुलसन्निधौ।

तावानेव स विज्ञेयो विब्रुवन् दण्डमर्हति॥

विब्रुवन् न्यूने अधिकं ब्रुवन् निवेदयन्। न्यायसाम्यात् निक्षिप्ते अधिके न्यूनं वदन् निक्षेपधार्य्यपि दण्ड्य इत्यपि बोद्धव्यम्।

तथा।

अच्छलेनैव चान्विच्छेत्तमर्थं प्रीतिपूर्व्वकम्।

विचार्य्य तस्य वा वृत्तिं साम्नैव परिसाधयेत्॥

छलं विनैव प्रीतिपूर्व्वकं निक्षिप्तं परिसाधयेत्*। विचारित-शुभाचारे तु निक्षेपधर्त्तरि नितराम्।

तथा।

यो निक्षेपं याच्यमानो निक्षेप्तुर्न प्रयच्छति।

स याच्यः† प्राड्विवाकेन तन्निक्षेप्तुरसन्निधौ॥

साक्ष्यभावे प्रणिधिभिर्व्वयोरूपसमन्वितैः।

अपदेशैश्च संन्यस्य हिरण्यं तत्र तत्त्वतः॥

स यदि प्रतिपद्येत यथान्यस्तं यथाकृतम्।

न तत्र विद्यते किञ्चिद्यत्परैरभियुज्यते॥

---

* परिशोधयेदिति पाठान्तरम्।

† याच्य इति पाठान्तरम्।

तेषां न दद्याद्यदि तु तद्धिरण्यं यथाविधि ।
स्वयं निगृह्य दाप्यः स्यादिति धर्मस्य धारणा ॥

निक्षेपधारित्वाभिमतो निक्षेप्तृत्वाभिमतेन याचितो न निक्षिप्तमिति ब्रूते, साक्षिणाद्यभावः, तदादृष्टेन ग्नैनीपुणा राज्ञा तत्रैव वयोरूपसमन्वितैः विश्वसनीयवचसा ासनीयेन चाकारेण समन्वितैः प्रणिधिभिचारैः अपदेशै- नैः स्वं धनान्तरं संन्यस्य निक्षिप्य कालान्तरे याचयितव्यः,* यदि तद्धनमन्यूनमनतिरिक्तं वा प्रतिपद्यते, यथान्यस्तं ाच, तदा न तत्र पूर्व्वं निक्षिप्तं वर्त्तते इति ज्ञात्वा राज्ञा ोभियोगाञ्चोचनीय इति श्लोकत्रयार्थः । यदि तु तेषां राणां द्वितीयं निक्षिप्तं न ददाति, तदा क्लृप्तदोषोऽसाविति वोभियोगमपि दाप्य इति चतुर्थश्लोकार्थः ।

तथा ।

निक्षिप्तस्य धनस्यैवं प्रीत्योपनिहितस्य च ।
राजा विनिर्णयं कुर्य्यादक्षिण्वन्न्यासधारिणम् ॥

वं पूर्व्वोक्तेन क्रमेण अक्षिण्वन्नपीड़यन्, न्यासधारिणं न्यास- ारित्वेनाभिमतम् ।

पूर्व्वोक्तरूपाभावे दिव्येन निक्षेपनिर्णयमाह बृहस्पतिः ।

रहोदत्ते निधौ यत्र विसंवादः प्रजायते ।
विभावकं तत्र दिव्यमुभयोरपि च स्मृतम् ॥

---

* याचयितव्यमिति पाठान्तरम् ।

निधिर्निक्षेपः। उभयोर्निक्षेप्तृनिक्षेपधारयितृत्वाभिमतयोः।
निक्षेपविधिमन्वाहितादौ स एवातिदिशति।

अन्वाहिते याचितके शिल्पिन्यासे सबन्धके।
एष एवोदितो धर्मस्तथा च शरणागते॥

शिल्पिन्यासे अलङ्कारार्थं शिल्पिन्यस्ते सुवर्णादौ, सबन्धके बन्धकसहिते, तेन बन्धकेऽपि रक्षोदत्ते अतिदेशो लभ्यते। तथैव शरणागते भयादिना स्त्रीदासादौ शरणप्रविष्टे स्वामित्वाभिमतेन सह विवादे एष विधिरिति।

नारदः।

*एष एव विधिर्दृष्टो याचितान्वाहितादिषु।*
शिल्पिषूपनिधौ न्यासे प्रतिन्यासे तथैव च॥
प्रतिगृह्णाति यो दण्डं यत्र सप्रधनं नरः।
तस्याप्येष विधिर्दृष्टः षड्ते निश्चयः स्मृतः॥

शिल्पिशब्देन शिल्पिषु अलङ्कारार्थं धृतं धनं विवक्षितम्। उपनिधिः पूर्व्वमुक्तः। न्यासो गृहस्वामिनो दर्शयित्वा तत्परोक्षे गृहजने समर्पितं धनम्। प्रतिन्यासः परस्परन्यासः। एष तावन्निक्षेपोक्तविधिः। प्रतिगृह्णाति यो दण्डमिति यो दण्डं रक्षो गृह्णाति, तस्य पुरुषस्य क्षतदण्डे दृष्टप्रमाणाभावे एष विधिः। एवञ्च यत्र सप्रधनं प्रकृष्टधनसम्बन्धं धनं रक्षो गृह्णाति, तथापि धने दृष्टप्रमाणाभावे एष एव विधिः। हलायुधेन तु प्रतिगृह्णाति पोगण्डमिति पठित्वा व्याख्यातं—पोगण्डे याने सप्रधने प्रकृष्टधनसहिते निक्षेप्तुः

सकाशान्निक्षेपनयेन गृहीते एष एव विधिर्दृष्ट इति मन्वते निधयः निधितुल्या इत्यर्थः। यद्दत्त्वञ्च याचितान्वाहितादित्वं शिल्पित्वं* उपनिधित्वं न्यासत्वं प्रतिन्यासत्वं दण्डवत्प्रधनग्रहणञ्च पुरस्कृत्य न्यासधर्मातिदेशो न्यासादौ यथाकथञ्चित् तद्भेदविवक्षया।

कात्यायनः।

सर्व्वेष्वपनिधिष्वेते विधयः परिकीर्त्तिताः।

याज्ञवल्क्यः।

याचितान्वाहितन्यासनिक्षेपादिष्वयं विधिः॥

कात्यायनः।

यो याचितकमादाय न दद्यात्प्रतियाचितः।

स निगृह्य बलाद्दाप्यो दण्ड्यः स न ददाति यः॥

मत्स्यपुराणे।

यो याचितकमादाय न दद्यात्तत्तथाविधम्।

स निगृह्य बलाद्दाप्यो दण्ड्यो वा पूर्व्वसाहसम्॥

बृहस्पतिः।

याचितं स्वाम्यनुज्ञातं प्रदद्यान्नापराध्नुयात्।

प्रददद्न्यस्मै।

---

* शिल्पत्वमिति पाठान्तरम्।

कात्यायनः ।

येष संस्क्रियते न्यासो दिवसैः परिनिष्ठितैः ।
तदूर्द्धं स्थापयञ्छिल्पी दाप्यो दैवहतेऽपि तम् ॥
अल्पेनापि च यत्कर्म्म नष्टञ्चेद्भृतकस्य तत् ।
पर्य्यासं दिवसतस्तस्य विनश्येत्तद्गृहीतः ॥

येर्यावद्भिः । तं न्यासम् । यद्भृतकस्य स्वाम्यपेचितकर्म्म विरुद्धक्रियया विनष्टं, तद्व्यवस्थापितकालापेचया स्वल्पेनापि कालेन स्वामिनो भृतकेन दातव्यम् । तथा निर्व्वाहितापेचितसंस्कारं* वस्तु यद्भृतकः स्वामिने समर्पयति, तद्य स्वामी न गृह्णाति, तद्दैवदोषादिनष्टं भृतकेन न स्वामिनो दातव्यमित्यर्थः ।

तथा ।

न्यासदोषाद्विनाशः स्याच्छिल्पिनस्तन्न [illegible]येत् ।
दापयेच्छिल्पिदोषाच्च संस्कारार्थं गृ[illegible] नाशये ...
संस्कारार्थमर्पिते न्यासदोषात्संस्कार[illegible]चानवधानादि- ...
तदा‡ न शिल्पिनं दापयेत् । [illegible] यो दण्ड-
जाते विनाशे शिल्पिनं दापयेदित्यर्थः । [illegible]

---

* निर्व्वाहितान्वाहितादिकमिति पाठान्तरम् ।

† नष्टोन्यासश्चेदिति पाठान्तरम् ।

‡ दातुर्द्रव्यमित्यधिक पाठो दृश्यते ।

तथा।

न्यासादिकं परद्रव्यं प्रभक्षितमुपेक्षितम्।

अज्ञानान्नाशितञ्चैव येन दाप्यः स एव तु॥

स एवेत्यनेन पुत्रदारादिर्न दाप्य इति विवक्षितम्। यदा तु तदपराधोऽपि स्यात्तदा सोऽपि दाप्यः। तदुक्तं गौतमेन। अनिन्दितान् पुरुषापराधेनेति।

इति विवादरत्नाकरे निक्षेपतरङ्गः।



# अथास्वामिविक्रयः ।

तत्र बृहस्पतिः ।

निक्षेपानन्तरं प्रोक्तो भृगुणास्वामिविक्रयः ।
श्रूयतां तं प्रयत्नेन सविशेषं ब्रवीम्यहम् ॥
निक्षेपान्वाहितन्यास-हृतबन्धकयाचितम् ।
उपांशु येन विक्रीतमस्वामी सोऽभिधीयते ॥

उपांशु रहसि ।

नारदः ।

निक्षिप्तं वा परद्रव्यं नष्टं लब्ध्वापहृत्य वा ।
विक्रीयतेऽसमक्षं यत्स ज्ञेयोऽस्वामिविक्रयः ॥

व्यासः ।

याचितान्वाहितन्यासं हृत्वा वान्यस्य यद्धनम् ।
विक्रीयते स्वाम्यभावे स ज्ञेयोऽस्वामिविक्रयः ॥

याज्ञवल्क्यः ।

नष्टापहृतमासाद्य हर्त्तारं ग्राहयेन्नरम् ।
देशकालविपत्तौ* च गृहीता स्वयमर्पयेत् ॥

नष्टमपहृतं परधनं क्रयादिना आसाद्य लब्ध्वा मूलस्वामिना अभियुक्तः सन् हर्त्तारं हरणपूर्व्वविक्रयकर्त्तारं नरं राजपुरुष-

---

* देशकालातिपत्ताविति पाठान्तरम् ।

द्वारा मूलस्वामिपुरुषद्वारा वा क्रेता ग्राहयेद्विरोधयेत्। यदि तु देशकालविपत्त्या कदाचिदपरपूर्व्वविक्रयकर्त्तारमप्राप्तं न रोधयितुं शक्नोति, तदा स्वयमेव क्रेता तद्वस्तुस्वाम्यं ज्ञात्वा मूलस्वामिने समर्पयेदित्यर्थः।

बृहस्पतिः।

पूर्व्वस्वामी तु तद्द्रव्यं यदागत्य विभावयेत्*।
तत्र मूलं दर्शनीयं क्रेतुः शुद्धिस्ततोभवेत्॥

मूलमत्र विक्रेता।

कात्यायनः।

प्रकाशं वा क्रयं कुर्य्यान्मूलं वापि समर्पयेत्।
मूलानयनकालस्तु देयो योजनसंख्यया†॥
यदा मूलमुपन्यस्य पुनर्वादी क्रयं वदेत्।
आहरेन्मूलमेवासौ न क्रयेण प्रयोजनम्॥

प्रकाशक्रयोपदर्शनेन मूलोपदर्शनेन वा क्रेता आत्मानमनपराधं दर्शयेत्। यदा तु मूलमुपन्यस्य क्रयं पुनरालम्बते‡, तदा पूर्व्वापरविरोधेन अपराध्नुयादेव,§ न क्रयेण क्रयख्याप-

---

* विभावयेदिति पाठान्तरम्।

† योजन क्रोशचतुष्टयं तत्संख्यया तत्संख्यानुसारेणेत्यर्थः, योजनान्ते मूलस्थितौ तदानयनाय यावान् कालो दीयते योजनद्वयान्ते तद्द्विगुण, योजनत्रयान्ते ततोऽप्यधिकमित्यवधारणीति भाव।

‡ पुनरालभ्यते इति पाठान्तरम्।

§ अपराधादेवेति अपहरादेवेति च पाठौ दृश्यते।

नेन प्रयोजनमपराधव्यावर्त्तनमित्यर्थः। अर्थविचारस्तु मूलानुसारेणेति* भावः।

व्यासः।

मूले समाहिते क्रेता नाभियोज्योऽथ किञ्चन†।
मूलेन सह वादस्तु नाष्टिकस्य तदा भवेत्॥

समाहिते समर्पिते, नाष्टिको नष्टधनस्वामी।

बृहस्पतिः।

विक्रेता दर्शितो यत्र हीयते व्यवहारतः।
क्रेतुराज्ञोर्मूल्यदमौ प्रदद्यात्स्वामिनो धनम्॥

धनं मूलधनम्।

नारदः।

विक्रेता स्वामिनोऽर्थञ्च क्रेतुर्मूल्यञ्च‡ यत्कृतम्।
दद्याद्दण्डं यथा§ राज्ञे विधिनास्वामिविक्रये॥

याज्ञवल्क्यः।

विक्रेतुर्दर्शनाच्छुद्धिः¶ स्वामी द्रव्यं नृपोदमम्।
क्रेता मूल्यमवाप्नोति तस्माद्यस्तत्र‖ विक्रयी॥

* अथ विचारस्तदर्थानुसारेणेति पाठान्तरम्।

† नाभियोज्य कथञ्चनेति पाठान्तरम्।

‡ क्रीतमूल्यञ्चेति पाठान्तरम्।

§ तथेति पाठो युक्त।

¶ विक्रेतुस्स्वामिविक्रेतुर्दर्शनात् यदि दोषाच्छुद्धिः क्रेतुरिति शेष।

‖ तत्रेति पाठान्तरम्।

विक्रयी अस्वामिविक्रयी।

मनुः।

> विक्रीणीते परस्य स्वं योऽस्वामी स्वाम्यसम्मतः।
> न तं नयेत साक्ष्यन्तु स्तेनमस्तेनमानिनम्॥
> अवहार्य्यो भवेच्चैव सान्वयः षट्शतं दमम्।
> निरन्वयोऽनपसरः प्राप्नुयाच्चौरकिल्बिषम्॥
> अनेन विधिना शास्ता कुर्वन्नस्वामिविक्रयम्।
> अज्ञानाज्ज्ञानपूर्व्वन्तु चौरवद्दण्डमर्हति॥
> विक्रयाद्यो धनं किञ्चिद्गृह्णीयात्कुलसन्निधौ।
> क्रयेण स विशुद्धस्तु न्यायतो लभते धनम्॥
> अथ मूलमनाहार्य्यं प्रकाशक्रयशोधितम्।
> अदण्ड्यो मुच्यते राज्ञा नाष्टिको लभते धनम्॥

न तं नयेत साक्ष्यं न तं क्वापि प्रमाणीकुर्य्यात्। अवहार्य्यो भवेद्दण्ड्यो भवेत्। सान्वयः स्वामिसम्बन्धी पुत्रादिः। षट्शतं पणानामिति शेषः। निरन्वयः स्वाम्यसम्बन्धी। अपसरणमपसरः स्वामिगृहाद्गमनस्य, तेन परस्वविक्रेता परसम्बन्धी षट्पणशतं दण्ड्यः। यदि त्वसौ विक्रेता न स्वामिनः सम्बन्धी, स्वामिगृहाच्च तस्य द्रव्यस्यापसारो न स्वामिसम्बन्धिनोऽन्येन कृतः, किन्तु स्वयमेव तद्द्रव्यापसारी, तदा चौरवद्दण्ड्यः। अन्यकृते तु द्रव्यापसारणे सम्बन्धिनि विक्रेतरि षट्पणशताधिकमपि दण्ड्यः। कल्पतरुकारस्तु अपसरत्यनेन स्वामिनः सकाशाद्धनमिति प्रतिग्रहादिर्धनोपायोऽपसरः,

स न विद्यते यस्य स तथा, एतच्च भागुरिमेधातिथिप्रचितिकाराणामनुमतमित्याह, अज्ञानादिति मनुवचनात्। मत्स्यपुराणीयम्। अज्ञानाद्यः पुमान् कुर्य्यात्परद्रव्यस्य विक्रयम्। स निर्दोषो ज्ञानपूर्व्वं चौरवद्दण्डमर्हति॥ इति वाक्यमज्ञाने निर्दोषत्वमवध्यत्वमाह न त्वदण्ड्यत्वबोधकम्। विक्रयादिति विक्रयाद् आपणात्। कुलसन्निधौ ग्रामाणिकव्यवहर्त्तृमेलकसन्निधौ। न्यायतः क्रयेणेत्यन्वयः। विशुद्धो निर्दोषः, लभते धनं विक्रेतुः सकाशादिति शेषः। अथ मूलमित्यादि मूलमस्वामिभूतो विक्रेता अनाहार्य्यं यदि देशान्तरवर्त्तित्वादिना न क्रेतुः शक्याहरणः, प्रकाशक्रयी च क्रेता, तदा न दण्ड्यः, नाष्टिकस्तु धनं लभत इत्यर्थः।

कात्यायनः।

> नाष्टिकस्तु प्रकुर्व्वीत तद्धनं ज्ञातिभिः स्वकम्।
> अदत्तत्यक्तविक्रीतं कृत्वा स्वं लभते धनम्॥

ज्ञातिभिः साक्ष्यादिभिः, त्यक्तपदं दानविक्रयादिस्वत्वापवादक्रियापरम्।

मनुयमौ।

> अस्वामिना कृतो यस्तु दायो विक्रय एव वा।
> अकृतः स तु विज्ञेयो व्यवहारे यथास्थितिः॥

कात्यायनः।

> अस्वामिविक्रयं दानमाधिञ्च विनिवर्त्तयेत्।

याज्ञवल्क्यः।

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिते* ।

नारदः।

द्रव्यमस्वामिविक्रीतं प्राप्य स्वामी समाप्नुयात्।

प्राप्य उपलभ्य।

कात्यायनः।

यदि स्वं नैव कुरुते ज्ञातृभिर्नौष्टिको धनम्।

प्रसङ्गविनिवृत्यर्थं चौरवद्दण्डमर्हति ॥

ज्ञातृभिरिति प्रायिकतयोक्तं प्रमाणमात्रे तात्पर्य्यम्। ज्ञातिभिरिति क्वचित् पाठः। तत्रापि† तथैव नेयम्।

याज्ञवल्क्यः।

आगमेनोपभोगेन नष्टं भाव्यमतोऽन्यथा।

पञ्चबन्धो दमस्तत्र राज्ञस्तेनाविभाविते ॥

आगमेन क्रयादिना उपभोगेन च नष्टं नाष्टिकेन स्वं विभाव्यम्। अतोऽन्यथा विभावने पञ्चबन्धो नष्टद्रव्यपञ्चमांशो राज्ञस्तेन दमोदण्डो देय इत्यर्थः। अतोऽन्यथेत्यस्य विवरणं तेनाविभावित इति।

---

* ऽप्रकाशिन इति पाठान्तरम्।

† तथापीति पाठान्तरम्।

कात्यायनः।

अभियोक्ता धनं कुर्य्यात्प्रथमं ज्ञातिभिः* स्वकम्।
पश्चादागमविशुद्धयर्थं क्रयं क्रेता स्वबन्धुभिः॥
असमाहार्य्यमूलस्तु क्रयमेव विशोधयेत्।
विशोधिते क्रये राज्ञे† वक्तव्यः स न किञ्चन॥
प्रकाशञ्च क्रयं कुर्य्यात्साधुभिर्ज्ञातिभिः स्वकैः।
न तत्रान्या क्रिया प्रोक्ता दैविकी न च मानुषी‡॥

अभियोक्ता नाष्टिको नष्टधनं ज्ञात्वा§ प्रमाणेनात्मीयत शोधयेत्। तदनु क्रेता क्रीतमिदं प्रकाशमिति विभावये ज्ञातिग्रहणं प्रमाणमात्रोपलक्षणम्। असमाहार्य्यमूलस्तु मू हरणासमर्थस्तु क्रयमेव प्रकाशं दर्शयेत्। स तादृशो रा न दण्ड्यः। प्रकाशञ्च क्रयं ज्ञातिभिः स्वकैः कुर्य्यात्। तत्रान्या क्रियेति ज्ञातिषु सम्बन्धिषु,¶ असम्बन्धेऽन्यापि बोध त्यर्थः।

बृहस्पतिः।

परद्रव्येऽभिलषति योऽस्वामी लोभसंयुतः।
अभावयंस्ततः पश्चाद्दाप्यः स्याद्द्विगुणं दमम्॥

---

* साक्षिभिरिति पाठान्तरम्।

† राज्ञ इति पाठान्तरम्।

‡ दैविकी शपथादिरूपा। मानुषी साक्ष्यादिरूपेति बोध्यम्।

§ दृष्टा स्वधनमिति पाठान्तरम्।

¶ सम्बन्धिष्विति पाठान्तरम्।

व्यासः।

वादी चेन्मार्गितं* द्रव्यं साक्षिभिर्न विभावयेत्† ।
दाप्यः स्याद्द्विगुणं दण्डं क्रेता तद्द्रव्यमर्हति ॥

एतद्द्विगुणधनदण्डदानं परद्रव्यं ज्ञात्वापि लोभात्तद्विक्रये, पञ्चबन्धदमस्तु याज्ञवल्कीयो भ्रमप्रयुक्तक्रय इत्यविरोधः।

विष्णुः।

अजानन् यः परद्रव्यं विक्रीणीयात्तस्य न दोषः,‡
स्वामी तद्द्रव्यमाप्नुयात्।

नारदः।

प्रकाशक्रयतः शुद्धिः क्रेतुः स्तेयं रहःक्रयात्§ ।

बृहस्पतिः।

येन क्रीतन्तु मूल्येन प्रागध्यक्षनिवेदितम्।
न तत्र विद्यते दोषः स्तेयः स्यादुपधिक्रयात् ॥
अन्तर्गृहे वहिर्ग्रामात्¶ निश्युपांशुसतो जनात्।
हीनमूल्यञ्च यत्क्रीतं ज्ञेयोऽसावुपधिक्रयः ॥

असतो जनादसाधुत्वेन ज्ञातात्।

---

* मार्गितम् अन्विष्य लब्धमित्यर्थः।

† विभावयेत् प्रमापयेदित्यर्थः।

‡ तस्यादोष इति पाठान्तरम्।

§ क्रतादिति पाठान्तरम्।

¶ वहिर्ग्रामे इति पाठान्तरम्।

नारदः ।

अस्वाम्यनुमताद्दासादसतश्च जनाद्रहः ।
हीनमूल्यमवेलायां क्रीणंस्तद्दोषभाग्भवेत् ॥

याज्ञवल्क्यः ।

स्वं लभेतान्यविक्रीतं क्रेतुर्दोषोऽप्रकाशिनः* ।
हीनाद्रहोहीनमूल्ये वेलाहीने च तस्करः ॥

हीनान्नीचादसम्भावितद्रव्यस्वामिभावात्, वेलाहीने क्रयार्ह-वेलाहीने, तेन हीनाद्रहोहीनमूल्येन वेलामनाश्रित्य क्रयं कुर्व्वंस्तस्करो भवतीति वाक्यार्थः ।

कात्यायनः ।

अनुपस्थापयन्मूलं क्रयं वाप्यविशोधयन्† ।
यथाभियोगं धनिने धनं दाप्यो दमञ्च सः ॥

नारदः ।

न गूहेदागमं क्रेता शुद्धिरस्य तदागमात् ।
विपर्य्यये तुल्यदोषः सर्व्वं तद्दण्डमर्हति ॥

विपर्य्यये आगमनिगूहने, तुल्यदोषो विक्रेतृतुल्यदोषः, तद्दण्डं विक्रेतृतुल्यदण्डमर्हति ।

बृहस्पतिः ।

प्रमाणहीनवादे तु पुरुषापेक्षया नृपः ।
समन्यूनाधिकत्वेन स्वयं कुर्य्याद्विनिर्णयम् ॥

---

* ऽप्रकाशिते इति पाठान्तरम् ।

† चाप्यविशोधयन्निति पाठान्तरम् ।

निक्षेपोक्तप्रकारेण गूढाकार* प्रयोगं कृत्वा पुरुषाणां धर्म्माधर्म्मयोः समन्यूनाधिकभावं विनिश्चित्य स्वयमेव राजा निर्णयेदित्यर्थः।

तथा।

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः।
अविज्ञाताश्रयात्क्रीतं विक्रेता यत्र वा मृतः॥
स्वामी दत्त्वार्द्धमूल्यन्तु प्रगृह्णीत स्वकं धनम्।
अर्द्धं द्वयोरपहृतं तत्र स्याद्व्यवहारतः॥
अविज्ञातक्रयो दोषस्तथा चापरिपालनम्।
एतद्द्वयं समाख्यातं द्रव्यहानिकरं बुधैः॥

अविज्ञाताश्रयादनिश्चितवासस्थानात्†। अयमर्थः, वणिग्वीथीपरिगतत्वादिकमादाय‡ क्रयं वस्तुनः परस्यापि§ यः करोति विक्रेतुरविज्ञाताश्रयत्वात्तदानयनाशक्तिश्च स्यात्, तदा विभावितस्वामिभावान्नाष्टिकादर्द्धमूल्यं गृहीत्वा तद्द्रव्यं नाष्टिकायार्पयेत्। नाष्टिकेन तद्धनं न रक्षितमित्यस्य दोषः क्रेता त्वविज्ञाताश्रयात्तद्धनं क्रीतवानिति तस्य दोषः। तदेतद्दोषद्वयमुभयोरपि अर्द्धद्रव्यहानिकरमित्यर्थः।

---

* गूढाचारं इति पाठान्तरम्।

† स्थानादिति पाठान्तरम्।

‡ अनुचिन्त्येत्यर्थः।

§ परस्य भिन्नस्वामिकस्यार्थे।

मरीचिः।

वणिग्वीथीपरिगतं विज्ञातं राजपूरुषैः।
दिवा गृहीतं यत्क्रेता स शुद्धोलभते धनम्॥
अविज्ञातनिवेशत्वाद्यच मूल्यं न लभ्यते।
हानिस्तत्र समा ज्ञेया क्रेतृनाष्टिकयोर्द्वयोः॥

अविज्ञातो निवेश आश्रयो यस्य विक्रेतुरसावविज्ञातनिवेशः, तत्त्वात्।

याज्ञवल्क्यः।

हृतं प्रनष्टं यो द्रव्यं परहस्तादवाप्नुयात्।
अनिवेद्य नृपे दण्ड्यः स तु षण्णवतिं पणान्॥

हृतं प्रनष्टं वा द्रव्यं परसकाशस्थं मम अनेनापहृतमिति राज्ञे अनिवेद्य गृह्णन् षण्णवतिं पणान् दण्ड्यः तस्करप्रच्छादकत्वदोषात्।

इति विवादरत्नाकरेऽस्वामिविक्रयतरङ्गः।

---

## अथ सम्भूयसमुत्थानम् ।

तत्र नारदः ।

वणिक्प्रभृतयो यत्र कर्म्म सम्भूय कुर्व्वते ।
तत्सम्भूयसमुत्थानं व्यवहारपदं स्मृतम् ॥

सम्भूय धनमेलकं कृत्वा ।

बृहस्पतिः ।

अशक्तालसरोगार्त्तमन्दभाग्यनिराश्रयैः ।
वणिज्याद्याः सहैतैस्तु* न कर्त्तव्या बुधैः क्रियाः ॥
कुलीनदक्षानलसैः प्राज्ञैर्नाणकवेदिभिः ।
आयव्ययज्ञैः शुचिभिः शूरैः कुर्य्यात्सह क्रियाः ॥

नारदः ।

फलहेतोरुपायेन कर्म्म सम्भूय कुर्व्वताम् ।
आधारभूतः प्रक्षेप उत्तिष्ठेरंस्ततोऽंशतः ॥

प्रक्षेपोऽत्र धनप्रक्षेपः । आधारभूतः निदानभूतः । ततः कारणादंशतः उत्तिष्ठेरन् वाणिज्याद्यर्थमुद्योगं कुर्व्वीरन् ।

तथा ।

समोऽतिरिक्तो हीनो वा तत्रांशो यस्य यादृशः ।
क्षयव्ययौ तथा वृद्धिस्तस्य तत्र तथाविधा ।

---

* सहैतैस्त्विति पाठान्तरम् ।

बृहस्पतिः ।

समोन्यूनोऽधिकोवांशो येन चिप्तस्तथैव सः ।

व्ययं दद्यात्कर्म्म कुर्य्याल्लाभं गृह्णीत चैव हि ॥

याज्ञवल्क्यः ।

समवायेन वणिजां लाभार्थं कर्म्म कुर्व्वताम् ।

लाभालाभौ यथाद्रव्यं यथा वा संविदा कृतौ ॥

सर्व्वे वयमिदं कर्म्म मिलित्वा कुर्म्मह इत्येवंरूपा सम्प्रतिपत्तिः समवायः, तेन वणिगादयो लाभलिप्सवः प्रातिस्विकं कर्म्म कुर्व्वते, तेषां लाभालाभावुपचयापचयौ यथाद्रव्यं येन यावद्द्रव्यं पण्यग्रहणार्थं दत्तं तदनुसारेणावसेयौ। यद्वा गुणप्रधान-भावपर्य्यालोचनया अस्य भागद्वयमस्यैको भाग इत्येवंरूपया संविदा समवायेन यथा प्रतिपन्नौ, तथा व्यवहरणीयाविति मिताचरा। यथाद्रव्यं समवायेन येन तेन स्वस्वद्रव्यानुसारेण यथा वा संविदा समवायेन ।

नारदः ।

भाण्डपिण्डव्ययोद्धारभारसारान्ववेचणम् ।

कुर्य्युस्तेऽव्यभिचारेण समये स्वे व्यवस्थिताः ॥

भाण्डं क्रय्यविक्रय्यसमूहः, पिण्डं पाथेयं, व्ययो वेतनम्, उद्धारस्तस्मादिष्टद्रव्यात्प्रयोजनविशेषादाकर्षणं, भार उद्वाह्यः, सारं प्रकृष्टं चन्दनादि, अन्ववेचणं रचणयोजनादि*, अव्यभि-

* अवेचणप्रयोजनादीति पाठान्तरम् ।

चारेण याथातथ्येन समये नियमबन्धे प्रथमकृते व्यवस्थिताः कुर्य्युः ।

व्यासः ।

समक्षमसमक्षं वाऽवक्षयन्तः परस्परम् ।
परस्परानुसारेण* प्रकुर्य्युः क्रयविक्रयौ ॥

बृहस्पतिः ।

परीक्षकाः साक्षिणश्च तएवोक्ताः परस्परम् ।
सन्दिग्धेऽर्थे वञ्चनायां न चेद्विद्वेषसंयुताः† ॥

तएव सम्भूयसमुत्थायिन एव ।

तथा ।

यः कश्चिद्वञ्चकस्तेषां विज्ञातः क्रयविक्रये ।
शपथैः स विशोध्यः स्यात्सर्व्ववादेष्वयं विधिः ॥
क्षयो हानिर्यदा तत्र दैवराजकृताद्भवेत् ।
सर्व्वेषामेव सा प्रोक्ता कल्पनीया यथांशतः ॥

शपथैरिति प्रमाणमात्रोपलक्षणम् । प्रमाणान्तरस्यापि सम्भवात् क्षयोमूलहानिः, हानिर्लाभहानिः ।

अस्यापवादमाह स एव ।

अनिर्दिष्टो वार्य्यमाणः प्रमादाद्यस्तु नाशयेत् ।
तेनैव तद्भवेद्देयं सर्व्वेषां समवायिनाम् ॥

---

* नानापण्यानुसाराच्चेति पाठान्तरम् ।

† न चेद्द्वेषसंयुता इति, न तद्विद्वेषसंयुता इति च, पाठान्तरम् ।

नारदः ।

प्रमादान्नाशितं दाप्यः प्रतिषिद्धकृतञ्च यत् ।
असन्दिष्टन्तु यः कुर्य्यात्सर्व्वैः सम्भूयकारिभिः ॥

याज्ञवल्क्यः ।

प्रतिषिद्धमनादिष्टं प्रमादाद्यच्च नाशितम् ।
स तद्दद्यादिप्लवाच्च* रक्षिता दशमांशभाक् ॥

बृहस्पतिः ।

राजदैवभयाद्यस्तु स्वशक्त्या परिपालयेत् ।
तस्यांशं दशमं दत्त्वा† गृह्णीयुस्तेऽंशतोऽपरम् ॥

नारदः ।

दैवतस्कर-राजाग्निव्यसने समुपस्थिते ।
यस्तत्स्वशक्त्या रक्षेत्तु तस्यांशोदशमः स्मृतः‡ ॥

व्यसनमात्रे तात्पर्य्यम् ।

कात्यायनः ।

चौरतः सलिलादग्नेर्द्रव्यं यस्तु समाहरेत् ।
तस्यांशो दशमोदेयः सर्व्वद्रव्येष्वयं विधिः ॥

समाहरेत् रक्षेत् । सर्व्वद्रव्येष्वनेकस्वामिकेष्वपीत्येके तन्न प्रकरणविरोधात्, नारदवाक्येन सहैकार्थतां मन्यमानाभ्यां कामधेनुहलायुधाभ्यामलिखनाच्च ।

---

* दद्यादिप्लवाद्येति पाठान्तरम् ।

† लब्धेति पाठान्तरम् ।

‡ दशमोंशस्त इति पाठान्तरम् ।

याज्ञवल्क्यः।

जिह्मं त्यजेयुर्निर्लाभमशक्तोऽन्येन कारयेत्।

जिह्मं वञ्चकं* निर्लाभं मूलमात्रं दत्त्वा बहिः कुर्य्युः। यस्तु-जिह्मएवासमर्थः, सोऽन्यं समर्थं प्रतिनिधिं कुर्य्यादित्यर्थः।

अशक्तविषयएव विशेषमाह नारदः।

एकस्य चेत्स्याद्व्यसनं दायादोऽस्य तदाप्नुयात्।
अन्यो वाऽसति दायादे शक्ताश्चेत्सर्व्वएव च॥

एकस्याशक्तौ सम्भूयसमुत्थायिमध्ये यस्तु तस्य दायादः, स तद्व्यवहारं कृत्वा दशमांशमाप्नुयात्। तस्याप्यभावे सम्भूयकारिणां मध्ये यः कश्चिदेकः स्वव्यापारतदीयव्यापारशक्तः स सर्व्वव्यापारं† कृत्वा दशमांशमाप्नुयात्। समशक्तास्तु सम्भूयसमुत्थायिनः सर्व्वएव तद्व्यापारं कृत्वा दशमांशमाप्नुयुरित्यर्थः।

इदानीं सम्भूयकारिणां मध्ये एकस्मिन्मृते यत्कार्य्यं तदाह नारदः।

कश्चिच्चेत्सञ्चरन्देशात्प्रेयाद्भ्यागतो वणिक्।
राजास्य भाण्डं तद्रक्षेद्यावद्दायाददर्शनम्॥

* जिह्मवञ्चकमिति पाठान्तरम्।

† स्वव्यापारमिति पाठः साधुतया प्रतिभाति।

बृहस्पतिः ।

यदा तत्र वणिक्कश्चित्प्रमीयेत प्रमादतः ।
तस्य भाण्डं दर्शनीयं नियुक्तै राजपूरुषैः ॥
यदा कश्चित्समागच्छेत्तस्य ऋक्थहरो नरः ।
स्वाम्यं विभावयेदन्यैः स तदा लब्धुमर्हति ॥

आभ्यां दायाधिकारः प्रतिपादितः ।

अथ नारदः ।

दायादेऽसति बन्धुभ्यो ज्ञातिभ्योऽपि* तदर्पयेत् ।
तदभावे सुगुप्तन्तु धारयेद्दश वत्सरान् ॥

तत्र प्रथमं† बन्धुस्तदभावे ज्ञातिरवाप्नुयात् । अत्र च वाक्यान्तरपरामर्शात् ज्ञात्यभावे मातुलादीनामधिकार इति हलायुधः । बन्धुज्ञाती च सन्निहितसम्बन्धिनौ दायादातिरिक्तौ ।

बृहस्पतिः ।

राजाददीत षड्भागं नवमं द्वादशं तथा ।
शूद्रविट्क्षत्रजातीनां विप्राद्गृह्णीत विंशकम् ॥
त्र्यब्दादूर्द्ध्वन्तु‡ नागच्छेद्यत्र स्वामी कथञ्चन ।
तदा गृह्णीत तद्राजा ब्रह्मस्वं ब्राह्मणान् अर्पयेत् ॥

ब्राह्मणान् अर्पयेत् अन्यब्राह्मणेभ्योऽर्पयेदित्यर्थः ।

---

* ज्ञातिभ्योवेति पाठान्तरम् ।
† अर्थे इति पाठान्तरम् ।
‡ त्र्यब्दपूर्णन्विति पाठान्तरम् ।

बौधायनः।

अब्राह्मणस्य प्रनष्टस्वामिकमृक्थं संवत्सरं परिपाल्य राजा हरेत्।

नारदः।

अस्वामिकमदायादं दशवर्षस्थितं ततः।
राजा तदात्मसात्कुर्य्यादेवं धर्म्मो न हीयते॥

अस्वामिकं प्रमीतस्वामिकमदायादं दायादादिरिक्थहरशून्यम्। अत्र च एकाब्दत्र्यब्ददशाब्दानां प्रत्यासन्नदूरदूरतरदूरतमाद्यवस्थितदायादागमनापेक्षया व्यवस्था कार्य्या।

तथा।

ऋत्विजां व्यसनेऽप्येवमन्यस्तत्कर्म्म विस्तरेत्।
लभेत दक्षिणाभागं स तस्मात्सम्प्रकल्पितम्॥

व्यसने असामर्थ्ये।

बृहस्पतिः।

एवं क्रियाप्रवृत्तानां यदि कश्चिद्विपद्यते।
तद्बन्धुना क्रिया कार्य्या सर्व्वैर्वा सहकारिभिः॥

क्रिया आर्त्विज्यादिका।

शङ्खलिखितौ।

तत्र चेदनुप्राप्ते सवने ऋत्विङ्म्रियेत, तत्र* किं कार्य्य-

---

* तत इति पाठान्तरम्।

मिति जिज्ञासा* तस्य सगोत्रः शिष्यो वा तत्कार्यमनुपूरयेत्। अथ चेद्बान्धवः ततोऽन्यम् ऋत्विजं वृणुयात्।

मनुः।

ऋत्विग्यदि वृतो यज्ञे स्वकर्म्म परिहापयेत्।
तस्य कर्म्मानुसारेण देयोऽंशः सहकर्तृभिः॥

स्वकर्म्म परिहापयेत् व्याध्यादिना दोषेण,† तदा तस्य देयो दक्षिणांशः। तत्र क्रतुदक्षिणा‡ यावती, यावच्च तेन कृतं तदाकलय्य दक्षिणांशस्तस्मै देयः।

तथा।

दक्षिणासु च दत्तासु स्वकर्म्म परिहापयन्।
कृत्स्नमेव लभेतांशमन्येनैव च कारयेत्॥
सर्व्वेषामर्द्धिनो मुख्यास्तदर्द्धेनार्द्धिनोऽर्द्धिनः।
तृतीयिनस्तृतीयांशाश्चतुर्थांशास्तु पादिनः§॥

अस्यार्थः। ज्योतिष्टोमे षोड़शऋत्विजां गोशतं दक्षिणा विहिता, तत्र षोड़शर्त्विजां मध्ये केषां कियानंश इत्याकाङ्क्षायां मुख्या होत्रध्वर्य्युब्रह्मोद्गातारः अर्द्धिनः अग्रिमसंख्या-पूरणानुरोधेन अर्द्धमष्टचत्वारिंशद्गावस्तास्तेभ्यो दातव्याः। अपरे

---

* जिज्ञासतीति पाठान्तरम्।

† दोषनिमित्तेनेति पाठान्तरम्।

‡ तत्क्रतुदक्षिणेति पाठान्तरम्।

§ चतुर्थांशिनः पादिन इति पाठान्तरम्।

मैत्रावरुणप्रतिप्रस्थोद्व*ब्राह्मणाच्छंसिप्रस्तोतारः मुख्यांशार्द्धिनः। तेभ्यश्चतुर्विंशतिर्गावो दातव्याः। अपरे अच्छावागनेष्टृग्नीध्र-प्रतिहर्त्तारो मुख्यांशतृतीयांशभागिनः। तेभ्यः षोड़श गावो दातव्याः। अपरे ग्रावस्तोदुन्नेतृपोतृसुब्रह्मण्याः मुख्यांशचतुर्थांश-भागिनः। तेभ्यो द्वादश गावो दातव्याः। अत्र चार्द्धिनो दीचयतीत्यादि† द्वादशाहे सिद्धवदर्थवाददर्शनादेवंरूपा भाग-कल्पना क्रियते‡ इति।

तथा।

यस्य कर्म्मणि यास्तु स्युरुक्ताः प्रत्यंशदक्षिणाः।

स एव ता आददीत भजेरन् सर्व्वएव वा॥

प्रत्यंशदक्षिणाः अंशमंशं प्रति ऋत्विग्विशेषसम्बन्धेन§ धनं वि-भज्य दक्षिणाः कथिताः। यथाभिषेचनीये हिरण्मयी प्राकाशा-वध्वर्य्यवे ददातीत्याद्याः¶ ताः किं यस्य कर्म्मणि यत्सम्बन्धे-नाम्नाताः¶ तेनैव ग्रहीतव्याः उतासौ द्वारमात्रं, सर्व्वे वा विभज्य गृह्णीरन्निति संशयः।

---

* प्रतिप्रस्थात्रिति पाठान्तरम्।

† दीचयति तोषयतीत्यर्थ, दीचयन्तीत्यपि पाठ।

‡ सिद्धवदिति—यथा द्वादशाहसाध्ये शतगोदक्षिणाविभाग उक्तस्तथा अन्यत्र द्वादशशतगोदक्षिणाविभागोऽनुक्तोऽपि एव रीत्या कल्पनीय इति भाव।

§ ऋत्विग्विशेषत्वेनेति ऋत्विग्विशेषादिति च पाठान्तरम्।

¶ अभिषेचनीये अभिषेचनप्रकरणे हिरण्मयी काञ्चनमयौ प्राकाशौ दीप्तत्वा-दित्येके, स्वर्णमयदर्पणावित्यपरे इति शतपथब्राह्मणे भाष्यम्।

अत्र संशये निर्णयार्थं मनुविष्णू ।

रथं हरेदथाध्वर्य्युर्ब्रह्माधाने च वाजिनम् ।
होता चापि हरेदश्वमुद्गाता चाप्यनः क्रये ।

केषाञ्चिच्छाखिनामाधाने अध्वर्य्यवे रथ आम्नायते, ब्र
वेगवानश्वः, होत्रे चाश्वः, उद्गात्रे सोमोद्वाहकमनः श्क
क्रये सोमक्रये। तदिह यस्यैव यदाम्नातं स एव तद्ग
एवं व्यवस्थायां ददातिर्मुख्यार्थः पुरुषयोगश्च नादृष्ट
स्यादिति* ।

वृहस्पतिः ।

आगन्तुकाः क्रमायातास्तथा चैव स्वयंकृताः ।
त्रिविधास्ते समाख्याता वर्त्तितव्यं तथैव तैः ॥

शङ्खलिखितौ ।

अथ ऋत्विजि वृत्ते पश्चादन्यं वृणुयात्पूर्व्वहृतस्
दक्षिणा, पश्चाद्वृतः किञ्चिल्लभेत, प्रवर्त्तेत्तत्कालं निमि

---

* ददातिर्दाधातुर्मुख्यार्थे स्वस्वत्वध्वंसानन्तरपरस्वत्वोत्पत्त्यनुकूलत्यागरूपार्थ, या
न ममेदमस्तुकस्य भवतु इत्येवमिच्छारूप । प्रकृते अध्वर्य्यवे ददातीत्यत्र अध्व
रिद भवत्विति निर्द्दिष्टसम्प्रदानकी दातुरिच्छारूपत्यागो यद्याध्वर्य्युरेव ग्रहीता स्या
त्तदेव तत्र मुख्यार्थत्वम् । तस्य तु दातृत्वकल्पने न तदर्थत्वमिति भाव । पुरुषयो
दारभूतपुरुषयोगश्च इत्यर्थे । यत्र एकस्य नाम्ना दीयते यद्दीता च्चन्यरोऽपि, तत्र एव
नामोल्लेख अदृष्टार्थे इति भाव । यदि कर्म्मकारिणे दीयते, तदा तद्दान दृष्ट
स्यादृष्टप्रयोजकत्वेतनकल्पनाभाव । यस्मै कस्मैचिद्दानम् अदृष्टार्थमेव । न चैतापि
दृष्टार्थत्वे अदृष्टार्थस्य दीयमयाद्गीकारादिति बोध्यम् ।

वा अपेक्ष्य यक्ष्यमाणस्तत्कालमुदीक्षेत, नान्तरा यजेत स्यादात्ययिको वा, तं क्रतुं समापयेत् । प्रोष्य प्रत्यागतस्य किञ्चिल्लभेत । अथ चेत्पतितेष्विह प्रवसेत्कामादनुप्राप्ते सवने ऋत्विक् शतं दण्ड्यः, स एव वा दुष्टः तस्य ऋत्विक्सोपाध्यायः । एवं व्याधितपतितोन्मत्तप्रहीणप्रध्वस्तेषु सम्प्रसादकारणमृत्विक्षु । कामाच्चेदपतितं याज्यं त्यजेदृत्विक्, प्राप्नुयाद्द्विशतं दण्डम् । याज्यश्चैव तदेवाप्नुयात्त्यागे ऋत्विजोऽपतितस्य । कामं पतितमयोग्यं त्यजेद्याज्यश्चाभिशस्तमदातारम् ।

अस्यार्थः । पूर्व्वहुतेषु ऋत्विक्षु मध्ये एकस्य मरणादौ हृत्ते यदान्यं हणुते, पूर्व्वाहृतस्य दक्षिणा, तन्मरणपक्षे तद्दायादानां कर्म्मानुरूपा सा । पश्चादाहृतः कश्चित् किञ्चित् कर्म्मानुरूपं लभते* । यदा तु कालं मासपक्षादिकं निमित्तं वान्यदपेक्ष्य उन्नाव्य गतः, तदा यजमानस्तं प्रतीक्षेत, नान्तरा यजेत । आत्ययिको वा, समयातिक्रमप्रतिसन्धानवान्† क्रतुमृत्विगन्तरेण समापयेत् । पूर्व्वहुतश्च‡ ऋत्विक् प्रोष्य प्रवासं कृत्वा प्रत्यागतः किञ्चित् पारितोषिकं यजमानाल्लभेत ।

---

* लभेतेति पाठान्तरम् ।

† समर्येति—समयातिक्रमे यत् प्रतिसन्धान कारण तदातिर्य्यं । प्रतिसन्धान वानित्यपि पाठ, तत्रापि सएवार्थ इति बोध्यम् ।

‡ पूर्व्वश्चेति पाठान्तरम् ।

यजमानप्रतिषिद्ध- ऋत्विक्कामाद्व्रजन् पणशतं दण्ड्यः । अथ स्वभावत एव दुष्ट इति विज्ञायते, तदा यजमानस्य ऋत्विक्कुल-परीक्षाधिकृत उपाध्याय एव दण्ड्यः । एवं व्याधिते पतिते उन्मत्ते प्रक्षीणे अभिशापादिना त्यक्ते प्रध्वस्ते कर्म्माक्षमताहेतु-वार्द्धके सम्प्रसादकरणं, तं सन्तोष्य ऋत्विगन्तरवरणेऽप्यनुज्ञा-ग्रहणम् ।

मनुः ।

ऋत्विजं यस्त्यजेद्याज्यो याज्यमृत्विक् त्यजेद्यदा* ।
शक्तं कर्म्मस्वदुष्टञ्च तयोर्दण्डः शतं शतम् ॥

द्विशतैकशतदण्डयोः कामाकामकृतधनवत्ताधनवत्ताभ्यां व्यवस्था।

नारदः ।

ऋत्विक् च त्रिविधो ज्ञेयः पूर्व्वैर्जुष्टः स्वयं कृतः ।
यदृच्छया च यः कुर्य्यादार्त्विज्यं प्रीतिपूर्व्वकम् ॥
ऋत्विग्याज्यमदुष्टं यस्त्यजेदनपकारिणम् ।
अदुष्टञ्चर्त्विजं याज्यो विनेयौ तावुभावपि ॥
क्रमागतेष्वेष धर्म्मो वृतेष्वृत्विक्षु च स्वयम् ।
यादृच्छिके तु संयोग्ये त्यजतो नास्त्येव† किल्बिषम् ॥

---

* यदीति पाठान्तरम् ।

† [illegible] पाठान्तरम् ।

पूर्व्वैर्जुष्टः पूर्व्वपुरुषैरार्त्त्विज्येन सेवितः क्रमागत इति यावत्। तयोर्व्वे ऋत्विजि।

बृहस्पतिः।

प्रयोगं कुर्व्वते ये तु हेमधान्यरसादिना।
समन्यूनाधिकैरंशैर्लाभस्तेषां तथाविधः॥
बहूनां सम्मतो यस्तु दद्यादेको धनं नरः।
करणं कारयेद्वापि सर्व्वैरेव कृतं भवेत्॥

प्रयोगं लाभार्थम्। करणं लेख्यादि।

तथा।

ज्ञातिसम्बन्धिसुहृदामृणं देयं सबन्धकम्।
अन्येषां लग्नकोपेतं लेख्यसाक्षियुतं तथा॥
स्वेच्छादेयं हिरण्यन्तु रसधान्यन्तु सावधि।
देयस्थित्या प्रदातव्यं ग्रहीतव्यं तथैव तत्॥

हिरण्यदाने अवधौ स्वेच्छा, रसादौ त्ववधेरावश्यकत्वम्।

तथा।

समवेतैस्तु यद्दत्तं प्रार्थनीयं तथैव तत्।
न याचते च यः कश्चिल्लाभात्स परिहीयते॥
प्रयोगः पूर्व्वमाख्यातः समासेनोदितोऽधुना।
श्रूयतां कर्षकादीनां विधानमिदमुच्यते॥
वाह्यकर्षकवीजाद्यैः क्षेत्रोपकरणेन च।
ये समानास्तु तैः सार्द्धं कृषिः कार्य्या विजानता॥
विवीते नगराभ्यासे तथा राजपथस्य च।

ऊषरं मूषकव्याप्तं क्षेत्रं यत्नेन वर्जयेत् ॥
गर्त्तानूपं सुसेकञ्च समन्तात्क्षेत्रसंयुतम् ।
*प्रकृष्टञ्च कृतं काले सामयग्फलमश्नुते ॥*
कृशातिवृद्धं क्षुद्रञ्च रोगिणं प्रपलायिनम्* ।
काणं खञ्जञ्च नादद्याद्वाह्यं प्राज्ञः कृषीवलः ॥
वाह्यबीजात्ययाद्यस्य क्षेत्रहानिः प्रजायते ।
तेनैव सा प्रदातव्या सर्व्वेषां कृषिजीविनाम् ॥
एष धर्म्मः समाख्यातः कीनाशानां पुरातनः ।

संवीतमन्येन यवसाद्यर्थं रक्षितो भूभाग उच्यते । प्रकृष्टं प्रकर्षेण कृष्टम् । काले माघादौ, कीनाशानां कृषीवलानाम् ।

तथा ।

हिरण्यरूप्यसूत्राणां काष्ठपाषाणचर्म्मणाम् ।
संस्कर्त्ता च कलाभिज्ञः शिल्पी प्रोक्तो मनीषिभिः ॥
हेमकारादयो ये तु शिल्पं सम्भूय कुर्व्वते ।
कर्म्मानुरूपं निर्व्वेशं लभेरंस्ते यथांशतः ॥

निर्व्वेशं वेतनम् । कुर्य्युरिति पाठः कल्पतरुहलायुधयोः ।

कात्यायनः ।

शिक्षकाभिज्ञकुशला आचार्य्याश्चेति शिल्पिनः ।
एकद्वित्रिचतुर्भागान् हरेयुस्ते यथोत्तरम् ॥

---

* रोगिणञ्च पलायिनमिति पाठान्तरम् ।

अत्र शिल्पिकाभिप्रकुशलाचार्य्याश्चत्वारो यथोत्तरं चतुर्नाम्नानो-
त्कर्षेण भिद्यन्ते।

बृहस्पतिः।

हर्म्यं देवगृहं वापी चार्म्मिकोपस्कराणि च।
सम्भूय कुर्व्वतामेषां प्रमुखो द्व्यंशमर्हति॥

प्रमुखः प्रधानभूतः, तत्र कात्यायनीयमुपदेष्टोपदेष्टृत्वभाषा-
पन्नानाश्रित्य, ततोऽन्यत्र प्रमुखस्य द्व्यंशहरत्वमित्यविरोधः

तथा।

नर्त्तकानामेष एव धर्म्मः सद्भिरुदाहृतः।
तालज्ञो लभतेऽध्यर्द्धं गायनास्तु समांशिनः॥
स्वाम्याज्ञया तु यच्चौरैः परदेशात्समाहृतम्।
राज्ञे दत्त्वा तु षड्भागं हरेयुस्ते* यथांशतः॥
चतुरोंऽशान् तथा मुख्यः शूरस्त्र्यंशमवाप्नुयात्।
समर्थस्तु हरेद्द्व्यंशं शेषास्त्वन्ये समांशिनः॥

अर्द्धमधिकं यत्र तदध्यर्द्धम्। मुख्यो बुद्धिशरीरव्यापारवान्।
शूरः साहसिकः। समर्थः अन्यापेक्षया व्यापारवान्।

कात्यायनः।

परराष्ट्रादनं यत्स्याच्चौरैः स्वाम्याज्ञया हृतम्।
राज्ञे दशांशमुद्धृत्य विभजेरन् यथाविधि॥

---

* भजयुक्ते इति पाठान्तरम्।

चौराणां मुख्यभूतस्तु चतुरोंऽशांस्ततो हरेत्।
शूरोंऽशांस्त्रीन् समर्थौ द्वौ शिष्टास्त्वेकैकमेव तु॥
तेषाञ्च प्रसृतानां यो ग्रहणं समवाप्नुयात्।
तन्मोचणार्थं यद्दत्तं तस्य कार्य्या समा क्रिया॥

अत्र राज्ञः षड्भागदशमभागौ परदेशसन्निधानासन्निधानादिना बोद्धव्यौ। तेषाञ्च प्रसृतानामिति प्रसृतानां चौरयितुमितस्ततो गतानां यः कश्चिद्ग्रहणमवरोधनं प्राप्तः सन् धनं दत्त्वात्मानं मोचयति, तद्धनं सर्व्वैरेव विभज्य शोधनीयमित्यर्थः।

तथा।

वणिजां कर्षकाणाञ्च चौराणां शिल्पिनां तथा।
अनियम्यांशकर्त्तॄणां सर्व्वेषामेव निर्णयः॥

अनियम्यांशकर्त्तॄणामंशमनियम्य कृतिमताम्।

इति विवादरत्नाकरे सम्भूयसमुत्थानतरङ्गः।

---

# अथ दत्ताप्रदानिकम्।

तत्र बृहस्पतिः।

एषाखिलेनाभिहिता सम्भूयोत्थाननिष्कृतिः।
अदेयदेयदत्तानामदत्तस्य च कथ्यते॥

नारद.।

दत्त्वा द्रव्यमसम्यग्यः पुनरादातुमिच्छति।
दत्ताप्रदानिकं नाम तद्विवादपदं स्मृतम्॥
अदेयमथ देयञ्च दत्तञ्चादत्तमेव च।
व्यवहारेषु विज्ञेयो दानमार्गश्चतुर्विधः॥
तत्र त्वष्टावदेयानि देयमेकविधं स्मृतम्।
दत्तं सप्तविधं विद्याददत्तं षोड़शात्मकम्॥

बृहस्पतिः।

सामान्यं पुत्रदाराधिसर्व्वस्वन्यासयाचितम्।
प्रतिश्रुतं तथान्यस्य न देयन्त्वष्टधा स्मृतम्॥

सामान्यमनेकस्वामिकं, याचितं व्यापारार्थं याचित्वानीतम्।

नारदः।

अन्वाहितं याचितकमाधिः साधारणञ्च यत्।
निक्षेपः पुत्रदारञ्च* सर्व्वस्वञ्चान्वये सति॥

---

* पुत्रदाराश्चेति पाठान्तरम्।

आपत्स्वपि हि कष्टासु वर्त्तमानेन देहिना ।
अदेयान्याहुराचार्य्या यच्चान्यस्मै प्रतिश्रुतम् ॥

याज्ञवल्क्यः ।

स्वं कुटुम्बाविरोधेन* देयं दारसुतादृते ।
नान्वये सति सर्व्वस्वं यच्चान्यस्मै प्रतिश्रुतम् ॥

दक्षः ।

सामान्यं याचितं न्यास आधिर्दाराश्च तद्धनम् ।
अन्वाहितञ्च† निक्षेपः सर्व्वस्वञ्चान्वये सति ॥
आपत्स्वपि न देयानि नव वस्तूनि पण्डितैः ।
यो ददाति स मूढ़ात्मा प्रायश्चित्तीयते नरः ॥

अत्र चादेयपरिगणनप्रवृत्तानां मुनीनां स्वस्वोक्तान्यव्यवच्छेदे न तात्पर्य्यम् ।

कात्यायनः ।

विक्रयञ्चैव दानञ्च न नेयाः स्युरनिच्छवः ।
दाराः पुत्राश्च‡ सर्व्वस्वमात्मन्येव तु योजयेत् ॥
आपत्काले प्रकर्त्तव्यं दानं विक्रय एव वा ।
अन्यथा न प्रवर्त्तेत इति शास्त्रविनिर्णयः ॥

अत्र पूर्व्ववाक्ये दारपुत्रयोरापत्सु कष्टास्वपि दानादिनिषेधात् सर्व्वस्वस्य चान्वये सति कष्टास्वप्यापत्स्वेतन्निषेधात्

---

* कुटुम्बस्याविरोधेनेति पाठान्तरम् ।

† चाहितञ्चैवेति पाठान्तरम् ।

‡ पुत्रश्चेति पाठान्तरम् ।

प्रायत्काले तु कर्त्तव्यमित्यनेन दानादिबोधनं दारपुत्रयोरिच्छामादाय सर्व्वस्वस्य चान्वयसम्मतिमादाय, अनिच्छुदारपुत्रयोरन्वयाननुमत्या च सर्व्वस्वस्य न दानादीत्यविरोधः।

वशिष्ठः।

> शुक्रशोणितसम्भवः पुत्रो मातापितृनिमित्तकः, तस्य दानविक्रयत्यागेषु मातापितरौ प्रभवतः। न त्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा सहि सन्तानाय पूर्व्वेषां न तु स्त्री पुत्रं दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुः।

न तु स्त्री पुत्रं दद्यादित्यत्र दद्यादित्यनेनाजहत्स्वार्थलक्षणया विक्रयादिकमपि विवक्षितम्। भर्त्तनुज्ञायास्तत्रापि न्यायसाम्येन प्रयोजकत्वात्*, तदुक्तं हारीतेन, आदाने वा विसर्गे वा न स्त्री स्वातन्त्र्यमर्हति।

बृहस्पतिः।

> कुटुम्बभक्तवसनाद्देयं यदतिरिच्यते।
> मध्वास्वादो विषं पश्चाद्दातुर्धर्म्मोऽन्यथा भवेत्॥

कात्यायनः।

> सर्व्वस्वं गृहवर्ज्जन्तु कुटुम्बभरणाधिकम्।
> यद्द्रव्यं तत्स्वकं देयमदेयं स्यात्ततोऽन्यथा॥

---

* न्यायसाम्यस्यापीति पाठान्तरम्।

बृहस्पतिः ।

समागमाद्गृहवैवाह्यदत्तेन्त्रं प्रदीयते ।
पित्र्यं वाथ स्वयंप्राप्तं तद्दातव्यं विपश्चितम् ॥
स्वेच्छादेयं स्वयंप्राप्तं बन्धाचारेण बन्धकम् ।
वैवाहिके क्रमायाते सर्व्वं दानं न विद्यते ॥
सौदायिकं क्रमायातं शौर्य्यप्राप्तञ्च यद्धनम् ।
स्त्रीज्ञातिस्वाम्यनुमतं दत्तं सिद्धिमवाप्नुयात् ।
अविभक्ता विभक्ता वा दायादाः स्थावरे समाः ।
एको ह्यनीशः सर्व्वत्र दानाधमनविक्रये ॥
सप्त वित्तागमा धर्म्या दायो लाभः क्रयो जयः ।
प्रयोगः कर्म्मयोगश्च सत्प्रतिग्रह एव च ॥ इति मनूक्ताः ।

अत्र दायोऽन्वयागतं धनं, लाभो निध्यादेः, जयोऽत्र संग्रामे शत्रोरभिभवः, प्रयोगः कुसीदम्, कर्म्मयोगः कृषिवाणिज्यादीति गृहस्थकाण्डे कल्पतरुः । अत्र च सप्तविधशौर्य्याद्यागमलब्धाद्धनादुद्धृत्य तद्धनं दातव्यमित्यक्षरार्थः । वस्तुतस्तु कुटुम्बभक्तवसनोचितधनाधिकम् स्वत्वहेतुना लब्धं गृहवैवाहिकं देयं न तु स्वत्वहेतुमन्तरेणाप्राप्तं देयमित्यर्थः । अतएव तद्वनागममाश्रित्येत्यर्थे इत्याह कल्पतरुः । विपश्चितं मुनीनां यन्नुमिष्टमित्यर्थः । बन्धाचारेण बन्धकमिति बन्धकं यथा स्वसम्बन्धि तथा परस्यापि कुर्य्यादित्यर्थः । वैवाहिक इत्यत्र वैवाहिकपदेन शौर्य्यार्जितमपि विपश्चितम् । सर्व्वस्वदानम् अन्वयानुमत्या, अननुमत्यापि च यद्दानं तत्सर्व्वं विद्यते ।

तेनैतेषु त्रिष्वपिमवाक्यानुसारात्परापेक्षयैव दानम्। दायादः पुत्रादिः दायमादत्ते इति व्युत्पत्त्या। तथाच वृत्त्यधिकारे दायाद्यं शिलोञ्छौ अन्यस्यापरिगृहीतमित्यापस्तम्बवाक्यस्य व्याख्याने दायादः पुत्रादिरिति कल्पतरुः*। प्रकाप्रकारोऽपि दायादान् पुत्रानित्यादि सम्मतिजिज्ञासेत्यन्तं वदन्निममेवार्थमाह। एवञ्च क्रमायाते सामान्येन स्वत्वाबाधेन स्वभूते स्वाम्यन्तरमपेक्ष्यैव दानम्। वैवाहिकशौर्य्यादिव्यतिरिक्त† स्वयंलब्धे तु कुटुम्बभक्तवसनातिरिक्ते सर्व्वस्मिन् स्वेच्छयैव दानम्। सौदायिकशौर्य्यप्राप्तयोस्तु‡ स्वय लब्धयोः स्त्र्यपेक्षास्वाम्यपेक्षाभ्यां§ दानम्। स्थावरे तु क्रमायाते विभक्तेऽपि स्वाम्यन्तरापेक्षयैव दानमिति सभागमादित्यादि दानाधमनविक्रय इत्यन्तबृहस्पतिवाक्यार्थसङ्क्षेपः। यत्तु केनाप्यविभक्तस्थावरस्यैवात्र तात्पर्य्यविषयत्वमित्युक्तं तन्न, विभक्ता इत्यत्र विषयाकाङ्क्षायामेतद्वाक्यबोधितस्थावरस्यैव बाधमन्तरेण विषयत्वौचितत्वात् धनान्तरविभक्तनानापुरुषस्वभूतेऽपि सामान्येत्यादिनैव वाक्येन बृहस्पतिना एकास्वातन्त्र्यबोधनाद्¶

* कल्पतरुकार इति पाठान्तरम्।

† वैवाहिकशौर्य्यातिरिक्तेति पाठान्तरम्।

‡ सौदायिकशौर्य्यप्राप्तयोस्त्विति पाठान्तरम्।

§ स्त्र्यपेक्षया स्वाम्यपेक्षयेति पाठान्तरम्।

¶ स्वातन्त्र्यबोधनादिति पाठान्तरम्।

एतस्य अनारभ्यत्वापत्तेश्च। कश्चित्तु सप्तागमादित्यादिवाक्ये विवक्षितपदेन दायादानुमतिरपेक्षणीया इत्यभिमतं* स्वेच्छा-देयं स्वयंप्राप्तमित्यादिवाक्यस्य† स्थावरेतरपरत्वादाह। तन्न, विवक्षितपदेन परानुमतेरनुपस्थापनात्‡ सङ्कोचे प्रमाणा-भावाद्व्यवहारविरोधाच्च।

याज्ञवल्क्यः।

प्रतिग्रहः प्रकाशः स्यात्स्थावरस्य विशेषतः।
देयं प्रतिश्रुतञ्चैव दत्त्वा नापहरेद्बुधः॥

कात्यायनः।

स्वेच्छया यः प्रतिश्रुत्य ब्राह्मणाय प्रतिग्रहम्।
न दद्याद्दणवद्दाप्यः प्राप्नुयात्पूर्वसाहसम्॥

मत्स्यपुराणे।

प्रतिश्रुत्याप्रदातारं सुवर्णं दण्डयेन्नृपः।

हारीतः।

प्रतिश्रुत्याप्रदानेन दत्तस्याच्छेदनेन च।§
विविधान्नरकान् याति तिर्य्यग्योनौ च जायते॥

---

* अभिप्रेतमिति पाठान्तरम्।

† वाक्ये इति पाठान्तरम्।

‡ अनुपस्थानादिति पाठान्तरम्।

§ प्रतिश्रुतार्थादानेन दत्तस्य चैदनेन चेति पाठान्तरम्।

वाचा यत्र प्रतिज्ञातं कर्म्मणा नोपपादितम्।
ऋणं तद्धर्म्मसंयुक्तमिह लोके परत्र च॥

गौतमः।

प्रतिश्रुत्याप्यधर्म्मसंयुक्ताय न दद्यात्।

अधर्म्मोऽत्र दानानर्हताप्रयोजकः।

बृहस्पतिः।

भृतिस्तुष्ट्या पण्यमूल्यं स्त्रीशुल्कमुपकारिणे।
श्रद्धानुग्रहसंप्रीत्या दत्तमष्टविधं विदुः॥

दत्तस्य सप्तविधत्वमभिधाय* विभागे नारदः।

पण्यमूल्यं भृतिस्तुष्ट्या स्नेहात्प्रत्युपकारतः।
स्त्रीशुल्कानुग्रहार्थञ्च दत्तं दानविदोविदुः॥

पण्यमूल्यं क्रीतमूल्यं, भृतिर्वेतनं कृतकर्म्मणे दत्तं, तुष्ट्या वन्दि-चारणादिभ्यो दत्तं, स्नेहात् पुत्रादिभ्यो दत्तं, प्रत्युपकारतः उपकृतवते प्रत्युपकारतया दत्तं, स्त्रीशुल्कं कन्यापरिणयार्थं तत्सम्बन्धिने दत्तम्, अनुग्रहार्थं धर्म्मार्थम्। एतच्च बृहस्पतिना श्रद्धादत्तत्वेनाभिहितम्। अनुग्रहसम्प्रीत्योस्तुष्टितोऽभेदमादाय नारदीयं सप्तत्वं, भेदमादाय वार्हस्पत्यमष्टत्वाभिधानमित्य-विरोधः। इतरेतरव्यवच्छेदे न तात्पर्य्यम्।

---

* सप्तविधत्वमादायेति पाठान्तरम्।

दक्षः ।

मातापित्रोर्गुरौ मित्रे विनीते चोपकारिणि ।
दीनानाथविशिष्टेभ्यो दत्तन्तु सफलं भवेत् ॥

कात्यायनः ।

भयत्राणाय रक्षार्थं तथा* कार्य्यप्रसाधनात् ।
अनेन विधिना दत्तं विद्यात्प्रत्युपकारिकम्† ॥
अविज्ञातोपलब्धार्थं दानं यत्र निरूपितम् ।
उपलब्धिक्रियालब्धं सा भृतिः परिकीर्त्तिता ॥
प्राणसंशयमापन्नं यो मामुत्तारयेदितः ।
सर्व्वस्वं तस्य दास्यामीत्युक्तेऽपि न तथा भवेत् ॥

न तथा भवेत् न तस्य दातव्यमित्यर्थः ।

अदत्तं षोड़शात्मकमिति यदुक्तं तदाह नारदः ।

अदत्तन्तु भयक्रोधकामशोकरुगन्वितैः ।
तथोत्कोचपरीहासव्यत्यासच्छलयोगतः ॥
बालमूढ़ास्वतन्त्रैश्च मत्तोन्मत्तापवर्जितैः ।
कर्त्ता ममायं कर्म्मेति प्रतिलाभेच्छया च यत् ॥

भयं यस्मै दीयते तत एव, क्रोधादयो रुगन्ताः प्रकृतिस्थताविरोधिनो विवक्षिताः । उत्कोचोऽग्रे वक्ष्यमाणः । परीहास उपहासो दानाभिसन्धिमन्तरेण दानबोधकवचनमिति

* यथेति पाठान्तरम् ।

† प्रत्युपकारकमिति पाठान्तरम् ।

यावत्। व्यत्यासोऽन्यस्मै दातव्यस्यान्यस्मै दानमन्यस्मिन् दातव्ये अन्यस्य वा यद्दानं, छलं बहु परिभाष्याल्पदानं छलं प्रमाद इति प्रकाशकारादयः। बालोऽत्र कार्य्याकार्य्यनिर्णयाक्षमवयोयोगी। मूढः स्वभावादेव कार्य्याकार्य्यविवेकशून्यः। अस्वतन्त्रः पुत्रदासादिः। मत्तो मदिरादिना। उन्मत्तो वातादिना। अपवर्जितो बन्धुवहिष्कृतः। प्रतिलाभेच्छया सम्प्रदानकर्तृकासत्यवचनमूढतया*। कामधेनुमिताक्षराभ्यां† बालमूढास्वतन्त्रार्त्तेति लिखितं, व्याख्यातञ्च मिताक्षरायाम् आर्त्तोरोगाभिभूत इति। रुगन्वितयासाध्यरोगान्वित इति विवृतम्। कामधेन्वादावपवर्जितमिति पाठः। अपवर्जितं दत्तमिति मिताक्षराहलायुधाभ्यां व्याख्यातञ्च।

कात्यायनः।

कामक्रोधास्वतन्त्रार्त्तक्लीवोन्मत्तप्रमोहितैः।
व्यत्यासाच्च परीहासाद्‡ यद्दत्तं तत्पुनर्हरेत्॥
यदि कार्य्यस्य सिद्ध्यर्थम्§ उत्कोचा या¶ प्रतिश्रुता।
तस्मिन्नपि प्रसिद्धेऽर्थे‖ न देया सा कथञ्चन॥

---

* प्रत्युपकारवचनमूढतयेति पाठान्तरम्।

† कामधेनुमिताक्षरयोरिति पाठान्तरम्।

‡ व्यत्यासपरिहासाभ्यामिति पाठान्तरम्।

§ कार्य्यप्रसिद्ध्यर्थमिति पाठान्तरम्।

¶ स्यादिति पाठान्तरम्।

‖ तस्मिन्नर्थेऽप्रसिद्धे त्विति पाठान्तरम्।

तथा* प्रागेव दत्ता स्यात्प्रतिदाप्यः स तां बलात्।
दण्डश्चैकादशगुणमाहुर्गार्गीयमानवाः॥

अत्रार्त्तेन दत्तं धर्मकार्यमन्तरेण† दत्तं बोद्धव्यम्। सुस्थेनार्त्तेन वा दत्तं श्रावितं धर्मकारणात्। अदत्त्वा तु मृते दाप्यस्तत्सुतोनात्र संशय इति कात्यायनवचनात्।

वृहस्पतिः।

क्रुद्धहृष्टप्रमत्तार्त्तबालोन्मत्तभयातुरैः।
मत्तातिवृद्धनिर्धूतैः सम्मूढ़शोकिरोगिभिः।
नर्मदत्तं तथैतैर्यद्दत्तं तन्नकीर्त्तितम्॥

निर्धूतोऽपवर्जितः। नर्मदत्तं क्रीड़ादत्तम्।

गौतमः।

क्रुद्धहृष्टभीतार्त्तलुब्धबालस्थविरमूढमत्तोन्मत्तवाक्यान्यनृतानि।

वृहस्पतिः।

प्रतिलाभेच्छया दत्तमपात्रे पात्रशङ्कया।
कार्य्ये चाधर्म्मसंयुक्ते स्वामी तत्पुनराप्नुयात्॥

अत्र नारदः।

अपात्रे पात्रमित्युक्ते कार्य्ये चाधर्म्मसंहिते।
यद्दत्तं स्यादविज्ञानाददत्तं तदपि स्मृतम्॥

अधर्म्मसंहिते अधर्म्मसंयुक्ते।

---

* यथेति पाठान्तरम्।

† धर्म्मकार्यमन्तरेणेति पाठान्तरम्।

मनुः।

धर्म्मार्थं येन यद्दत्तं कस्मैचिद्याचते धनम्।
पश्चाच्च न तथा तत्स्यान्न देयं तेन तद्भवेत्॥
यदि संसाधयेत्तत्तु दर्पाल्लोभेन वा पुनः।
राज्ञा दाप्यः सुवर्णं स्यात्तस्य स्तेयस्य निष्कृतिः॥

धर्म्मार्थं याचित्वा गृह्णीते यदि तेन धर्म्मं न करोति, तदा तस्य तदाहरणीयम्। यदि तु स दर्पाल्लोभाद्वा तमर्थं साधयेत्, तदा राज्ञा सुवर्णं दण्डनीय इत्यर्थः।

नारदः।

गृह्णात्यदत्तं यो मोहाद्यश्चादेयं प्रयच्छति।
दण्डनीयावुभावेतौ धर्म्मज्ञेन महीक्षिता॥

अदत्तं षोड़शात्मकं नारदोक्तमेव। तथा अदेयमन्वाहिताद्यष्टविधमेतदुक्तमेव।

अधुना यदुत्कोचमाश्रित्य दत्तमदत्तमुक्तं तदाह कात्यायनः।

स्तेयसाहसिकोद्वृत्तपारदारिकशंसनात्।*
दर्शनाद्वृत्तनष्टस्य तथासत्यप्रवर्त्तनात्॥
प्राप्तमेतैस्तु यत्किञ्चित्तदुत्कोचाख्यमुच्यते।
न दाता तत्र दण्ड्यः स्यान्मध्यस्थश्चैव दण्ड्यते॥

स्तेयञ्च साहसञ्च स्तेयसाहसे, ते यस्य स्तः स स्तेयसाहसिकः, वृत्तनष्टो वृत्तच्युतः, तेन स्तेयसाहसिकोद्वृत्तपारदारिकवृत्त-

* स्तेयसाहसिकधूर्त्तपारदारिकशंसनादिति पाठान्तरम्।

नष्टानां दर्शयिति साक्ष्यादीनामसत्यैः* प्रवर्त्तयिते वा यद्धन स्व
हृतं तत्पूर्व्ववाक्ये मन्तव्यम् । अतस्तत्प्रतिश्रुतमपि अदेयं दत्
मप्याच्छेद्यतया बोद्धव्यं† पूर्व्ववाक्ये । तत्र मध्यस्थोदापक
यो हृत्तः स दण्डनीय । एकादशगुणं गृहीतैव दण्डः ह
यदि कार्य्यस्येत्यादिसहितैतद्वाक्यार्थः‡ । एकादशगुणत्वञ्च
स्वीकृतोत्कोचापेक्षया ।

इति विवादरत्नाकरे दत्ताप्रदानिकतरङ्गः ।



---

* असत्येनेति पाठान्तरम् ।

† गृहीतव्यमिति पाठान्तरम् ।

‡ यदि कार्य्यस्य सिद्ध्यर्थमुत्कोचः स्यात् प्रतिश्रुत्येत्यादि पूर्व्वोक्तवाक्येनान्वित एत
द्वाक्यार्थ इत्यर्थः ।

## अथ अभ्युपेत्याशुश्रूषाविधिः ।*

तत्र बृहस्पतिः ।

अदेयादिकमाख्यातं भृतानामुच्यते विधिः ।
अशुश्रूषाभ्युपेत्यैतत्पदमादौ निगद्यते ॥

पदं विवादपदम् ।

वेतनस्यानपाकर्म्म तदनु स्वामिपालयोः ।
क्रमशः कथ्यते† वादो भृतभेदन्वयन्विदम् ॥

भृतौ मूल्येन तत्कर्म्मकारः । इदं विवादपदम् ।

नारदः ।

अभ्युपेत्य तु शुश्रूषां यस्तां न प्रतिपद्यते ।
अशुश्रूषाभ्युपेत्यैतद्‡ विवादपदमुच्यते ॥
शुश्रूषकः पञ्चविधः शास्त्रेपूक्तो मनीषिभिः ।
चतुर्विधः कर्म्मकरः शेषा दासास्त्रिपञ्चकाः ॥

पञ्चविधत्वादिकमग्रे, त्रिपञ्चकाः पञ्चदशात्मानः§ ।

---

* अथ भृतकविधिरुच्यते ।

† प्रोच्यते इति पाठान्तरम् ।

‡ न शुश्रूषाम् अभ्युपेत्य, शुश्रूषानाश्रयणमित्यर्थः । शुश्रूषामभ्युपेत्येतदिति पाठान्तरम् ।

§ पञ्चदशात्मका इति पाठान्तरम् ।

भृता* इत्यनुवृत्तौ बृहस्पतिः ।

अनेकधा तेऽभिहिता जातिकर्मानुरूपतः ।
विद्याविज्ञानकामार्थनिमित्तेन चतुर्विधाः ।
एकैकः पुनरेतेषां क्रियाभेदात्प्रपद्यते ॥

नारदः ।

शिष्यान्तेवासिभृतकाश्चतुर्थस्त्वधिकर्मकृत् ।
एते कर्मकरा ज्ञेया दासास्तु गृहजादयः ॥
सामान्यमस्वतन्त्रत्वमेषामाहुर्मनीषिणः ।
जातिकर्मकरस्तूक्तो विशेषो वृत्तिरस्ततः ॥

बृहस्पतिः ।

विद्या त्रयी समाख्याता ऋग्यजुःसामलक्षणा ।
तदर्थं गुरुशुश्रूषां प्रकुर्याच्छास्त्रदेशिताम् ॥

नारदः ।

आविद्याग्रहणाच्छिष्यः शुश्रूषेत्प्रयतो गुरुम् ।
तद्वृत्तिर्गुरुदारेषु गुरुपुत्रे तथैव च ॥

तथा ।

समावृत्तश्च गुरवे प्रदाय गुरुदक्षिणाम् ।
प्रतीयात्स्वगृहानेषा शिष्यवृत्तिरुदाहृता ॥

अनेन शिष्यो भृत उक्तः ।

---

* भृता इति पाठान्तरम् ।

अथ बृहस्पतिः।

विज्ञानमुच्यते शिल्पं हेमकुप्यादिसंस्थितिः* ।
नृत्यादिकञ्च तद्विद्वन् कुर्य्यात्कर्म्म गुरोर्गृहे ॥

नारदः।

स्वं शिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया ।
आचार्य्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥
आचार्य्यः शिक्षयेदेनं स्वगृहे दत्तजीवनम्† ।
न चान्यत्कारयेत्कर्म्म पुत्रवच्चैनमाचरेत् ॥

स्वमात्मजात्युचितम्, आहर्त्तुमादातुम्, अन्ते पार्श्वे, कालम् अवधिभूतं, सुनिश्चितं साक्षिमत्, अन्यत् शिल्पशिक्षातः। आभ्यामन्तेवासी भृत उक्तः।

अथात्र कात्यायनः।

यस्तु न ग्राहयेच्छिष्यं‡ कर्म्माण्यन्यानि कारयेत्।
प्राप्नुयात्साहसं पूर्व्वं तस्माच्छिष्यो निवर्त्तते ॥

नारदः।

शिक्षयन्तमदुष्टञ्च यस्त्वाचार्य्यं परित्यजेत्।
बलाद्वासयितव्यः स्याद्वधबन्धौ च सोऽर्हति ॥

---

* हेमकुप्यादिसंस्थितिरिति पाठान्तरम्।

† दत्तवेतनमिति पाठान्तरम्।

‡ ग्राहयेच्छिष्यमिति पाठान्तरम्।

अथ बृहस्पतिः।

विज्ञानमुच्यते शिल्पं हेमकुप्यादिसंस्थितिः* ।

नृत्यादिकञ्च तच्चिच्चन् कुर्य्यात्कर्म्म गुरोर्गृहे ॥

नारदः।

स्वं शिल्पमिच्छन्नाहर्त्तुं बान्धवानामनुज्ञया ।

आचार्य्यस्य वसेदन्ते कालं कृत्वा सुनिश्चितम् ॥

आचार्य्यः शिक्षयेदेनं स्वगृहे दत्तजीवनम्† ।

न चान्यत्कारयेत्कर्म्म पुत्रवच्चैनमाचरेत् ॥

स्वमात्मजात्युचितम्, आहर्त्तुमादातुम्, अन्ते पार्श्वे, कालम् अवधिभूतं, सुनिश्चितं साक्षिमत्, अन्यत् शिल्पशिक्षातः। आभ्यामन्तेवासी भृत उक्तः।

अथात्र कात्यायनः।

यस्तु न ग्राहयेच्छिल्पं‡ कर्म्माण्यन्यानि कारयेत्।

प्राप्नुयात्माहकं [illegible]यः स च कौटुम्बिकः स्मृतः ॥

[illegible]चार्य्येषु, अनयोर्द्वयोरप्यधिकर्म्मकरकौटुम्बिकसंज्ञे व्यवहाराय।

शुभकर्म्मकरा ह्येते चत्वारः समुदाहृताः ।

जघन्यकर्म्मभाजस्तु शेषा दासास्त्रिपञ्चकाः ॥

कर्म्मापि द्विविधं प्रोक्तमशुभं शुभमेव च ।

अशुभं दासकर्म्मोक्तं शुभं कर्म्मकृतः स्मृतम् ॥

चत्वारः शिष्यान्तेवासिभृतकाधिकर्म्मकृतः, कर्म्मकृतः शिष्यादिचतुष्टयस्य।

तथा ।

गृहद्वाराशुचिस्थानरथ्यावस्करशोधनम् ।
गुह्याङ्गस्पर्शनोच्छिष्टविण्मूत्रग्रहणोज्झनम् ॥
इच्छतः स्वामिनश्चाङ्गैरुपस्थानमथान्ततः ।
अशुभं कर्म्म विज्ञेयं शुभमन्यस्ततः परम् ॥

शोधनमिति प्रत्येकमभिसम्बध्यते, ग्रहणञ्च उज्झनञ्च ग्रहणोज्झनम् । इच्छतः स्वामिनः स्वामिनः इच्छानुसारेण, अङ्गैर्हस्तादिभिरुपस्थानं संवाहनं तस्याङ्गानामेव, अन्ततः समीपतः।

कात्यायनः ।

विण्मूत्रोन्मार्जनञ्चैव* नग्नत्वपरिमर्द्दनम् ।
प्रायो दासीसुताः कुर्य्युर्गवादिग्रहणञ्च यत् ॥

नग्नत्वपरिमर्द्दनं परिधापनं नग्नत्वे सति, परिमर्द्दनं संवाहनमिति पारिजातः ।

अथ नारदः ।

गृहजातस्तथा क्रीतो लब्धो दायादुपागतः ।
अन्नाकालभृतस्तद्वदाहितः स्वामिना च यः ॥
मोचितो महतश्चर्णाद्युद्धे प्राप्तः पणे जितः ।
तवाहमित्युपगतः प्रव्रज्यावसितः कृतः ॥
भक्तदासश्च विज्ञेयस्तथैव वड़वाकृतः ।
विक्रेता चात्मनः शास्त्रे दासाः पञ्चदश स्मृताः ॥

---

* विण्मूत्रोत्सर्जनञ्चैवेति पाठान्तरम् ।

गृहे जातः स्वदास्यां जातः, क्रीतो मूल्येन स्वीकृतः, लब्धः प्रतिग्रहादिना, दायादुपागतः क्रमागतदासः, अन्नाकालभृतः दुर्भिक्षे अन्नं दत्त्वा रक्षितप्राणः, आहितः आधीकृतः, मोचितः महत ऋणात् ऋणमोचनाभ्युपगतदास्यः, युद्धे प्राप्तः समरे विजित्य गृहीतः, पणे जितः यद्यस्मिन् वादे पराजितो-ऽहं त्वदासोऽहमित्यादिपरिभाषणेन दासीकृतः*। द्यूतजित इति प्रकाशपारिजातो। तवाहमित्युपगतः तवाहं दास इति कृताभ्युपगमः, प्रव्रज्यावसितः प्रव्रज्याभ्रष्टः, कृतः कृतकालः एतावन्तं कालं तवाहं दास इत्यङ्गीकृतदास्य इति यावत्। भक्तदासः भक्तार्थमेवाङ्गीकृतदास्यः, बड़वाकृतः बड़वा दासी तया कृतः तल्लोभादङ्गीकृतदास्यः, विक्रेता आत्मनः स्वविक्रयेण दासीभूतः।

तथा।

> तत्र पूर्वैश्चतुर्वर्गो नैव दास्यात्प्रमुच्यते।
> प्रसादात्स्वामिनोऽन्यत्र दास्यमेषां क्रमागतम्॥
> विक्रीणीते स्वतन्त्रः सन् य आत्मानं नराधमः।
> स जघन्यतमस्तेषां सोऽपि दास्यान्न मुच्यते॥

प्रसादः प्रीतिः, स्वतन्त्रः स्ववशः।

मार्कण्डेयपुराणे चाण्डालदासतां प्राप्तस्य हरिश्चन्द्रस्य वाक्यम्†।

---

* दासीभूत इति पाठान्तरम्।

† वचनमिति पाठान्तरम्।

चाण्डालेनाननुज्ञातः प्रविशेद्वै ज्वलनं यदि।
चाण्डालदासतां प्राप्तैः पुनरन्यत्र जन्मनि॥

मनुः।

न स्वामिना विसृष्टोऽपि शूद्रो दास्याद्विमुच्यते।
निसर्गजं हि तत्तस्य कस्तं तस्मादपोहति॥

स्वामिप्रसादादपि शूद्रस्य चतुर्वर्गाभ्यन्तरस्य जघन्यतमभृतकस्य वा न दास्यविमोक्ष इत्यर्थः। एवञ्च प्रसादमन्तरेण न परदास्याद्विमुच्यते इति शूद्रेतरगृहजातादिविषय*मित्यविरोधः।

प्रव्रज्यावसितः कस्य दास इत्याकाङ्क्षायां नारदः।

राज्ञएव हि दासः स्यात्प्रव्रज्यावसितो नरः।
न तस्य हि विमोक्षोऽस्ति न विशुद्धिः कथञ्चन॥
प्रव्रज्यावसिता यत्र त्रयो वर्णा द्विजातयः।
निर्वासं कारयेद्विप्रं दासत्वं क्षत्रविट् नृपः॥

क्षत्रविट् क्षत्रियवैश्यौ†।

दक्षः।

पारिव्राज्यं गृहीत्वा तु यः स्वधर्मे न तिष्ठति।
श्वपादेनाङ्कयित्वा तं राजा शीघ्रं प्रवासयेत्॥

स्वधर्मे पारिव्राज्यवतो धर्मे।

इति विवादरत्नाकरे अभ्युपेत्याशुश्रूषातरङ्गः।

---

* शूद्रेतरदासविषयमिति पाठान्तरम्।

† क्षत्रविट्दास्यमर्हतीति शेषः।

# अथ दास्यमोक्षविधिः ।

तत्र नारदः ।

तवाहमित्युपगतो योऽस्वतन्त्रः प्रयच्छति* ।
न स तं प्राप्नुयात्कामं पूर्वस्वामी लभेत तम् ॥
चौरापहृतविक्रीता ये च दासीकृता बलात् ।
राज्ञा मोचयितव्यास्ते दासत्वं तेषु नेष्यते ॥
यश्चैषां स्वामिनं कश्चिन्मोचयेत्प्राणसंशयात् ।
दासत्वात्स विमुच्येत† पुत्रभागं लभेत च ॥
अनाकालभृतो दास्यान्मुच्यते गोयुगं ददत् ।
भक्षितस्यापि यदमु‡ न तच्छुध्यति कर्मणा ॥
आहितोऽपि धनं दत्त्वा स्वामी यद्येनमुद्धरेत् ।
अथोपगमयेदेनं सोऽपि क्रीतादनन्तरः ॥
ऋणन्तु सोदयं दत्त्वा ऋणी दास्याद्विमुच्यते ।
कृतकालव्यपगमात्कृतकोऽपि विमुच्यते ॥
तवाहमित्युपगतो युद्धे प्राप्तः पणे जितः ।
प्रतिशीर्षप्रदानेन मुच्यते तुल्यकर्मणा ॥

---

* प्रगच्छतीति पाठान्तरम् ।

† परिमुच्येतेति पाठान्तरम् ।

‡ यत्नेनेति पाठान्तरम् ।

देवलः ।

पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः ।
अस्वाम्यन्तु भवेदेषां निर्दोषे पितरि स्थिते ॥
पत्यौ जीवति नारीणां दासानां स्वामिनि स्थिते ।
तद्वच्चियतमस्वाम्यं सर्व्वार्थेष्वब्रवीन्मनुः ॥
विस्रब्धं ब्राह्मणः शूद्राद्द्रव्योपादानमाचरेत् ।
न हि तस्यास्ति किञ्चित्स्वं भर्त्तृहार्य्यधनो हि सः ॥

कात्यायनः ।

दासस्य हि धनं यत्स्यात्स्वामी तस्य प्रभुः स्मृतः ।
अकामं विक्रयाद्यत्तु न स्वामी धनमर्हति ॥

अकामं स्वामिनः ।

मनुः ।

दासेनोढा त्वदासी या सापि दासीत्वमाप्नुयात् ।
यस्मादभर्त्ता प्रभुस्तस्याः स्वाम्यधीनः प्रभुर्यतः ॥

अकामं विक्रयाद्यत्तु न स्वामी धनमर्हति, यत्तु अकामं स्वामिना दासे विक्रीते यद्वा स्वविक्रये दासेन शुल्कतया प्राप्तं यद्वा प्रसादे स्वामिना दासस्य हस्ते दत्तं*, तत्र दासधनेऽपि न स्वामी प्रभुरिति प्रकाशकामधेनुपारिजातप्रभृतिषु पाठार्थः†। अकामविक्रयाद्यत्तु तत्स्वामी धन-

* स्वाम्यधीनविक्रयेऽपि दासीति इत्यर्थः ।

† प्रकाशकामधेनुपारिजातादर्शपुस्तकेषु इति पाठान्तरम् ।

मर्हतीति लक्ष्मीधरेण पठितं, तदपि प्रकाशविक्रयादर्थं धनं तत्स्वामी दास एवार्हति, न दासप्रभोस्तत्र प्रभुत्वमिति स्वरसखण्डनेनापि प्रतिप्रसवपरतया अन्यथानर्थक्याद्व्यवहारविरोधाच्च* व्याख्येयम्। दासेनेति यो यस्य दासस्तेन तद्दास्यपि परिणीता तस्य दासी भवतीत्यर्थः। दासपदेन प्रथमेन सप्रतियोगिकदासत्वस्याभिधानाद्दासीत्यत्रापि सैव† व्याख्येया। तत्रादासी द्विविधा—कस्यापि न दासी, कस्यचिद्दासी वा, उभयत्रापि सामान्यतोऽप्यपेक्षणीयानुमतेरनुमतिरपेक्षणीया‡। यदि तु§ नञो व्युत्पत्त्या कस्यापि या न दासी, सा अदासीत्यभिमतं, तत्रापि या कस्यापि दासी, तस्यामपि सामान्यतो विशेषतो वा स्वामिस्वीकारेण दास त्यक्ताया ऊढाया विवाहयितृस्वामिस्वत्वासत्त्वं भवितुमर्हत्येव, तच्च न्यायाद्वाक्यगत्येति¶ न कश्चिद्विशेषः।

इति विवादरत्नाकरे दासमोचतरङ्गः।



* अन्यथा प्रतिप्रसवपरतया अस्वीकारे आनर्थक्यात् भार्य्यापुत्रश्च दासदेत्यादि वचनेनैव तदर्थत्वेन अस्य वचनस्य वैफल्यादित्यर्थः।

† सैव सप्रतियोगिकैवेत्यर्थः।

‡ अनुमतिर्दासस्वीकारे इति शेषः।

§ यद्यपीति पाठान्तरम्।

¶ न्यायतया भवत्येव वचनतो वेति पाठान्तरम्।

# अथ दास्याधिकारविधिः* ।

अत्र नारदः ।

वर्णानां प्रातिलोम्येन दासत्वं न विधीयते ।
स्वधर्मत्यागिनोऽन्यत्र दारवद्दासता मता ॥

स्वधर्मः स्वकीयाश्रमधर्मः स्वधर्मत्यागिनोऽन्यत्र स्वधर्मत्यागि-
परित्यज्येत्यर्थः ।

कात्यायनः ।

स्वतन्त्रस्यात्मनो दानाद्दासत्वं दारवद्भृगुः ।
त्रिषु वर्णेषु विज्ञेयं दास्यं विप्रे न विद्यते ।
वर्णानामानुलोम्येन दास्यं न प्रतिलोमतः ।
राजन्यवैश्यशूद्राणां त्यजतां हि स्वतन्त्रताम् ॥
समवर्णेऽपि विप्रन्तु दासत्वं नैव कारयेत् ।
शीलाध्ययनसम्पन्नं तदूनं कर्म कामतः ॥
तत्रापि नाशुभं किञ्चित्प्रकुर्व्वीत द्विजोत्तमः ।
ब्राह्मणस्य हि दासत्वान्नृपतेजो विहन्यते ॥
क्षत्रविट्शूद्रधर्म्मस्तु समवर्णं कदाचन ।
कारयेद्दासकर्म्माणि ब्राह्मणं न बृहस्पतिः ॥

शीलाध्ययनसम्पन्नं ब्राह्मणं न, तदूनं शीलाध्ययनन्यूनं ब्राह्मणं
कर्म कारयेत् । तत्रापि नाशुभं विण्मूत्रशोधनादिकं न

---

* अथ दास्याधिकारविधि इति पाठान्तरम् ।

कारयेदित्यर्थः। क्षत्रविट्शूद्रधर्मेष्विति क्षत्रियवैश्यशूद्राणान्तु समगुणानामपि सावर्ण्येऽपि कदाचित् दासस्वामिभावो भवेत्, ब्राह्मणन्तु सवर्णं समानवर्णं समानगुणं न कारयेद्* इति वृहस्पतिर्मन्यते इति पारिजातहलायुधस्वरसः। क्षत्रविट्-शूद्रधर्मेषु ब्राह्मणो ब्राह्मणं दासकर्म्माणि न कारयेदिति लक्ष्मीधरस्वरसः। सर्व्वथायमर्थ उपग्राह्य एवेति।

मनुः।

क्षत्रियञ्चैव वैश्यञ्च ब्राह्मणो वृत्तिकर्षितम्।
बिभृयादानृशंस्येन स्वानि कर्म्माणि कारयेत्॥

स्वानि कर्म्माणि क्षत्रियवैश्यजात्युक्तानि†।

तथा।

दास्यन्तु कारयेन्मोहाद्ब्राह्मणः संस्कृतान् द्विजान्।
अनिच्छतः प्रभावत्वाद्राज्ञा दण्ड्यः शतानि षट्॥

प्रभावत्वात्प्रभुत्वात्। संस्कृतान् शीलाध्ययनसम्पन्नान्। तेन यो ब्राह्मणः शीलाध्ययनसम्पन्नान्द्विजाननिच्छतः स्वप्रभुत्वाद्-द्विजानुचितकर्म्माणि कारयेत्, स राज्ञा षट्पणशतानि दण्ड्य इत्यर्थः।

---

* दासत्वमिति शेषः।

† क्षत्रियवैश्यजात्युचितानीति पाठान्तरम्।

तथा ।

शूद्रन्तु कारयेद्दास्यं क्रीतमक्रीतमेव वा ।
दास्यायैव हि सृष्टोऽसौ स्वयमेव स्वयम्भुवा ॥

शूद्रन्तु क्रीतमक्रीतं वा दास्यं जघन्यमपि कारयेदित्यर्थः ।

विष्णुः ।

यस्तूत्तमवर्णं दास्ये नियोजयति तस्योत्तमसाहसं दण्डः । अस्वतन्त्रस्य स्वामीच्छया* दासत्वं† प्रातिलोम्येनापि प्रतिपादितं मार्कण्डेयपुराणे हरिश्चन्द्रोपाख्याने, अतएव कात्यायनादिभिः प्रातिलोम्येन दासत्वनिषेधे स्वतन्त्रपदमुपात्तम्‡ ।

कात्यायनः ।

आददीताद्यणीं यस्तु विक्रीणीयात्तथैव च ।
राज्ञा तदकृतं§ कार्य्यं दण्ड्याः स्युः सर्व्वं एव ते ॥
कामात्तु संश्रितां यत्र दासीं कुर्य्यात्कुलस्त्रियम् ।
संक्रामयेत्तथान्यत्र दण्ड्यस्तत्राकृतं भवेत् ॥

कामादिच्छातः, यस्त्विच्छयोपगतामपि कुलस्त्रियं दासीकुर्य्यात् अन्यस्मै वा समर्पयेत्, स दण्ड्य इत्यर्थः ।

---

* स्वामिच्छयेति पाठान्तरम् ।
† स्वामिदासत्वमिति पाठान्तरम् ।
‡ स्वतन्त्रपदमुपन्यस्तमिति पाठान्तरम् ।
§ सदाकृतमिति पाठान्तरम् ।

तथा

बालधात्रीमदासीञ्च दासीमिव भुनक्ति यः ।
परिचारकपत्नीं वा प्राप्नुयात्पूर्व्वसाहसम् ॥
विक्रीयमाणां यो मुक्तां दासीं विक्रेतुमिच्छति ।
अनापदिस्थः शक्तः सन्प्राप्नुयाद्द्विशतं दमम् ॥

बालधात्रीं बालस्य स्तन्यदानेन पोषणं कुर्व्वाणाम्, अदासीं निक्षिप्तां शरणागतां वा, परिचारकः सेवकः, विक्रीयमाणां नाहं विक्रेतव्येति वदन्तीम् ।

इति विवादरत्नाकरे दास्याधिकारतरङ्गः ।



# अथ वेतनस्यानपाक्रिया।

तत्र नारदः।

> भृतानां वेतनस्योक्तिर्दानादानविधिक्रिये।
> वेतनस्यानपाकर्म तद्विवादपदं स्मृतम्॥
> भृत्याय वेतनं दद्यात्कर्म्मस्वामी यथाक्रमम्।
> आदौ मध्ये विरामे च* कर्म्मणो यद्विनिश्चितम्॥
> भृतावनिश्चितायान्तु दशभागमवाप्नुयुः।
> लाभगोवीर्य्यसस्यानां वणिग्गोपकृषीवलाः॥

यथाक्रमं यथाव्यवस्थापितम्। कर्म्मण आदौ मध्ये अवसाने वा, आदौ पञ्च, मध्ये सप्त, अवसाने अष्टाविंशतिरिति क्रमेण इति पारिजातः। गोवीर्य्यं गवां सारभूतं क्षीरमित्यर्थः।

याज्ञवल्क्यः।

> दाप्यस्तु दशमं भागं वाणिज्यपशुसस्यतः।
> अनिश्चित्य भृतिं यस्तु कारयेत्स महीक्षिता॥

यः कर्म्मभृतिमव्यवस्थाप्य स्वामी वाणिज्यपशुपालनकृषिकर्म्माणि कारयेत्, स तस्मै वाणिज्यादिफलतो दशमं भागं महीक्षिता दापयितव्य इत्यर्थः।

---

* अवसाने चेति पाठान्तरम्।

तथा।

देशं कालञ्च योऽतीयात्कर्म्म कुर्य्याच्च योऽन्यथा।

तत्र तु स्वामिनश्छन्दोऽधिकं देयं कृतेऽधिके॥

कर्त्तव्योचितदेशकालावतिक्रामन्* न्यूनत्वादिना अन्यथा कुर्व्वन् भृतकः स्वामिनश्छन्देन इच्छया भृतिं लभते। स्वाम्यपेक्षितञ्चाधिकं कुर्व्वन् अधिकां भृतिं लभते इत्यर्थः।

अनेकसाध्ये विशेषमाह।

यो यावत्कुरुते कर्म्म तावत्तस्य तु वेतनम्।

उभयोरप्यसाध्यञ्चेत्साध्यं कुर्य्याद्यथाश्रुतम्॥

अनेकपुरुषैर्यत्साध्यं कर्म्म, तत्र उभयोरप्यसाध्ये कर्म्मानुरूपेण वेतनं देयम्। यत्र तु स्वामिकर्म्मकारयोरुभयोरन्यतरस्य वा साध्यं भवति, तत्र यथाश्रुतं यथाविहितं वेतनं कार्य्यमित्यर्थः। तदभिधानमये। पारिजाते तु उभयोरपीत्युभयग्रहणमनेकोपलक्षणार्थं, तेन द्वाभ्यामप्यशक्यकर्म्मणि तदा यो भृत्यो यावत्कर्म्म करोति, तस्मै कर्म्मानुरूपेण वेतनं देयं, साध्ये तु यथाश्रुतं यथापरिभाषितं देयमिति व्याख्यातम्। एतेन साध्यमिति पदस्थाने साध्ये इति पदमवगतमिति लक्ष्यते।

बृहस्पतिः।

त्रिभागं पञ्चभागं वा गृह्णीयाच्छीरवाहकः।

अत्र स एव व्यवस्थां दर्शयति।

---

* कर्त्तव्योचितदेशकालातिक्रमेणेति पाठान्तरम्।

भक्ताच्छादभृतः सीरभागं गृह्णीत पञ्चमम्* ।
जातशस्यात्त्रिभागन्तु प्रगृह्णीतोपधाभृतः ॥

उपधया व्यापारफलेन शस्यादिना भृतः, तेन भक्ताच्छादन भृतादन्य इत्यर्थः । नारदीयञ्च दशमांशकल्पनं† सीरवाहकेतर-भृतकविषयम् ।

आपस्तम्बः ।

उद्दसतः कीनाशस्य दण्डेन ताड़नं तथा पशुपालस्याव-रोधनञ्चास्य पशूनाम् ।

उद्दसतः पलायमानस्य कीनाशस्य हलवाहकस्य दण्डेन ताड़नं, तथा पशुपालस्य दण्डताड़नमवरोधनञ्च अस्य पशूनां पञ्च-वरोधनं कार्य्यमित्यर्थः ।

वृहस्पतिः ।

समुद्रयानकुशला देशकालार्थदर्शिनः ।
नियच्छेयुर्भृतिं यान्तु सा स्यात्तागकृता यदि ॥

समुद्रयानकुशला इति वाणिज्यविज्ञपुरुषोपलक्षणम् ।

नारदः ।

कर्म्मोपकरणञ्चैषां क्रियां प्रति यदाहितम् ।
आप्तभावेन तद्देयं न जेह्मेन कथञ्चन ॥

---

* पञ्चकमिति पाठान्तरम् ।

† दशमांशकल्पनमिति पाठो युक्तः ।

उपकरणं योक्त्रादि, एषां स्वामिनां, क्रियां कृषिरूपां प्रति यदाहितं समर्पितं, तदात्मभावेन भृत्यैरवेक्षणीयं* न तु जैह्मेन शाठ्येनेत्यर्थः।

वृहस्पतिः।

भृतकस्तु न कुर्व्वीत स्वामिनः शाठ्यमण्वपि।
भृतिहानिमवाप्नोति ततो वादः प्रवर्त्तते॥
गृहीतवेतनः कर्म्म न करोति यदा भृतः।
समर्थश्चेद्दमं दाप्यो द्विगुणं तच्च वेतनम्॥

समर्थश्चेन करोतीति सम्बन्धः।

याज्ञवल्क्यः।

गृहीतवेतनः कर्म्म त्यजन्द्विगुणमाहरेत्।
अगृहीते समं दाप्यो भृत्यैरच्यउपस्करः॥

द्विगुणं वेतनम् आहरेद्दद्यात्। समं परिस्वामितादनधिकं न द्विगुणमित्यर्थः। तेनारभ्य कर्म्म त्यजन् गृहीतवेतनत्वा-गृहीतवेतनत्वाभ्यां द्विगुणसमवेतने दापयितव्यः। भृत्यैर्हल-वाहकादिभिः, रक्ष्यः रक्षणीयः, उपस्करः कुद्दालफाल-कादिः।

नारदः।

कर्म्माकुर्व्वन्प्रतिश्रुत्य कार्य्योऽदत्त्वा भृतिं बलात्।
भृतिं गृहीत्वाकुर्व्वाणो द्विगुणां भृतिमाहरेत्॥

---

* भक्त्येन रक्षणीयमिति पाठान्तरम्।

कात्यायनः।

कर्मारम्भन्तु यः कृत्वा सर्व्वं नैव तु कारयेत्।
बलात्कारयितव्योऽसावकुर्व्वन्दण्डमर्हति॥

बृहस्पतिः।

प्रतिश्रुत्य न कुर्य्याद्यः स कार्य्यः स्याद्बलादपि।
स चेन्न कुर्य्याद्दर्पाच्च भृतः कर्म्म यथोदितम् *॥
स दण्ड्यः कृष्णलान्यष्टौ न देयञ्चास्य वेतनम्।

इदं प्रतिश्रवणं कात्यायनैकवाक्यतया कर्मारम्भपर्य्यन्तम्। यत्र वेतनं गृहीतं कर्म्मारभ्य न, तत्राह

मनुः।

भृतोऽनार्त्तो न कुर्य्याद्यो दर्पात्कर्म्म यथोदितम्।
स दण्ड्यः कृष्णलान्यष्टौ न देयञ्चास्य वेतनम्॥

अनार्त्तः कर्म्माकरणहेतुराजदैवोपघातरहितः।

तथा।

यथोक्तमार्त्तः सुस्थो वा यस्तत्कर्म्म न कारयेत्।
न तस्य वेतनं देयमल्पोनस्यापि कर्म्मणः॥

न कारयेत्स्वयमन्यद्वारा वा। अल्पोनस्य किञ्चिदपरिसमाप्तस्य।

तथा।

आर्त्तः कुर्य्यात्सुस्थः सन् यथा भाषितमादितः।
सुदीर्घस्यापि कालस्य लभते च स्वं† वेतनम्॥

---

* स चेन्न कुर्य्यात्तत्कर्म प्राप्नुयाद्द्विशतं दममिति पाठान्तरम्।

† लभेतैव चेति पाठान्तरम्।

यस्त्वार्त्तिवशात्त्यक्तकर्म्मा सुस्थो भूत्वा व्यवस्थापितं* कर्म्म करोति स दीर्घेणापि कालेन वेतनमाप्नोत्येवेत्यर्थः।

नारदः।

> काले पूर्णे त्यजन्कर्म्म भृतेर्नाशमवाप्नुयात्।
> स्वामिदोषादकरणे यावद्भृतिमवाप्नुयात्† ॥

भृतेरखण्डायाः, तेन तद्दोषात्त्यागे कियत्यपि भृतिर्न देया। यदा त्वपूर्णएव काले स्वामिदोषात्त्यागः, तदा यावत्कृतं तावती भृतिं लभत इत्यर्थः।

विष्णुः।

> भृतकश्चापूर्णे काले भृतिं त्यजन्स्वामिदोषविरहेण सकलमेव मूल्यं जह्याद्राज्ञे पणशतं दद्यात्। तद्दोषेण यद्विनश्येत्, तत्स्वामिने देयम्, अन्यत्र राजदैवोपघातात्। स्वामी चेद्भृतकमपूर्णे काले जह्यात्, तस्य सर्व्वमेव मूल्यं दद्यात्पणशतं राज्ञेऽन्यत्र दैवात्‡।

भृतिं कर्म्ममूल्यं§ वेतनं त्यजन् स्वामिदोषविरहेण, दैवात् दैवोपघातात्।

---

* व्यवस्थितमिति पाठान्तरम्।

† स्वामिदोषादपक्रामन् यावत्कृतमवाप्नुयादिति पाठान्तरम्।

‡ भृतदोषादिति पाठान्तरम्।

§ कर्म्मण्यमिति पाठान्तरम्।

नारदः ।

भाण्डं व्यसनमागच्छेद्यदि वाहकदोषतः ।
दाप्यो यत्तत्र नष्टं स्याद्दैवराजकृतादृते ॥

भाण्डं भृतकव्यापार्यमाणं द्रव्यं, व्यसनं विघटनं, वाहकदोषतः भृतकजनदोषतः ।

वृद्धमनुः ।

प्रमादान्नाशितं दाप्यः समं द्विद्रोहनाशितम् ।
न तु दाप्यो हृतं चौरैर्दग्धमूढं जलेन वा ॥

द्रोहनाशितम् आश्रयापराधनाशितम् । हृतं चौरैर्दग्धमूढं जलेन वेत्यनेन भृतकादोषव्यतिरेकेण विघटितमुपलक्ष्यते ।

वृहस्पतिः ।

प्रभुणा विनियुक्तः सन्भृतको विदधाति यत् ।
तदर्थमशुभं कर्म्म स्वामी तत्रापराध्नुयात् ॥

तदर्थं स्वाम्यर्थं, अशुभं चौर्यादि, स्वामी तत्रापराध्नुयात् स्वामिन एव तत्र दोषो न तु भृतकस्येत्यर्थः* ।

याज्ञवल्क्यः ।

अराजदैवकान्नष्टं भाण्डं दाप्यस्तु वाहकः ।
प्रस्थानविघ्नकृच्चैव प्रदाप्यो द्विगुणां भृतिम् ॥

राजदैवकादित्यनेन भृतदोषं† उपलक्ष्यते । प्रस्थानविघ्नकृत्

---

* भृतस्येत्यर्थ इति भृत्यस्येत्यर्थ इति च पाठान्तरम् ।

† भृत्यदोष इति पाठान्तरम् ।

वेतनं गृहीत्वा कर्म्मकाले अप्रस्थाता* वाहक इत्यनुषङ्गः।

बृहस्पतिः।

य: कर्म्मकाले संप्राप्ते न कुर्य्याद्विघ्नमाचरेत्।
उद्दाल्यस्तु कार्य्यः स्यात् दाप्यो द्विगुणां भृतिम्॥

याज्ञवल्क्यः।

प्रक्रान्ते सप्तमं भागं चतुर्थं पथि संत्यजन्।
भृतिमर्द्धपथे सर्व्वां प्रदाप्यस्त्याजकोऽपि च॥

अत्र च प्रक्रान्ते पथि अर्द्धपथे इति पदैः सुलभान्यभृत्योपादान-दुर्लभान्यभृत्योपादानसमया† विवक्षिताः, तेषु यथायथं सप्तमं चतुर्थभागं सर्व्वभृतिं वाहका दापयितव्याः। एवं स्वाम्यपि एषु समयेषु त्याजकः सन्‡ दापयितव्यः। यत्तु पूर्व्वं द्विगुण-भृतिदानमुक्तं तत्सर्व्वथा भृत्योपादानासम्भव इत्यविरोधः।

मत्स्यपुराणे।

मूल्यमादाय यो विद्यां शिल्पं वा न प्रयच्छति।
दण्ड्यः स मूलं सकलं धर्म्मज्ञेन§ महीभृता¶॥

---

* अनुपस्थातेति पाठान्तरम्।

† सुलभान्यभृत्योपादानसमया इति सुलभान्यभृत्योपादानदुर्लभतरान्यभृत्योपादान-समया इति च पाठान्तरम्। सुलभदुर्लभदुर्लभतरान्यभृत्योपादानसमया इति पाठो युज्यते।

‡ समभिति पाठान्तरम्।

§ कर्म्मज्ञेनेति द्विगुणं कर्म्मज्ञेनेति च पाठान्तरम्।

¶ महीक्षितेति पाठान्तरम्।

नारदः।

अनयन् भाटयित्वा तु भाण्डवान् यानवाहने।
दाप्यो भृतेश्चतुर्भागं* सर्व्वमर्द्धपथे त्यजन् ॥
अनयन् वाहकोऽप्येवं भृतिहानिं समाप्नुयात्।

भाटयित्वा भाटके गृहीत्वा, भाण्डवान् स्वामी, यानवाहने अश्वादिवृषादिरूपे, भाटको भाटकग्रहीता।

बृहस्पतिः।

पथि विक्रीय तद्भाण्डं वणिग्भृत्यं त्यजेद्यदि।
अगतस्यापि देयं स्याद्भृतेरर्द्धं लभेत सः ॥

अगतस्यापि यावद्गन्तव्यमगतस्यापि।

कात्यायनः।

यथा च पथि तद्भाण्डमासिध्येत ह्रियेत वा।
यावानध्वा गतस्तेन तावतो लभते भृतिम् ॥

आसिध्येत अवरोधविषयीक्रियेत।

नारदः।

भृतिषड्भागमाभाष्य पथि युग्मं परित्यजन्।
प्रदद्यात्कारयित्वा तु सोद्यां भृतिमावहेत् ॥

यो भृतिमाभाष्य गच्छामीति प्रतिज्ञाय पथि युग्मं भृत-भाण्डादि त्यजेत् असाधुत्वात् भृतेः षड्भागं दाप्य इति

---

* भृतिचतुर्भागमिति पाठान्तरम्।

प्रथमखण्डार्थः । स्वाम्यप्यददद्व्रजति भृत्ये पथि भृतिमददत् सोदयां भृतिमावहेदिति द्वितीयखण्डार्थः ।

बृहस्पतिः ।

कृते कर्म्मणि यः स्वामी न दद्याद्वेतनं भृतेः ।
राज्ञा दापयितव्यः स्याद्विनयश्चानुरूपतः ॥

कात्यायनः ।

त्यजेत्पथि सहायं यः श्रान्तं रोगार्त्तमेव वा ।
प्राप्नुयात्साहसं पूर्व्वं ग्रामे त्र्यहमपालयन् ॥

यः स्वामी ग्रामे त्र्यहमपाल्यैव सुश्रान्तं रोगार्त्तं वा भृतकं त्यजेत्स राज्ञा दण्ड्य इत्यर्थः* ।

इति विवादरत्नाकरे वेतनस्यानपाक्रियातरङ्गः ।

—

* पूर्व्वं साहसं प्रथमं साहसमिति शेषः ।

## अथ पण्यस्त्रीविधिः।

तत्र नारदः।

शुल्कं गृहीत्वा पण्यस्त्री नेच्छन्ती द्विगुणं वहेत्।
अनिच्छन्शुल्कदातापि शुल्कहानिमवाप्नुयात्॥

शुल्कं वेतनम्।

स्मृतिः।

व्याधिता सश्रमा व्यग्रा राजधर्म्मपरायणा*।
आमन्त्रिता तु नागच्छेदवाच्या बड़वा स्मृता॥

बड़वात्र पण्यस्त्री।

मत्स्यपुराणे।

गृहीत्वा वेतनं वेश्या लोभादन्यत्र गच्छति।
भाटं न दद्याद्दाप्या स्यादनूढ़स्यापि भाटकम्॥

अनूढ़स्य भुजङ्गस्य भाटकं शुल्कं, तच्च द्विगुणम्।

तथा।

अप्रयच्छंस्तथा शुल्कमनुभूय पुमान् स्त्रियम्।
अक्रमेण च संगच्छन् घातयंश्च नखादिभिः॥
अयोनौ यः समाक्रामेद्बहुभिर्वापि वासयेत्।
शुल्कं सोऽष्टगुणं दाप्यो विनयं तावदेव तु॥

अक्रमेण कामशास्त्रोक्तप्रकारविरोधेन। अयोनौ मुखादौ

---

* राजकर्म्मपरायणेति पाठो युज्यते।

समाक्रामेत् मैथुनं कुर्य्यात्। आत्मार्थं भाटयित्वा बहुभिः पुंरूपैः (वासयेत्) योजयेत्।

मत्स्यपुराणे।

> अन्यमुद्दिश्य वेश्यां यो नयेदन्यस्य कारणात्।
> तस्य दण्डो भवेद्राज्ञः सुवर्णस्य च माषकम्॥
> नीत्वा भोगं न यो दद्याद्दण्ड्यो द्विगुणवेतनम्।
> राज्ञश्च द्विगुणं दण्डमेवं धर्म्मो न हीयते॥
> बहूनां भुञ्जतां*मेकां सर्व्वे ते द्विगुणं दमम्।
> सम्प्रदद्युः पृथग्राज्ञे दण्डञ्च द्विगुणं परम्॥

अत्र द्विगुणो दमो दण्डः, स च स्त्रियै राज्ञे च, द्विगुणो दण्डोऽन्य† स्फुटएव।

नारदः।

> वेश्याः प्रधाना यास्तत्र कामुकास्तद्गृहोषिताः।
> तत्समुत्थेषु कार्य्येषु निर्णयं संशये विदुः॥

प्रधाना इति स्त्रीलिङ्गनिर्द्देश आर्षः, तत्समुत्थेषु वेश्यागृहोषितकामुकसम्बन्धेषु‡ संशये वेश्याकामुकविप्रपत्तिजे§।

---

* भुञ्जतामिति पाठान्तरम्।

† अन्ये इति पाठान्तरम्।

‡ वेश्यागृहोषितकामुकसमुत्थेष्विति पाठान्तरम्।

§ वेश्याकामुकविप्रतिपत्तिष्विति पाठान्तरम्।

तथा ।

परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम्* ॥

स्तोमं वासमूल्यम् ।

तथा ।

स्तोमाद्दिना वसित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृणकाष्ठादि न गृह्णीयात्कथञ्चन ॥
यान्येव तृणकाष्ठानि विष्टका विनिवेशिताः ।
विनिर्गच्छंस्तु तत्सर्वं भूस्वामिनि निवेदयेत् ॥

निवेदयेन्नाभयेत्नापयेदिति यावत् । लाभार्थस्य विदेरूप-मिदम् ।

स्नेहेन तु चिरं भुक्त्वा मन्दिरं कुरुते तु यः ।
निर्गच्छतस्तस्य दारु दत्तस्तोमस्य नान्यथा ॥

दत्तस्तोमस्य दत्तवासमूल्यस्य ।

कात्यायनः ।

गृहवार्य्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिने नार्पयेद्†यावत्तावद्दाप्यस्तु भाटकम् ।

यादि परस्वामिनं प्रतिष्ठितमिह विवक्षितम् ।

---

* तृणकाष्ठेष्टकादिकमिति पाठान्तरम् ।

† दापयेदिति पाठान्तरम् ।

तथा।

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः।
नार्पयेत्कृतकृत्यः सन्नावहाप्यः स भाटकम्॥

इदमनुः।

यो भाटयित्वा शकटं नीत्वा वान्यत्र गच्छति।
भाटं न दद्याद्दाप्यः स्यादनूढ़स्यापि भाटकम्॥

शकटमिति वाह्यमात्रोपलचणम्। अनूढ़स्यापि अवाहि स्यापि।

नारदः।

स्तोमवाहीनि भाण्डानि पूर्वकालन्तु पालयेत्*।
गृहीतुराभवेद्‡भग्नं नष्टश्चान्यत्र संप्लवात्॥

स्तोमो वेतनं, संप्लवो राजदैविकम्। तेन राजदैविकमन्त विघटितं शकटादि गृहीतुरेव समाधेयं स्यादिति पूर्वकाल तत्स्वामिने समर्पणीयमित्यर्थः।

इति विवादरत्नाकरे पण्यस्त्रीविधितरङ्गः।



---

* पूर्वकालाद्युपालयेदिति पाठान्तरम्।

† गृहीतुर्वा भवेदिति पाठान्तरम्।

‡ पूर्व्वकालमिति पाठान्तरम्।

तथा ।

परभूमौ गृहं कृत्वा स्तोमं दत्त्वा वसेत्तु यः ।
स तद्गृहीत्वा निर्गच्छेत्तृणकाष्ठेष्टकादिकम्* ॥

स्तोमं वासमूल्यम् ।

तथा ।

स्तोमादिना वसित्वा तु परभूमावनिश्चितः ।
निर्गच्छंस्तृणकाष्ठादि न गृह्णीयात्कथञ्चन ॥
यान्येव तृणकाष्ठानि त्विष्टका विनिवेशिताः ।
विनिर्गच्छंस्तु तत्सर्व्वं भूस्वामिनि निवेदयेत् ॥

निवेदयेल्लाभयेत्प्रापयेदिति यावत् । लाभार्थस्य विदेरूपमिदम् ।

स्नेहेन तु चिरं भुक्त्वा मन्दिरं कुरुते तु यः ।
निर्गच्छतस्तस्य दारु दत्तस्तोमस्य नान्यथा ॥

दत्तस्तोमस्य दत्तवासमूल्यस्य ।

कात्यायनः ।

गृहवार्य्यापणादीनि गृहीत्वा भाटकेन यः ।
स्वामिने नार्पयेद्†यावत्तावद्दाप्यस्तु भाटकम् ॥

वारि परस्वानितं प्रतिष्ठितमिह विवक्षितम् ।

---

* तृणकाष्ठेष्टकादिविति पाठान्तरम् ।

† दापयेदिति पाठान्तरम् ।

तथा।

हस्त्यश्वगोखरोष्ट्रादीन् गृहीत्वा भाटकेन यः।

नार्पयेत्कृतकृत्यः सन्दाप्यः स भाटकम्॥

इदमनुः।

यो भाटयित्वा शकटं नीत्वा चान्यत्र गच्छति।

भाटं न दद्याद्दाप्यः स्यादनूढस्यापि भाटकम्॥

शकटमिति वाह्यमात्रोपलक्षणम्। अनूढस्यापि अवाहितस्यापि।

नारदः।

स्तोमवाहीनि भाण्डानि पूर्णकालन्तु पालयेत्*।

ग्रहीतुराभवेद्†भग्नं नष्टञ्चान्यत्र संप्लवात्॥

स्तोमो वेतनं, संप्लवो राजदैविकम्। तेन राजदैविकमन्तरेण विघटितं शकटादि ग्रहीतुरेव समाधेयं स्यादिति पूर्णकालं‡ तत्स्वामिने समर्पणीयमित्यर्थः।

इति विवादरत्नाकरे पण्यस्त्रीविधितरङ्गः।

---

* पूर्णकालान्यपालयेदिति पाठान्तरम्।

† ग्रहीतुर्वा भवेदिति पाठान्तरम्।

‡ पूर्वकालमिति पाठान्तरम्।

# अथ स्वामिपालविवादः ।

तत्र मनुः ।

पशुषु स्वामिनाञ्चैव पालानाञ्च यथाविधि ।
विवादं सम्प्रवक्ष्यामि यथावद्धर्मतत्त्वतः ॥

पशुषु विवादविषयभूतेषु* ।

गोपः क्षीरभृतो यस्तु स दुह्याद्दशतो वराम् ।
गोस्वाम्यनुमते भृत्यः सा स्यात्पालेऽभृते भृतिः ॥

क्षीरेण भृतः क्षीरभृतः क्षीरमात्रभृतिरिति यावत् । दुह्याद्दशतो वरां, दशसु गोषु या वरा, तां दुह्यादित्यर्थः । सा एकगोदोहनरूपा । पाले गोपाले । अभृते ग्रासाच्छादनादिनेति शेषः ।

नारदः ।

गवां शताद्वत्सतरी धेनुः स्याद्द्विशताद्भृतिः ।
प्रतिसंवत्सरं गोपे सन्दोहश्चाष्टमेऽह्नि ॥

गवां शताद्रक्षितात्, एवं द्विशतादित्यत्रापि । वत्सतरी द्विहायनी गौः । सन्दोहः सर्वधेनूनां दुग्धम् ।

बृहस्पतिः ।

परधेनुभृतः क्षीरं लभेत ह्यष्टमेऽखिलम् ।

---

* विवादभूतेष्विति पाठान्तरम् ।

नारदः।

उपानयेद्गां गोपायः* प्रत्यहं रजनीक्षये।

चीर्णाः पीताश्च ता गोपः† सायाह्ने प्रत्युपानयेत्॥

उपानयेत् रक्षार्थमर्पयेत्‡, चीर्णा भक्षिततृणाः, पीताः पीतजलाः, सायाह्ने ईषदवशिष्टदिने प्रत्युपानयेत्स्वामिने अर्पयेत्।

याज्ञवल्क्यः।

यथार्पितान्पशून् गोपः सायं प्रत्यर्पयेत्तथा।

प्रमादहृतनष्टांश्च प्रदाप्यः कृतवेतनः॥

प्रमादहृतनष्टाः पालकदोषेणापहृतनष्टाः।

मनुः।

दिवा वक्तव्यता पाले रात्रौ स्वामिनि तद्गृहे।

योगक्षेमावन्यथा चेत्§ पालो वक्तव्यतामियात्॥

दिवा असुपोषेण¶ गोपस्य वक्तव्यता पर्य्यनुयोगः‖। रात्रौ असुपोषे** स्वामिन एव। यदि तु योगक्षेमौ अन्यथा रात्रावपि

---

* उपानयेद्गा गोपाल इति पाठान्तरम्।

† गोपैरिति पाठान्तरम्।

‡ उपनयेदिति पाठान्तरम्।

§ योगक्षेमोऽन्यथा चेत्त्विति पाठान्तरम्।

¶ विग्रहे इति अनुरोधे इति च पाठान्तरम्।

‖ पर्य्यनुयोग्यतेति पर्य्यनुयोज्यतति च पाठान्तरम्।

** विग्रहे इति पाठान्तरम्।

गोपालस्य* व्यवस्थापितो, तदा स एव राज्ञावपि वक्तव्यतामेतीत्यर्थः ।

मनुनारदौ ।

> विप्रेन† तु हृतं‡ चौरैर्न गोपो दातुमर्हति ।
> यदि देशे च काले च स्वामिनः स्वस्य शंसति ॥

देशे काले अन्वेषणयोग्ये ।

व्यासः ।

> पालग्राहे ग्रामघाते तथा राष्ट्रस्य विप्लवे ।
> यत्प्रनष्टं हृतं वा स्यान्न पालस्तत्र किल्बिषी§ ॥

पालग्राहे पालग्रहणे निरोधे¶ इति यावत् ।

बृहस्पतिः ।

> कृमिचौरव्याघ्रभयाद्दरीश्वभ्राच्च पालयेत् ।
> व्यायच्छेच्छक्तितः क्रोशेत्स्वामिने वा निवेदयेत् ॥

दरी कन्दरा, श्वभ्रं गर्त्तः, व्यायच्छेत्कृम्याद्युपद्रवेभ्यः शक्तितो रक्षां कुर्य्यात्, क्रोशेत् उच्चैः परान् श्रावयेत् ।

---

* गोपस्येति पाठान्तरम् ।

† विश्वस्येति पाठान्तरम् ।

‡ विप्रणष्टमिति पाठान्तरम् ।

§ स्यात्तु पालस्तत्र न दोषभागिति पाठान्तरम् ।

¶ निरोधे केनचित् पालस्यावरोधे सति इत्यर्थः ।

नारदः।

स्वामिदैव्यसने* गोपो व्यायच्छेत्तत्र शक्तितः।
अशक्तस्तूर्णमागत्य स्वामिने तन्निवेदयेत्॥
अव्यायच्छन्न विक्रोशन्स्वामिने वानिवेदयन्† ।
वोढुमर्हति गोपस्तां विनयञ्चैव राजनि॥

वोढुं दातुम्, तां गाम्।

मनुनारदौ।

नष्टं विनष्टं कृमिभिः श्वग्रस्तं विषमे मृतम्।
हीनं पुरुषकारेण प्रदद्यात्पाल एव तु॥

नष्टमपहृतं, विनष्टं विनाशमुपगतम्, अत्रैव कैरित्याकाङ्क्षायां कृमिभिरित्यन्वयः। श्वग्रहणमन्यस्याप्युपलक्षणम्। विषमे दुर्गे पर्व्वतादौ। पुरुषकारेण गोपकर्त्तव्यप्रतीकारेण।

याज्ञवल्क्यः।

पालदोषविनाशे तु पाले दण्डो विधीयते।
अर्द्धत्रयोदश पणाः स्वामिनो द्रव्यमेव तु॥

पालदोषाद्विनाशः पालदोषविनाशः, द्रव्यं विनष्टद्रव्यं मूल्यपरञ्चैतत् मृतस्य दानाशक्यत्वात्।

---

* दैवसनमिति पाठान्तरम्।

† स्वामिनो वानिवेदयदिति पाठान्तरम्।

विष्णुः ।

दिवा पशूनां वृकाद्युपघाते* पाले† त्वनायति पालदोषः विनष्टपशुमूल्यञ्च स्वामिने दद्यात् । अननुज्ञातो दुग्धं दुहन्‡ पञ्चविंशतिं कार्षापणान् ।

अनायति रक्षणार्थमनागच्छति । कार्षापणो वक्ष्यते ।

ब्रह्मपुराणे ।

गृहीतमूल्यो गोपालो गां त्यक्त्वा निर्ज्जने वने ।
ग्रामचारी नृपैर्वध्यः शलाकीव वनेचरः ॥
गोपालहस्तसंस्था गौस्तद्दोषान्म्रियते यदि ।
तदा स एव दण्ड्यः स्याच्छुल्कं दाप्यस्तु गोपतेः ॥
यदा रोगादिदोषेण म्रियते गौर्गृहे क्वचित् ।
तदा स गोपतिर्दण्ड्यो दत्त्वा गोपालवेतनम् ॥

गां जातरोगां, शलाकीवेति शलाकी शिरावैद्यादिः§ स यथा स्वप्रतिकर्त्तव्यं स्वामिनं त्यक्त्वा स्वेच्छया वनगामी दण्ड्यः, तथायमपीत्यर्थः । यदा रोगादीति, यदा प्रतीकारसमर्थे गोपतौ तमप्रतिकुर्व्वति रोगादिना विनष्टा गौस्तदासौ राज्ञा दण्ड्यो गोपस्य वेतनं दापयितव्य इत्यर्थः ।

---

* विषाद्युपघाते इति पाठान्तरम् ।

† गोपाल इति पाठान्तरम् ।

‡ अननुज्ञातो वहन्निति पाठान्तरम् ।

§ शिरावैद्यादिरिति पाठान्तरम् ।

मनुनारदौ ।

अजाविके तु संरुद्धे वृकैः पाले त्वनायति ।
यां प्रसह्य वृको हन्यात्पाले तत्किल्बिषं भवेत् ॥

अजाविकशब्देनाभिभाव्याः पशव उपलक्ष्यन्ते ।
अवरुद्धे अभिभूते ।

तथा ।

तासाञ्चेदवरुद्धानां चरन्तीनां मिथो वने ।
यामुत्प्लुत्य वृको हन्यान्न पालस्तत्र किल्बिषी ॥

मिथः साहित्येन चरन्तीनां, तत्र गवि हतायामित्यर्थः ।

नारदः ।

अनेन सर्व्वपालानां विवादः समुदाहृतः ।
मृतेषु च विशुद्धिः स्याद्वालशृङ्गादिदर्शनात् ॥

अनेन एतेन सर्व्वपालानामश्वादिपालानां विवाद उक्तः

मनुः ।

कर्णौ चर्म्म च बालांश्च वस्त्यस्थिस्नायुरोचनाम्* ।
पशुस्वामिनि दद्याच्च† मृतेष्वङ्गानि दर्शयेत् ॥

कर्णौ चेत्यादिना मृतपशोरसाधारणचिह्नान्युपलक्ष्यन्ते ।
व्यवहितमृते अङ्गानि चिरस्थायीनि शृङ्गादीनि । ह

* वस्ति स्नायूनि रोचनामिति पाठान्तरम् ।

† दद्यास्त्विति पाठान्तरम् ।

# अथ संविद्व्यतिक्रमः।

तत्र बृहस्पतिः।

एषा हि स्वामिभृत्यानां वै क्रिया परिकीर्त्तिता।
संविद्विधानमधुना समासेन निबोधत॥

नारदः।

पाषण्डनैगमादीनां स्थितिः समय उच्यते।
समयस्यानपाकर्म्म तद्विवादपदं स्मृतम्॥

पाषण्डास्त्रयीबाह्याः। नैगमाः पौराः। आदिपदेन गणसङ्घादि-समूहविवक्षया। स्थितिः पारिभाषिकैर्धर्म्मैर्व्यवहारः। अनपाकर्म्म अनुल्लङ्घनम्*।

याज्ञवल्क्यः।

राजा कृत्वा† पुरे स्थानं ब्राह्मणान्न्यस्य तत्र तु।
त्रैविद्यान्वृत्तिमद्ब्रूयात्स्वधर्म्मः पाल्यतामिति॥

पुरे नगरे, स्थानं धवलगृहादि‡, न्यस्य स्थापयित्वा, त्रैविद्यान् त्रयीसम्पन्नान्, वृत्तिमत् हिरण्यादियुक्तम्।

---

* अनुल्लङ्घनमित्यर्थो युज्यते, अन्यथा विवादपदत्वासम्भव इति बोध्यम्।

† ज्ञात्वेति पाठान्तरम्।

‡ धवलगृहादीति पाठान्तरम्।

वृहस्पतिः ।

वेदविद्याविदो* विप्राञ्श्रोत्रियानग्निहोत्रिणः ।
सत्कृत्य† स्थापयेत्तत्र तेषां वृत्तिं प्रकल्पयेत् ॥
अनाच्छेद्यकरास्तेषां‡ प्रदद्याद्गृहभूमयः ।
मुक्ताभाव्याश्च नृपतिर्लेखयित्वा स्वशासने ॥

गृहभूमय इति द्वितीयार्थे प्रथमा आर्षत्वात् समाधेया। मुक्ताभाव्यास्त्यक्तराजदेयाः ।

नित्यं नैमित्तिकं काम्यं शान्तिकं पौष्टिकं तथा ।
पौराणां कर्म्म कुर्य्युस्ते सन्दिग्धेऽर्थे च निर्णयम् ।
ग्रामश्रेणिगणानाञ्च सङ्केतः समयक्रिया ।
बाधाकाले तु सा कार्य्या धर्म्मकार्य्ये तथैव च ॥
चाटचौरभये बाधा सर्व्वसाधारणी स्मृता ।
तत्रोपशमनं§ कार्य्यं सर्व्वं लोकेन¶ केनचित् ॥
कोषेण‖ लेखक्रियया मध्यस्थैर्वा परस्परम् ।
विश्वासं प्रथमं कृत्वा कुर्य्युः कार्य्याण्यनन्तरम् ॥

---

* वेदविद्यायुताञ्शिति पाठान्तरम् ।

† आहूयेति पाठान्तरम् ।

‡ अनाच्छेद्यकरा न आच्छेद्य कर्त्तव्य करः क्रियमाणं प्रसादोत्थं यासां ताः इत्यर्थः, तेषां श्रोत्रियाणामित्यर्थः ।

§ तत्रोऽपशमनमिति पाठान्तरम् ।

¶ सर्व्वैर्लोकैरिति पाठान्तरम् ।

‖ कोषेण दिव्येनेत्यर्थः । कोशेनेति पाठान्तरम् ।

विद्वेषिणो व्यसनिनः शालीनालसभीरवः।
लुब्धातिवृद्ध*बालाश्च न कार्य्याः कार्य्यचिन्तकाः॥
शुचयो वेदधर्म्मज्ञा दक्षा दान्ताः† कुलोद्भवाः।
सर्व्वकार्य्ये प्रवीणाश्च कर्त्तव्याश्च महत्तमाः॥
द्वौ त्रयः पञ्च वा कार्य्याः समूहहितवादिनः।
कर्त्तव्यं वचनं तेषां ग्रामश्रेणिगणादिभिः॥

ग्रामो ग्रामवासिसमूहः। श्रेणिः समानजातीयैकहत्तिकारसमूहः। गणो ब्राह्मणसमूहः। बाधा चौरादिपीड़ा। धर्म्मकार्य्ये सभाप्रपादिसंस्कारे। शालीनोऽप्रगल्भः।

याज्ञवल्क्यः।

कर्त्तव्यं वचनं सर्व्वैः समूहहितवादिनाम्।
यस्तत्र विपरीतः स्यात्स दाप्यः प्रथमं दमम्॥

कात्यायनः।

युक्तियुक्तञ्च यो हन्यादवकुर्य्योऽनवकाशदः।
अयुक्तञ्चैव यो ब्रूयात्प्राप्नुयात्पूर्व्वसाहसम्॥

यो ब्रूयात् कार्य्यचिन्तकेषु।

ब्राह्मणातिदेशे याज्ञवल्क्यः।

श्रेणिनैगमपाषण्डगणानामप्ययं विधिः।
भेदञ्चैषां नृपो रक्षेत्पूर्व्वहत्तिञ्च पालयेत्॥

---

* भुम्बार्त्तवृद्धेति पाठान्तरम्।

† दक्षा दाना इति पाठान्तरम्।

नैगमः पौरसमूहः। गणोऽत्र श्रेण्याद्यन्यब्राह्मणेतरसमूहः*। भेदं धर्म्मव्यवस्थादि†।

नारदः।

पाषण्डनैगमश्रेणिपूगव्रातगणादिषु।
संरक्षेत्समयं राजा दुर्गे जनपदे तथा॥

पूगोऽत्र वणिगादिसमूहः, नानाजातीयानियतवृत्तिसमूह इत्यन्ये। व्रात आयुधीयसमूहः। आदिशब्दः सङ्घगणगुल्मबहुत्वप्रायार्थे।

तथा।

यो धर्म्मः कर्म्म यच्चैषामुपस्थानविधिश्च यः‡।
यच्चैषां वृत्युपादानमनुमन्येत तत्तथा॥

धर्म्मः पारम्परिकाचारः। कर्म्म जीवनानुकूलोचितव्यापारः। वृत्त्युपादानमुपादीयमाना वृत्तिः।

कात्यायनः।

समूहानान्तु§ यो धर्म्मस्तेन धर्म्मेण ते सदा।
प्रकुर्य्युः सर्व्वकार्य्याणि स्वधर्म्मेषु व्यवस्थिताः॥

---

* श्रेण्याद्यब्राह्मणसमूह इति पाठान्तरम्।

† धर्म्मव्यवस्थामिति पाठान्तरम्।

‡ यच्चैषामुपस्थानविनिश्चय इति पाठान्तरम्।

§ समूहिनामिति पाठान्तरम्।

याज्ञवल्क्यः।

निजधर्म्माविरोधेन यस्तु सामयिको भवेत्।
सोऽपि यत्नेन संरक्ष्यो धर्म्मो राजकृतश्च यः॥

सामयिकः समूहयोगक्षेमार्थं मासं राजोपस्थानं कार्य्यमित्यादिरूपः। मासं शान्तिः करणीयेत्यादिरूपो राजकृतो धर्म्मः।

कात्यायनः।

अविरोधेन धर्म्मस्य निर्गतं* राजशासनम्।
तस्यैवाचरणं पूर्व्वं कर्त्तव्यन्तु नृपाज्ञया॥
राज्ञा प्रवर्त्तितान्धर्म्मान् यो नरो नानुपालयेत्।
गर्ह्यः स पापो दण्ड्यश्च लोपयन्राजशासनम्॥

वृहस्पतिः।

सभाप्रपादेवगृहतड़ागारामसंस्कृतिः।
तथानाथदरिद्राणां संस्कारो यजनक्रिया॥
कुलायनं निरोधश्च कार्य्यमस्माभिरंशतः।
यत्रैतल्लिखितं सम्यक्† धर्म्म्या सा समयक्रिया॥
पालनीयाः समस्तैस्तु यः समर्थो विसंवदेत्।
सर्व्वस्वहरणं दण्डस्तस्य निर्व्वासनं पुरात्॥

---

* निकृतमिति पाठान्तरम्।

† पत्रे इति पाठान्तरम्।

तत्र भेदमुपेक्षां वा* यः कश्चित्कुरुते नरः ।
चतुःसुवर्णाः षट् निष्का दण्डस्तस्य विधीयते ॥ †

मनुः ।

यो ग्रामदेशसङ्घानां कृत्वा सत्येन संविदम् ।
विसंवदेन्नरो लोभात्‡ तं राष्ट्राद्विप्रवासयेत् ॥
निगृह्य दापयेदेनं समयव्यभिचारिणम् ।
चतुःसुवर्णान् षट् निष्कान् शतमानञ्च राजतम् ॥
एवं धर्म्मविधिं कुर्य्याद्धार्म्मिकः पृथिवीपतिः ।
ग्रामजातिसमूहेषु समयव्यभिचारिणाम् ॥

कुलायनं कुलीनस्य अयनं§ निरोधो दुर्ज्जनप्रवेशवारणम् । ग्रामः प्रसिद्धएव । देशो ग्रामसमूहः । एकधर्म्मानुगतानां नानादेशनिवासिनां समूहः सङ्घः । निगृह्य धर्षणं कृत्वा, चतुःसुवर्णान् चत्वारः सुवर्णाः परिमाणं निष्काणां येषां ते

---

* सन्नभेदमुपेक्षार्थमिति सन्नभेदमुपेक्षार्थी चेति पाठद्वयम् ।

† अत पर वर्त्तमान भवेत् —

मनु ।

अतऊर्द्धं प्रवक्ष्यामि धर्म्मं समयभेदिनाम् ।

धर्म्मो दण्डादिव्यवस्थाम् । समयभेदिनाम् इदमकार्मि, कर्त्तव्यमिदमकामि परिहार्य्य मिति निश्चयभेदकारिणाम् ।

‡ विसंवदेत लोभात्त्विति पाठान्तरम् ।

§ आमयनमिति पाठान्तरम् ।

तथा। एतच्च साष्टं* शतं सुवर्णानां निष्कमाहुर्मनीषिण इति तथा पञ्चसौवर्णिको निष्क इति च यत्परिमाणान्तरं तद्व्यवच्छेदार्थम्। शतमानं रक्तिकानां विंशत्यधिकं शतत्रयम्। जातिसमूहो नानाजातिसमूहः।

नारदः।

पृथग्गणाश्च ये भिन्द्युर्स्ते विनेया विशेषतः।
आवहेयुर्भयं घोरं व्याधिवत्ते ह्युपेक्षिताः‡॥

याज्ञवल्क्यः।

गणद्रव्यं हरेद्यस्तु संविदं लङ्घयेत्तु§ यः।
सर्व्वस्वग्रहणं कृत्वा तं राष्ट्राद्विप्रवासयेत्॥

गणद्रव्यं ग्रामादिसमूहसाधारणं द्रव्यं, संवित् समयः।

कात्यायनः।

साहसी भेदकारी च गणद्रव्यविनाशकः।
उच्छेद्याः सर्व्वएवैते विख्याप्यैवं नृपैर्भृगुः॥

बृहस्पतिः।

यस्तु साधारणं हिंस्यात्क्षिपेत्त्रैविद्यमेव वा¶।
संक्रियां विहन्याच्च स निर्व्वास्यस्ततः पुरात्॥

---

* साष्टमिति पाठान्तरम्।

† लङ्घयेयुरित्यर्थे समयमिति शेषः।

‡ तेऽत्युपेक्षिता इति पाठान्तरम्।

§ लङ्घयेदिति पाठान्तरम्।

¶ त्रैविद्य एव वेति पाठान्तरम्।

तथा ।

अरुन्तुदः सूचकश्च भेदकृत्साहसी तथा ।
श्रेणिपूगनृपद्विष्टा क्षिप्रं निर्व्वास्यते पुरः* ॥

अरुन्तुदो मर्म्मस्पृक्, सूचकः पिशुनः ।

तथा ।

कुलश्रेणिगणाध्यक्षाः पुरदुर्गनिवासिनः ।
वाग्धिग्दमं परित्यागं† प्रकुर्य्युः पापकर्म्मिणाम् ॥

वाग्धिग्दमं‡ वाचा धिक्कारलक्षणं दण्डम् ।

तथा ।

तैः कृतं यत्स्वधर्म्मेण निग्रहानुग्रहं नृणाम् ।
तद्राज्ञाप्यनुमन्तव्यं निसृष्टार्था हि ते स्मृताः ॥

स्वधर्म्मेण स्वधर्म्माविरोधेन, निसृष्टार्थाः सन्दिष्टकृत्याः§ ।

तथा ।

बाधां कुर्य्युर्यदेकस्य सम्भूता द्वेषसंयुताः ।
राज्ञा ते विनिवार्य्यास्तु शास्याश्चैवानुबन्धिनः ॥
मुख्यैः सह समूहानां विसंवादो यदा भवेत् ।
तदा विचारयेद्राजा स्वधर्म्मे स्थापयेच्च तान् ॥

---

* गत इति पाठान्तरम् ।

† वागधिकसमं दण्डमिति पाठान्तरम् ।

‡ वागधिकसममिति पाठान्तरम् ।

§ भवन्दिष्टकृत्या इति पाठान्तरम् ।

नारदः ।

मिथः सङ्घातकरणमहेतौ शस्त्रधारणम् ।
परस्परोपघातञ्च तेषां राजा न मर्षयेत् ॥

मिथः सङ्घातकरणं प्रकृतिसङ्घातप्रतिकूलावान्तरमेलककरणम्, अहेतौ भयादिहेतुमन्तरेण,† परस्परोपघातं परस्परानिष्टकरण तेषां नारदपूर्व्वोक्तपाषण्डादीनाम् ।

कात्यायनः ।

एकपात्रेऽथ पङ्क्त्यां‡ वा सम्भोक्ता येन यो भवेत् ।
अकुर्व्वंस्तत्तथा दण्ड्यस्तस्य दोषमदर्शयन् ॥

भोजनविरोधिने दोषमदर्शयन् तत्तथा अकुर्व्वाणो दण्ड्यः ।

बृहस्पतिः ।

सम्भूयैकमतं कृत्वा§ राजभागं हरन्ति ये ।
ते तद्दशगुणं दाप्या विनेयाश्च पलायिनः ॥

नारदः ।

प्रतिकूलञ्च यद्राज्ञः प्रकृत्यवमतञ्च यत् ।
बाधकञ्च यदर्थानां तत्तेभ्यो विनिवर्त्तयेत् ॥

---

* प्रतिकूलावान्तरमेलककरणमिति पाठान्तरम् ।

† अहेतौ शस्त्रधारणं भयादिहेतुमन्तरेण शस्त्रधारणमिति पाठान्तरम् ।

‡ अन्नपङ्क्त्या इति पाठान्तरम् । अत्र पङ्क्त्यामिति सप्तम्यन्तता युज्यते ।

§ सम्भूयैकमतीभूत्वेति पाठान्तरम् ।

दोषवत्करणं यत्स्यादनाम्नायप्रकल्पितम् ।
प्रवृत्तमपि तद्राजा श्रेयस्कामो निवर्त्तयेत्* ॥

प्रवृत्यवमतं स्वभावतो गर्हितम्, अर्थानां बाधकं द्यूतादि, दोषवत्करणमनिष्टफला कृतिः, अनाम्नायप्रकल्पितम् आगमाप्रसिद्धम्, तेभ्यः पाषण्डादिभ्यः ।

याज्ञवल्क्यः ।

समूहकार्य्य आयातान् कृतकार्य्यान्विसर्जयेत् ।
सदानमानसत्कारैः† पूजयित्वा महीपतिः ॥
समूहकार्य्यप्रहितो यल्लभेत तदर्पयेत् ।
एकादशगुणं दाप्यो यद्यसौ‡ नार्पयेत्स्वयम् ॥

राजाधिकारे बृहस्पतिः ।

ततो लभ्येत यत्किञ्चित्सर्व्वेषामेव तत्समम् ।
षाण्मासिकं मासिकं वा विभक्तव्यं यथांशतः ॥

षाण्मासिकादिपदमुपलक्षणार्थम्§ ।

देयं वा लिखितज्ञान्धस्त्रीबालातुररोगिषु ।
सन्तानिकादिषु तथा¶ एष धर्म्मः सनातनः ॥

---

* निवर्त्तयेदिति पाठान्तरम् ।

† सुदानमानसत्कारैरिति पाठान्तरम् ।

‡ यद्ययमिति पाठान्तरम् ।

§ षाण्मासिकाद्युपलक्षणार्थमिति पाठान्तरम् ।

¶ सन्तानादिषु तथापरमिति पाठान्तरम् ।

यत्तैः प्राप्तं रक्षितञ्च गणार्थं वा प्रकल्पितम्* ।
राजप्रसादलब्धञ्च सर्व्वेषामेव तत्समम् ॥

आतुरादन्यो रोगी, हलायुधेन तु आतुर इत्यत्र अकर इति पठितम्, अकरो हस्तशून्य इति च व्याख्यातम्। सन्तानि-कादिविध्वनेन† पूर्व्वोक्तव्यतिरिक्तगणश्रेण्यादिकर्त्तव्यबुद्धिविषय-परिग्रहः ।

कात्यायनः ।

गणमुद्दिश्य यत्किञ्चित्कृत्वर्णं‡ भक्षितं भवेत् ।
आत्मार्थं विनियुक्तं वा देयं तैरेव तद्भवेत् ॥

गणमुद्दिश्य गणप्रयोजनमन्तरेणैव गणप्रयोजनमभिधाय ऋणं कृत्वा सङ्कृतऋणमेव§ यै. कैश्चिद्भक्षितं तैरेव तद्देयं न सङ्घेनेत्यर्थः ।

तथा ।

गणानां श्रेणिवर्गाणां¶ गताः स्युर्ये तु मध्यताम् ।
प्राप्तनस्य धनर्णस्य समांशाः सर्व्वएव ते ॥

---

* गणार्थं वाऽर्पणं कृतमिति पाठान्तरम् ।

† सन्तानादिविध्वनेनेति पाठान्तरम् ।

‡ यैर्कर्णमिति पाठान्तरम् ।

§ सङ्कृतऋणमभिधेति पाठान्तरम् ।

¶ श्रेणिवर्गाणामिति पाठान्तरम् ।

अर्व्वागपि ये सर्व्वसम्मत्या गणादिमध्यप्रविष्टास्तेऽपि सर्व्वे पूर्व्वधनस्य ऋणस्य च भागिनो भवन्तीत्यर्थः।

तथा।

तथैव भोज्यवैभाज्यदानधर्म्मक्रियासु च।
समूहस्थोऽंशभागी स्यात्प्रगतस्त्वंशभाग् न तु॥

क्रियेतिपदं भोज्यादिभिः प्रत्येकमभिसम्बध्यते। भोज्यं मोदकादि। वैभाज्यं धान्यादि। प्रगतस्त्वंशभाग् न तु, प्रगतः निजप्रयोजनमात्रेण गणादिभ्यो वहिर्भूतः नांशभागित्यर्थः।

इति विवादरत्नाकरे संविद्व्यतिक्रमतरङ्गः।



# अथ विक्रीयासम्प्रदानम्।

अत्र वृहस्पतिः।

समासेनोदितस्त्वेष समयाचारनिश्चयः।
क्रयविक्रयसंजातो विवादः श्रूयतामयम्॥

नारदः।

विक्रीय पण्यं मूल्येन क्रेतुर्यन्न प्रदीयते।
विक्रीयासम्प्रदानं तद्विवादपदमुच्यते॥

वृहस्पतिः*।

जङ्गमं स्थावरञ्चैव द्रव्ये द्वे समुदाहृते।
क्रयकाले पण्यशब्द उभयोरपि च स्मृतः॥

नारदः।

लोकेऽस्मिन् द्विविधं द्रव्यं स्थावरं जङ्गमं तथा।
क्रयविक्रयधर्मेषु सर्व्वं तत्पण्यमुच्यते॥
षड्विधस्तस्य च बुधैर्दानादानविधिः स्मृतः।
गणिमं तुलिमं मेयं क्रियया रूपतः श्रिया॥

गणिमं पूगादि, तुलिमं सुवर्णादि, मेयं धान्यादि, क्रिययेति, भारवहनादिक्रियया क्रीयमाणं वृषभादि, रूपतः लावण्यतः क्रीयमाणमङ्गनादि, श्रिया दीप्त्या क्रीयमाणं मुक्तादि।

---

* तत्र वृहस्पतिरिति पाठान्तरम्।

तथा ।

विक्रीय पण्यं मूल्येन क्रेतुर्यो न प्रयच्छति ।
स्थावरस्य चयं दाप्यो जङ्गमस्य क्रियाफलम् ॥

चयः शस्याद्युपघातेनोपचयः*। क्रिया भारवहनादिका। फलं चीरादि।

तथा।

अर्वाचेदपचीयेत सोदयं पण्यमावहेत्।
स्थायिनामेष नियमो दिग्लाभो दिग्विचारिणाम् ॥

यदि विक्रेता प्राप्तमूल्योऽपि पण्यं न ददाति, तच्च पण्यं कालवशादपचितार्घं भवति तदासौ तस्मै† तद्देशस्थाय क्रेत्रे सोदयं क्रयकालीनमूल्येयावत्तत्कालेन त्रुटितं, तत्सहितं पण्यं दापयितव्यः‡। यच क्रेता दिग्विचारी बणिगादिः, तस्मै तद्देशान्तरानुरूपलाभसहितं पण्यं दाप्य इत्यर्थः।

विष्णुः।

गृहीतमूल्यं यः पण्यं क्रेतुर्नैव दद्यात्, तस्यासौ सोदयं दाप्यः, राज्ञा च पणशतं दण्ड्यः।

मनुः।

क्रीत्वा विक्रीय वा किञ्चित् यस्येहानुशयो भवेत्।
सोऽन्तर्दशाहे तद्द्रव्यं दद्याच्चैवाददीत वा ॥

---

* शस्याद्युपघातेनापचय इति पाठान्तरम्।

† तदासौ इति पाठान्तरम्।

‡ दापयितव्यमिति पाठान्तरम्।

अनुशयोऽकरणमतिः पश्चात्तापइत्यन्ये। दद्यात्प्रत्यर्पयेत्क्रेता विक्रेतरीति शेषः। आददीत क्रेतृसकाशादिक्रेतेति शेषः। लोहलाचादि * व्यतिरिक्तोपभोगाविनश्वरगृहक्षेत्रयानादिकं वीजञ्चास्य विषयः। एतच्च क्रीत्वानुशये व्यक्तीभविष्यति।

तथा।

परेण तु दशाहस्य न दद्यान्नैव दापयेत्।
आददानो ददच्चैव राज्ञा दण्ड्यः शतानि षट्॥

शतानि पणानाम्।

तथा।

यस्मिन्यस्मिन्कृते कार्य्ये यस्येहानुशयो भवेत्।
तमनेन विधानेन धर्म्म्ये पथि निवेशयेत्॥

यस्मिन् यस्मिन्निति सामान्यपदेन वीप्सया च क्रयादन्यत्रापि ऋणप्रयोगादौ अनुशये कृते सर्व्वत्र क्रयविक्रयानुशयधर्म्मार्पण-प्रत्यर्पणपणषट्शतदण्डरूपा † यथायथमतिदिश्यन्ते। अनेन क्रयविक्रयानुशयप्रकारोक्तेन।

कात्यायनः।

क्रीत्वा प्राप्तं न गृह्णीयाद्यो न दद्याददूषितम्।
स मूल्याद्दशभागन्तु‡ दत्त्वा स्वं द्रव्यमाप्नुयात्॥

प्राप्तं स्ववशतां नीतम्।

---

* लोहशाखादीति पाठान्तरम्।

† षट्पणशतदण्डरूपा इति पाठान्तरम्।

‡ दशम भागमिति पाठान्तरम्।

स्ववशतामनीते तु स एव विशेषमाह ।

अप्रमेऽर्थे क्रियाकारे कृते नैवं प्रदापयेत् ।

एवं धर्म्मो दशाहात्तु परतोऽनुशयो न तु ॥

क्रियाकारे साक्षिलेख्यादौ । स्ववशतामगतस्य क्रीतस्यापि अग्रहणेन मूल्याद्यभागदानमित्यर्थः ।

नारदः ।

उपहन्येत वा पण्यं दह्येतापह्रियेत वा ।

विक्रेतुरेव सोऽनर्थो विक्रीयासम्प्रयच्छतः ॥

याज्ञवल्क्यः ।

राजदैवोपघातेन पण्यदोष उपागते ।

हानिर्विक्रेतुरेवासौ याति तस्याप्रयच्छतः ॥

नारदः ।

निर्दोषं दर्शयित्वा तु सदोषं यः प्रयच्छति ।

मूल्यन्तु द्विगुणं दाप्यो विनयं तावदेव तु ॥

बृहस्पतिः ।

ज्ञात्वा सदोषं यः पण्यं विक्रीणीतविचक्षणः ।

तदेव द्विगुणं दाप्यस्तत्समं विनयं तथा ॥

विक्रीणीत दोषमनुक्त्वेति शेषः ।

तथा ।

मत्तोन्मत्तेन विक्रीतं हीनमूल्यं भयेन वा ।

अस्वतन्त्रेण मूढेन त्याज्यं तस्य पुनर्हरेत् ॥

त्याज्यं तस्य क्रेतुरिति शेषः । पुनर्हरेत् विक्रेतैव एतच्च* दशाहात्परतोऽपि ।

याज्ञवल्क्यः† ।

अन्यहस्ते च विक्रीतं दुष्टं वा दुष्टवद्यदि ।

विक्रीयते दमस्तत्र मूल्यात्तु द्विगुणं हरेत् ‡ ॥

नारदः ।

तथान्यहस्ते विक्रीय योऽन्यस्मै तत्प्रयच्छति ।

सोऽपि तद्द्विगुणं दाप्यो विनयं तावदेव तु ॥

अन्यत्र मूल्यसंधारं कृत्वा तद्वस्तुनस्ततोऽन्यस्मै तद्वस्तु त्यजति, सोऽपि तद्द्विगुणं वस्तु विनयञ्च तावन्तं दाप्य इत्यर्थः ।

याज्ञवल्क्यः ।

सत्यङ्कारकृतं द्रव्यं द्विगुणं प्रतिपादयेत् ।

यत्क्रेतुकामेन क्रयपरिस्थितये विक्रेत्रे समर्पितं§ तत्सत्य-

* एतदिति पाठान्तरम् ।

† बृहस्पतिरिति पाठान्तरम् ।

‡ दमश्च मूल्यतो द्विगुणो भवेदिति पाठान्तरम् ।

§ अर्पितमिति पाठान्तरम् ।

द्वारपदार्थः। तत्राग्रे विक्रेता विक्रये विप्रतिपन्नो* द्विगुणं क्रेत्रे दद्यादित्यर्थः।

व्यासः।

सत्यङ्कारञ्च यो दद्याद्यथाकालं न दृश्यते।
पण्यं भवेन्निसृष्टन्तु† दीयमानमगृह्णतः॥

यः क्रेता क्रयणार्थं सत्यङ्कारद्रव्यं‡ दद्यात्, तस्य पण्यं दीयमानमगृह्णतः तन्निसृष्टं त्यक्तमेव भवेत् विक्रेत्रे, तेन तद्द्रव्यं न क्रेत्रा विक्रेतुः पार्श्वे ग्राह्यमित्यर्थः।

नारदः।

दीयमानं न गृह्णाति क्रीतं पण्यञ्च यः क्रयी।
विक्रीणानस्तदन्यत्र विक्रेता नापराध्नुयात्॥

याज्ञवल्क्यः।

विक्रीतमपि विक्रेयं पूर्व्वक्रेतर्य्यगृह्णति।
हानिश्चेत्क्रेतृदोषेण क्रेतुरेव हि सा भवेत्॥

नारदः।

दत्तमूल्यस्य पण्यस्य विधिरेष प्रकीर्त्तितः।
अदत्तेऽन्यत्र समयान्न विक्रेतुरतिक्रमः॥

अन्यत्र समयान्मासादिना मूल्यदानव्यवस्थां विना।

---

* विप्रतिपन्ने इति पाठान्तरम्।

† निसृष्टमिति पाठान्तरम्।

‡ सत्यङ्कारं द्रव्यमिति पाठान्तरम्।

अव्यवस्थितार्घे विशेषमाह स एव ।

> लाभार्थं वणिजां सर्व्वपण्येषु क्रयविक्रयः ।
> स च लाभोऽर्घमासाद्य महान्भवति वा न वा ॥
> तस्माद्देशे च काले च प्रक्रमेतार्घविद्वणिक्* ।
> न जैह्मेन प्रवर्त्तेत श्रेयानेष वणिक्पथः ॥

मूल्यमव्यवस्थाप्य क्रीते देशकालानुसारेण व्यवस्थापको वणिक् प्रक्रमेत अनुरूपं मूल्यं प्रकल्पयेत्, न जैह्मेन न कुटिलतया प्रवर्त्तेत, उचितं मूल्यं न खण्डयेदित्यर्थः ।

इति विवादरत्नाकरे विक्रीयासम्प्रदानतरङ्गः ।



---

* प्रक्रमतार्घविद्वणिगिति पाठान्तरम् ।

## अथ क्रीत्वानुशय:* ।

नारद: ।

क्रीत्वा मूल्येन य: पण्यं क्रीतं न बहु मन्यते ।
क्रीत्वानुशय† इत्येतद्विवादपदमुच्यते ॥
क्रीत्वा मूल्येन य: पण्यं दु:क्रीतं मन्यते क्रयी ।
विक्रेतु: प्रतिदेयं तत्तस्मिन्नेवाह्न्यविक्षितम्‡ ॥
द्वितीयेऽह्नि ददत्क्रेता मूल्यात्त्रिंशांशमाप्नुयात्§ ।
द्विगुणं तत्तृतीयेऽह्नि परत: क्रेतुरेव तत् ॥

मूल्यात्त्रिंशांश मूल्यादधिक त्रिंशत्तमभागमित्यर्थ:। एतच्च¶ बीजान्यभोगविनश्वरवस्त्रादिविषयम् ।

बीजविषये‖ उपभोगाविनश्वरलौहादिविषये** पुनरन्यमेव प्रत्यर्पणविधिमाह याज्ञवल्क्य: ।

---

* क्रीतानुशय इति पाठान्तरम् ।

† क्रीतानुशय इति पाठान्तरम् ।

‡ अवीक्षितमपरीक्षितमित्यर्थ: ।

§ आप्नुयादिति पाठान्तरम् ।

¶ एतत्त्विति पाठान्तरम् ।

‖ विक्रये इति पाठान्तरम् ।

** विक्रय इति पाठान्तरम् ।

दशैकपञ्चसप्ताहव्राहमासार्द्धमासिकम्।
बीजायोवाह्यरत्नस्त्रीदोह्यपुंसां परीक्षणम्॥

बीजं व्रीह्यादि,* अयो लौहं, वाह्यो बलीवर्दादिः, रत्नं मुक्ता-प्रवालादि, स्त्री दासी, दोह्यं महिष्यादि, पुमान्दासः। एषां बीजादीनां यथाक्रमेण दशाहादिकः परीक्षाकालो बोध्यः। परीक्ष्यमाणे बीजादौ यद्यसम्यग्बुद्ध्यानुशयो भवति, तदा दशाहाद्यभ्यन्तरे एव क्रयनिवृत्तिर्न पुनस्तदूर्द्ध्वमित्युपदेशार्थः। पूर्व्वप्रकरणे लिखितं क्रीत्वेत्यादि मनुवचनन्तु दशाहाद्यनुशय-विबोधकवचनविषये, सर्व्वञ्चैतदपरीक्षितक्रीतविषयम्।

कात्यायनः।

क्रीत्वा वानुशयात्पण्यं त्यजेद्दोह्यादि यो नरः।
अदुष्टमेव काले तु स मूल्याद्दशमं वहेत्॥

काले द्रव्यार्पणकाले, इदमप्यपरीक्षितक्रीते।

तथा।

क्रीत्वा गच्छन्ननुशयं क्रयी हस्तमुपागते।
षड्भागं तत्र मूल्यस्य दत्त्वा क्रीतं त्यजेद्‌ध्रुवः॥

हस्तमुपागते स्ववशमागते। एतेन स मूल्याद्दशमं वहेदिति पूर्व्वोक्तं स्ववशानीतद्रव्यविषयम्। प्राक्प्रपञ्चितञ्चैतत्।

---

* धान्यादीति पाठान्तरम्।

विक्रीयासम्प्रदाने क्रीतानुशयधर्ममाह याज्ञवल्क्यः ।

क्षयं वृद्धिञ्च वणिजां पण्यानामविजानता ।

क्रेता नानुशयः कार्य्यः कुर्व्वन् षड्भागदण्डभाक् ॥

परीक्षितक्रीतपण्यानां क्रयोत्तरकालं क्रयकालपरिमाणतः* ऊर्द्ध्वं वृद्धिं लाभमपश्यता विक्रेता महार्घतानिबन्धनं पण्यक्षयमपश्यता च क्रेता नानुशयः कार्य्यः अन्यथा तु कार्य्य इत्युक्तं भवति। कल्पतरौ त्वविजानतेति स्थाने अभिजानतेति पाठो दर्शितः स तु याज्ञवल्क्यप्रकाशहलायुधपारिजातविरोधात् प्रमादपाठ इति सूचितः।

परीक्षितक्रये नारदः।

क्रीत्वा नानुशयं कुर्य्याद्वणिक् पण्यविचक्षणः।

क्षयं वृद्धिञ्च जानीयात्पण्यानां यस्य यादृशी ॥

क्रेता पण्यं परीक्षेत प्राक् स्वयं गुणदोषतः।

परीक्ष्याभिमतं क्रीतं विक्रेतुर्न भवेत्पुनः ॥

बृहस्पतिरपि।

परीक्षेत स्वयं पण्यमन्येषाञ्च प्रदर्शयेत्।

परीक्षितं बहुमतं गृहीत्वा न पुनस्त्यजेत् ॥

अथ व्यासः।

तृणकाष्ठेष्टकासूत्रधान्यासवरसस्य च।

वस्त्रकुप्यहिरण्यानां सद्य एव परीक्षणम् ॥

---

* क्रयकालपरिमाणतोऽर्घ्यन्यूनतामिति पाठान्तरम्।

नारदः।

त्र्यहाद्दोह्यं परीक्षेत पञ्चाहाद्वाह्यमेव च।
मुक्तारत्नप्रवालानां सप्ताहात्स्यात्परीक्षणम्॥
द्विपदामर्द्धमासन्तु पुंसां तद्द्विगुणं स्त्रियाः।
दशाहः सर्व्वबीजानामेकाहो लोहवाससाम्॥

नारदेन एकाहेन वासोग्रहणाद्ग्रासवाक्येऽपि सद्यःपदं तथैव नेयम् *।

नारदोक्तक्रमेण परीक्षाकालमुक्त्वा वृहस्पतिः।
अतोऽर्व्वाक् पण्यदोषस्तु यदि संजायते क्वचित्।
विक्रेतुः प्रतिदेयं तत्क्रेता मूल्यमवाप्नुयात्॥

कात्यायनः।
अविज्ञातन्तु यत्क्रीतं दुष्टं पश्चाद्विभावितम्।
क्रीतं तत्स्वामिने देयं पण्यं कालेऽन्यथा न तु॥

काले तत्परीक्षाकाले, अन्यथा परीक्षाकालादूर्द्धम्।

मनुः।
नान्यदन्येन संसृष्टं रूपं विक्रयमर्हति।
न सावद्यं न च न्यूनं न दूरे न तिरोहितम्॥

अन्यत्कुङ्कुमादि, अन्येन हीनमूल्येन कुसुम्भादिना, संसृष्टं मिश्रितं, रूपं पण्यं, सावद्यं सदोषं उक्तेतरदोषपरमेतत्, न्यूनं

* तथैवानुसन्धेयमिति पाठान्तरम्।

मानहीनं, दूरे दूरस्थिततया अज्ञातगुणदोषमित्यर्थः, तिरोहितं वस्त्रादिना पिहितम्।

नारदः।

परिभुक्तन्तु यद्वासः क्लिष्टरूपं मलीमसम्।
सदोषमपि यत्क्रीतं विक्रेतुर्न भवेत्पुनः॥

सदोषमपि ज्ञात्वेति शेषः। एतच्च* ज्ञातदोषक्रीतवस्त्वन्तरेऽपि द्रष्टव्यं न्यायतौल्यात्।

इति विवादरत्नाकरे क्रीतानुशयतरङ्गः।

---

* एतदिति पाठान्तरम्।

# अथ सीमाविवादः।

तत्र बृहस्पतिः।

क्रयविक्रयानुशये विधिरेष प्रदर्शितः*।

ग्रामक्षेत्रगृहादीनां सीमावादं निबोधत॥

तत्र नारदः।

सेतुकेदारमर्य्यादाविकृष्टाकृष्टनिर्णये।

क्षेत्राधिकारो यत्र स्याद्विवादः क्षेत्रजस्तु सः॥

सेतुस्तोयप्रतिबन्धकोबन्धः। केदारमर्य्यादा केदारसीमा, विकृष्टं खिलं सदुत्कृष्टं, अकृष्टं प्रहतं सदकृष्टं, एषां निर्णये निर्णयार्थम्। यत्र विवादे क्षेत्रमधिक्रियते, स विवादः क्षेत्रज उच्यते।

कात्यायनः।

आधिक्यं न्यूनता चास्ते अस्तिनास्तित्वमेव च।

अभोगे भुक्तिः सीमा च षड् भूवादस्य हेतवः॥

अभोगे भोगशून्ये भुक्तिरेव भोगहेतुः।

मनुः।

सीमां प्रति समुत्पन्ने विवादे ग्रामयोर्द्वयोः।

ज्यैष्ठे मासि नयेद्देनां सुप्रकाशेषु सेतुषु॥

नयेदुन्नयेत्। सेतुष्विति सीमालिङ्गपरम्। सुप्रकाशेषु जलादि-

---

* प्रकीर्त्तित इति पाठान्तरम्।

नागादालेषु । ज्येष्ठपदमपि सीमालिङ्गव्यञ्जककालोपलक्षणार्थम् ।

बृहस्पतिः ।

निवेशकाले कर्त्तव्यः सीमाबन्धविनिर्णयः ।
प्रकाशोपांशुचिह्नैश्च लक्षितः संशयापहः ॥

निवेशकाले ग्रामादिनिर्माणकाले । प्रकाशचिह्नैर्वृक्षादिभिः । उपांशुचिह्नैः करीषेष्टकादिभिः ।

मनुः ।

सीमावृक्षांस्तु कुर्व्वीत न्यग्रोधाश्वत्थकिंशुकान् ।
शाल्मलीशालतालांश्च क्षीरिणश्चैव पादपान् ॥
गुल्मान्वेणूंश्च* विविधान् शमीवल्लीस्थलानि च ।
शरान् कुब्जकगुल्मांश्च तथा सीमा न नश्यति ॥
तड़ागान्युदपानानि वाप्यः प्रस्रवणानि च ।
सीमासन्धिषु कार्य्याणि देवतायतनानि च ॥

गुल्माः प्रकाण्डरहिताः सटाः† वल्ली गुडूच्यादयः । स्थलानि कृत्रिममृत्पिण्डाः । कुब्जकरूपाः गुल्माः । तड़ागानि महाम्भांसि, वाप्यः पुष्करिण्यः, उदपानं कूपः, प्रस्रवणानि नदीव्यतिरिक्तस्रोतांसि‡ ।

---

* वेणूंश्चेति पाठान्तरम् ।

† साटा इति झाटा इति च पाठान्तरम् ।

‡ व्यतिरिक्तसीतांसीति पाठान्तरम् ।

बृहस्पतिः ।

कूपवापीतडागानि चैत्यारामसुरालयाः ।
स्थलनिम्ननदीस्रोतः शरगुल्मास्तथाशयः* ॥
प्रकाशचिह्नान्येतानि सीमायां कारयेत्सदा ।
निहितानि† तथान्यानि यानि भूमिर्न भक्षयेत् ॥

निहितानि सीमायां निहितानि कारयेत् यानि भूमिर्न भक्षयेत् न नाशयेत् न मृत्तिकात्व नयेदिति यावत् ।

मनुः ।

उपच्छन्नानि चान्यानि सीमालिङ्गानि कारयेत् ।
सीमाज्ञाने नृणां वीक्ष्य लोके नित्यं विपर्ययम् ॥
अश्मनोऽस्थीनि गोवालांस्तुषान्‡ भस्मकपालिकाः ।
करीषमिष्टकाङ्गारान् शर्करा वालुकास्तथा§ ॥
यानि चैवंप्रकाराणि कालाद्भूमिर्न भक्षयेत् ।
तानि सन्धिषु सीमाया अप्रकाशानि कारयेत् ॥
विशेषेण प्रकाशे तु पलाशकिंशुकौ मतौ ॥

उपच्छन्नानि आवृतानि । अन्यानि वक्ष्यमाणानि अश्मादीनि ।

---

* शरगुल्माश्मकादय इति पाठान्तरम् ।

† निम्नगामीति पाठान्तरम् ।

‡ स्थपिति पाठान्तरम् ।

§ मथति पाठान्तरम् ।

कपालिका: कर्परा:। अङ्गारा निर्व्वाणोल्मुका:। कोद्रलः* इति यस्य† प्रसिद्धि:। शर्करा: क्षुद्रभाण्डावयवा: एवम्प्रकाराणि कर्करादीनि‡। प्रकाशे तु पलाश: प्रसिद्ध:, किंशुक: पलाशसदृश: कण्टकयुत:।

बृहस्पति:।

करीषास्थितुषाङ्गारशर्कराश्मकपालिका:§।
सिकतेष्टकगोबालकार्पासास्थीनि भस्म च॥
प्रक्षिप्य कुम्भेष्वेतानि सीमान्तेषु निधापयेत्।
तत: पौगण्डबालानां प्रयत्नेन प्रदर्शयेत्॥
वार्द्धक्ये च शिशूनां ते दर्शयेयुस्तथैव च।
एवं परम्पराज्ञाने सीमाभ्रान्तिर्न जायते॥

ते पौगण्डबाला:।

मनु:।

एतैर्लिङ्गैर्नयेत्सीमां राजा विवदतां नृणाम्।
पूर्व्वभुक्त्या च सततमुदकस्यागमेन च॥

सततमविच्छेदेन पूर्व्वभुक्त्या नयेदित्यन्वय:¶। उदकस्यागमो जलप्रवाह:।

---

* कोडाल इति पाठान्तरम्।

† येषामिति समीचीनतया प्रतिभाति।

‡ शर्करादीनीति पाठान्तरम्।

§ कर्कराश्मकपालिका इति पाठान्तरम्।

¶ दित्यर्थ इति पाठान्तरम्।

समुन्नयेयुः सीमामित्यनुवृत्तौ नारदः।

निम्नगापहृतोत्सृष्टनष्टचिह्नासु* भूमिषु।
तत्प्रदेशानुमानेन† प्रमाणैर्भोगदर्शनैः॥

निम्नगापहृता उत्सृष्टा‡ या नष्टचिह्ना भूमयः, तासु तत्प्रदेशानुमानैः प्रदेशस्थितद्रव्यमानैः सीमा नेयेति।

मनुः।

यदि संशय एव स्याल्लिङ्गानामपि दर्शने।
साक्षिप्रत्यय§ एव स्याद्विवादे सीमनिश्चयः॥

साक्ष्यधीनः प्रत्ययः साक्षिप्रत्ययः।

कात्यायनः।

तस्मिन् भोगः प्रयोक्तव्यः स च¶ साक्षिषु तिष्ठति।
लेख्यारूढश्चेतरच्च साक्षी मार्गद्वयान्वितः॥

तस्मिन् सीमानिर्णये भोगः प्रयोक्तव्यः भोगः प्रमाणत्वेन ज्ञातव्यः। साक्षिषु भोगश्चेत्स्थिति विवक्षितम्।

मनुः।

ग्रामेयककुलानाञ्च समक्षं सीमसाक्षिणः।
प्रष्टव्याः सीमलिङ्गानि तयोश्चैव विवादिनोः॥

---

* निम्नगापहृतोच्छिन्ननष्टचिह्नास्विति पाठान्तरम्।

† तत्पूर्वानुमानैरिति पाठान्तरम्।

‡ उच्छिन्ना इति पाठान्तरम्।

§ साक्ष्य प्रत्यय इति पाठान्तरम्। साक्ष्याणाम् प्रत्यय साक्ष्य प्रत्यय इति तदर्थे।

¶ चरिष्यति पाठान्तरम्।

ते पृष्टास्तु यथा ब्रूयुः* सामन्ताः सीमनिश्चयम् ।
तथा तत्र निबध्नीयात्सामन्तांस्तांश्च नामतः ॥
तत्सभावे च चत्वारो ग्रामाः सीमान्तवासिनः ।
सीमाविनिर्णयं कुर्य्युः प्रयता राजसन्निधौ ॥

ग्रामेयका ग्राम्याः तेषां कुलं समूहः । विवादिनोः समच-मित्यन्वयः† । ग्रामा ग्रामीणाः, सीमान्तवासिनः सन्निहित-वासिनः । निबध्नीयात् पत्रे लेखयेत् विनिर्णयं श्रवण-परम्परया भोगेन सीमामुन्नयेयुः ।‡

याज्ञवल्क्यः ।

सामन्ता वा समग्रामाश्चत्वारोऽष्ट दशापि वा ।
रक्तस्रग्वसनाः सीमां नयेयुः क्षितिधारिणः ॥

समग्रामाः समाः समसंख्याः ग्रामाः ग्राम्याः तेन समसंख्या ग्राम्या इत्युक्तं भवति । एतदेव विवृतं चत्वार इत्यादिना ।

कात्यायनः ।

तेषामभावे सामन्ता मौलवृद्धोद्धृतादयः ।
स्थावरे षट्प्रकारेऽपि नात्र कार्य्या विचारणा ॥

---

* कुर्य्युरिति पाठान्तरम् ।

† मिलयेत् इति पाठान्तरम् ।

‡ पुरुषपरम्पराभोगेन सीमायाँ नयेयुरिति पाठान्तरम् ।

तेषां साक्षिणामभावे षट्प्रकारे अंशन्यूनताधिक्यादिषट्प्रकारत्वाभूवादे* ।

तथा ।

क्षेत्रवस्तुतड़ागेषु कूपोपवनसेतुषु† ।
द्वयोर्विवादे सामन्तः प्रत्ययः सर्व्ववस्तुषु ॥

सामन्तः सीमान्तवासी ‡

तथा ।

सीमान्तभावात्§ सामन्तैः कुर्य्यात्क्षेत्रादिनिर्णयम्¶ ।
ग्रामसीमासु च तथा तद्वच्च नगरदेशयोः ॥
स्वार्थसिद्धौ प्रदुष्टेषु सामन्तेष्वर्थगौरवात् ।
तत्संसक्तेषु|| कर्त्तव्य उद्धारो नात्र संशयः ॥
संसक्त**सक्तदुष्टेषु तत्संसक्ताः†† प्रकीर्त्तिताः ।
कर्त्तव्या न प्रदुष्टास्तु राज्ञा धर्म्मं विजानता ॥

---

* भूमिविवादे इति पाठान्तरम् ।
† क्षेत्रवापीतड़ागेषु कूपेषु जलसेतुष्विति पाठान्तरम् ।
‡ सीमान्ते वासीति पाठान्तरम् ।
§ सामन्तभावादिति पाठान्तरम् ।
¶ कुर्य्यादिति वादे इति च पाठान्तरम् ।
|| तत्संयुक्तेष्विति पाठान्तरम् ।
** संयुक्तेति पाठान्तरम् ।
†† तत्संयुक्ता इति पाठान्तरम् ।

सामन्तेषु दोषग्रहायां ततोऽन्ये दुष्टनिर्णयाय आदरणीयाः। तेष्वपि ग्रहायामन्ये, नतु दुष्टाः सामन्तमात्रेण पुरस्कार्या इत्यर्थः।

तथा।

त्यक्त्वा दुष्टांस्तु सामन्तानन्यान्मौलादिभिः सह।
समीक्ष्य कारयेत्सीमामेवं धर्मविदो विदुः॥
सामन्ताः साधनं पूर्वमनिष्टौक्तौ गुणान्विताः।
द्विगुणास्तूत्तरा ज्ञेयास्ततोऽन्ये त्रिगुणा मताः॥

अनिष्टौक्तौ तेषां दोषोक्तौ तेषां ग्रहाभावे तात्पर्यं, तेन प्रथमसामन्तेषु दोषग्रहायां तत्संसक्ता द्विगुणाः, तेषामपि दोषग्रहायां तत्संसक्तास्त्रिगुणा ग्राह्या इति सामन्ता इत्यादेरर्थः।

शङ्खलिखितौ।

गृहक्षेत्रयोर्विरोधे सामन्तप्रत्ययः सामन्तविरोधे अभिलेख्यप्रत्ययः, अभिलेख्यविरोधे ग्रामनगरवृद्धश्रेणिप्रत्ययः, ग्रामनगरवृद्धश्रेणिविरोधे दशवर्षभुक्तानुभुक्तमन्यत्र राजविप्रस्वात्।

सामन्तविरोधे सामन्तानां परस्परविमतौ अभिलेख्यं लिखितं दशवर्षभुक्तानुभुक्तं दशवर्षाणि निरन्तरं भुक्तं प्रमाणं तथान्यत्र राजविप्रस्वान्नृपतिब्राह्मणसम्भूतद्रव्यात्।

नारदः।

क्षेत्रसीमाविरोधे तु सामन्तेभ्यो विनिर्णयः।
नगरग्रामगणिनो ये च वृद्धतमा नराः॥

ग्रामसीमासु च बहिर्ये स्युस्तत्कृषिजीविनः*।
गोपाः शाकुनिका व्याधा ये चान्ये वनगोचराः॥

नगरग्रामगणिनो नगरग्रामजनमुख्याः तत्कृषिजीविनः तदुभयसीमान्तकृषिजीविनः। अन्ये च वनगोचराः मूलाहारादयः, तेभ्यो विनिश्चय इति शेषोऽनुषज्यते।

बृहस्पतिः।

गृहक्षेत्रविवादेषु सामन्तेभ्यो विनिर्णयः।
नगरग्रामगणिनो ये च वृद्धतमा नराः॥
कीनाशशिल्पिभृतका गोपव्याधोञ्छजीविनः।
मूलखानककैवर्त्तकुल्या भेदकबाधकाः॥

कीनाशः कृषीवलः, उञ्छजीविनः मूलशस्यावशिष्टमञ्जरीजीविनः। तेऽपि पर्य्यटनशीलत्वात्प्रायः सीमज्ञा इति एवं शिल्पभृतकादिषु† चोह्यम्।

मनुः।

सामन्तानामभावे तु मौलानां सीमसाक्षिणाम्।
इमानप्यनुयुञ्जीत पुरुषान्वनगोचरान्॥
व्याधाञ्छाकुनिकान्गोपान्कैवर्त्तान्मूलखानकान्।
व्यालग्राहानुञ्छवृत्तीन् शून्यांश्च‡ वनगोचरान्॥

* ये च स्युः कृषिजीविन इति पाठान्तरम्।

† शिल्पिभृतकादिषु मूलखानकादिषु चेति पाठान्तरम्।

‡ चन्यांश्चेति पाठान्तरम्।

मौला ग्रामोत्पत्तिसहभुवः* अनुयुञ्जीत पृच्छेत् ।

नारदः ।

समुन्नयेयुः सीमानं लक्षणैरुपलक्षिताम् ।
तुषाङ्गारकपालास्थिकूपैरायतनैर्द्रुमैः ॥
अभिज्ञानैश्च वल्मीकैः स्थलनिम्नोन्नतादिभिः ।
केदारारामभार्गैश्च† पुराणैः‡ सेतुभिस्तथा ॥

मनुः ।

ते पृष्टास्तु यथा ब्रूयुः सीमासन्धिषु लक्षणम् ।
तत्तथा स्थापयेद्राजा धर्मेण ग्रामयोर्द्वयोः ॥

वृहस्पतिः ।

शपथैः शापिताः स्वैः स्वैः कुर्युः सीम्नि विनिश्चयम् ।
दर्शयेयुर्निधानानि तत्प्रमाणमिति स्थितिः ॥

स्वैः स्वैः तत्तज्जात्युचितैः§ शपथैः साक्षिवचनश्रवणोक्तैः, निधानानि सीमानिधीयमानानि तुषाङ्गारादीनि सीमाचिह्नानि ।

मनुः ।

शिरोभिस्ते गृहीत्वोर्वीं स्रग्विणो रक्तवाससः ।

---

* ग्रामोत्पत्तिसहस्थनरा इति पाठान्तरम् ।

† केदारारामभार्गैरिति पाठान्तरम् ।

‡ प्रवाहैरिति पाठान्तरम् ।

§ स्वजात्युचितैरिति पाठान्तरम् ।

सुकृतैः शापिताः स्वैः स्वैर्नयेयुस्ते समञ्जसम् ॥

स्वैः स्वैः सुकृतैर्धर्मैः शापितास्ते धर्मा अस्माकं क्षीणा भवन्ति यदि मिथ्या वदाम इति वादिता इत्यर्थः।

नारदः।

नैकः समुन्नयेत्सीमां नरः प्रत्ययवानपि।
गुरुत्वादस्य कार्यस्य क्रियैषा बहुषु स्थिता॥
एकश्चेदुन्नयेत्सीमां सोपवासः समुन्नयेत्।
रक्तमाल्याम्बरधरः क्षितिमारोप्य मूर्द्धनि॥

एकश्चेदत्यन्ताप्ततया उभयानुमतो भवति तदा सोपवासो रक्तमाल्याम्बरधरः मूर्द्ध्नि क्षितिमारोप्य सीमामुन्नयेदित्यर्थः*।

बृहस्पतिः।

ज्ञातचिह्नविनाशे तु एकोऽप्युभयसम्मतः।
रक्तमाल्याम्बरधरो मृदमादाय मूर्द्धनि।
सत्यव्रतः सोपवासः सीमां सन्दर्शयेन्नरः॥

ज्ञातचिह्नविनाशे ज्ञातॄणां चिह्नाद्यभावे।

मनुः।

यथोक्तेन नयन्तस्ते पूयन्ते सत्यसाक्षिणः।
विपरीतं नयन्तस्तु दाप्याः स्युर्द्विशतं दमम्॥
सामन्ताश्चेन्मृषा ब्रूयुः सेतौ विवदतां नृणाम्।
सर्वे पृथक् पृथग्दण्ड्या राज्ञा मध्यमसाहसम्॥

* सीमां समुन्नयेदित्यर्थ इति पाठान्तरम्।

सत्यसाक्षिणः सत्यप्रधानाः सीमाबोद्धारः, द्विशतं पणानाम्, सेतुः सीमा, पृथक् पृथक् प्रत्येक साक्षित्वस्य प्रत्येकवृत्तित्वात्* ।

कात्यायनः ।

बहूनान्तु गृहीतानां न सर्वे निर्णयं यदि ।
कुर्य्युर्भयाद्वा लोभाद्वा दाप्यास्तूत्तमसाहसम् ॥
अज्ञानेन† हि मुच्यन्ते सामन्ता निर्णयं यदि ।
अज्ञानोक्तौ दण्डयित्वा पुनः सीमां विचारयेत् ॥
कीर्त्तिते यदि भेदः स्याद्दण्ड्यास्तूत्तमसाहसम् ॥

अज्ञानेन ज्ञानेऽपि अज्ञानाभिधानेन‡, कीर्त्तिते सम्भूय साक्षे उक्ते, पुनस्तेषां यदि भेदो वचनविरोधः स्यादित्यर्थः ।

नारदः ।

शेपायेदनृतं§ ब्रूयुर्नियुक्ता भूमिकर्मणि ।
जघन्यास्तेऽपि प्रत्येकं विनेयाः पूर्व्वसाहसम् ॥
गणवृन्दादयस्त्वर्थे¶ दण्डं दद्युः पृथक् पृथक् ।
विनेयाः प्रथमेनैव साहसेनानृते स्थिताः ॥

शेषाः सामन्तेभ्योऽन्ये व्याधादयः‖ ।

---

* पृथगवृत्तित्वादिति पाठान्तरम् ।

† नाज्ञानेनेति प्रज्ञानेनेति च पाठान्तरम् ।

‡ अज्ञानोक्तावचनेति पाठान्तरम् ।

§ शेपायेदन्यथेति पाठान्तरम् ।

¶ गणपथाद्वा दमन्त्वर्थे इति पाठान्तरम् ।

‖ शेषा सामन्ता अन्ये व्याधादय इति पाठान्तरम् ।

कात्यायनः।

संसक्ताः*स्वथ सामन्तास्तत्संसक्तास्तथोत्तराः।
संसक्तसक्तसक्तास्याः पद्माकाराः प्रकीर्त्तिताः॥

पद्मवन्मण्डलाकाराः ,सीमाविवादविषयं परिवेष्ट्य सर्व्वदिक्षु अवस्थिता इत्यर्थः।

तथा।

ग्रामो ग्रामस्य सामन्तः चेत्रं चेत्रस्य कीर्त्तितम्।
गृहं गृहस्य निर्द्दिष्टं समन्तात्परिरभ्य च॥

ग्रामस्य ग्रामान्तरेण सह सीमाविवादे तत्प्रत्यासन्नोऽन्यो ग्रामसमूहः सामन्त उच्यते। एवं गृहचेत्रयोरपि समन्तात् परिरभ्य यः परितो वेष्टयित्वा स्थितः। ग्रामचेत्रगृहपदानि तन्निवासिपुरुषपराणीति।

मौललक्षणमाह स एव।

ये तत्र सर्व्वसामन्ताः पश्चाद्देशान्तरं गताः।
तन्मूलत्वात्तु ते मौला ऋषिभिः सम्प्रकीर्त्तिताः॥

बृहस्पतिरपि।

तदुत्पन्नास्तु सामन्ता येऽन्ये† देशान्तरस्थिताः।
मौलास्तु ते समुद्दिष्टाः प्रष्टव्याः कार्य्यनिर्णये॥
अदुष्टास्ते तु यद्ब्रूयुः सन्दिग्धौ समदृत्तयः।

---

* सयुक्ता इति पाठान्तरम्।

† ये चेति पाठान्तरम्।

तत्प्रमाणन्तु कर्त्तव्यमेवं धर्मो न हीयते ॥

सन्दिग्धे सन्देहे ।

वृद्धलक्षणमाह कात्यायनः ।

निष्पाद्यमानं यैर्दृष्टं तत्कार्य्यं त्रिगुणान्वितैः ।

वृद्धा वा यदि वावृद्धास्ते वृद्धाः परिकीर्त्तिताः ॥

कार्य्यं सीमानिर्णये हेतुभूतं, त्रयो गुणाः सत्यव्रताचारत्वश्रुताः ।

उद्धृतलक्षणमाह ।

उपश्रवणसम्भोगकार्य्याख्यानोपचिह्निताः ।

उद्धरन्ति ततो यस्मादुद्धृतास्ते प्रकीर्त्तिताः ॥

उपश्रवणं परस्परश्रवणम्* सम्भोगः सम्यग्भुक्तिः†, कार्य्याख्यानं तत्फलग्रहणवार्त्ता, तेन यैः साक्षात्कार्य्यं न दृष्टम् उपश्रवणादिभिश्च तत्कार्य्यमवगतं ते उद्धृता इत्यर्थः। एवञ्च तेषामभावे सामन्ता मौलवृद्धोद्धृतादय इत्यत्रादिपदेन एतावत् प्रकारव्यतिरेकेण सीमाज्ञातारो विधीयन्त इति बोद्धव्यम्।

नारदः ।

ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता ।

राजशासननीता च सीमा पञ्चविधा स्मृता ॥

ध्वजिनी ध्वजतुल्यवृक्षवती, मत्स्यिनी मत्स्यवन्नदीमती, नैधानी तुषादिमती। भयवर्जिता वादिप्रतिवादिसम्मत्या कृता,

---

* परम्पराश्रवणमिति पाठान्तरम् ।

† इष्टिरिति पाठान्तरम् ।

राजशासननीता ज्ञातृचिह्नाभावे राजाज्ञाकारिता ।

व्यासः ।

निम्नोन्नता च ध्वजिनी नैधानी राजकारिता ।
स्थिता पञ्चविधा सीमा मत्स्यिनी तु चला स्मृता ॥

निम्ना च उन्नता च निम्नोन्नता । मत्स्यिनी तु चला जलस्यास्थिरत्वात् ।

आसां विभागमाह ।

ग्रामयोरुभयोर्यत्र गर्त्तः सीमाप्रवर्त्तकः ।
निम्नोपलक्षिता सा तु ग्राम्यविद्भिरुदाहृता ॥

सा निम्नेति शेषः ।

शरकुब्जकवल्मीका यत्र देवगृहाणि च ।
अश्मकूटाश्च दृश्यन्ते सीमा सा च* समुन्नता ॥
ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः ।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्त्तिता† ॥
इष्टकाङ्गारसिकताः शर्करास्थिकपालिकाः ।
निहिताः‡ यत्र दृश्यन्ते नैधानी सा प्रकीर्त्तिता ॥
साक्ष्यभावाद्§द्वयोर्यत्र प्रभुणा¶ परिकल्पिता ।

---

* सा त्विति पाठान्तरम् ।

† सा तु कीर्त्तितेति पाठान्तरम् ।

‡ निखाता इति खनिता इति च पाठान्तरम् ।

§ साक्ष्यभावे इति पाठान्तरम् ।

¶ प्रभुणेति पाठान्तरम् ।

तत्प्रमाणन्तु कर्त्तव्यमेवं धर्म्मो न हीयते ॥

सन्दिग्धे सन्देहे ।

वृद्धलक्षणमाह कात्यायनः ।

निष्पादमानं यैर्दृष्टं तत्कार्य्यं त्रिगुणान्वितैः ।

वृद्धा वा यदि वावृद्धास्ते वृद्धाः परिकीर्त्तिताः ॥

कार्य्यं सीमानिर्णये हेतुभूतं, त्रयो गुणाः सत्यव्रताचाररूपाः ।

उद्धृतलक्षणमाह ।

उपश्रवणसम्भोगकार्य्याख्यानोपचिह्निताः ।

उद्धरन्ति ततो यस्मादुद्धृतास्ते प्रकीर्त्तिताः ॥

उपश्रवणं परस्परश्रवणम्* सम्भोगः सम्यग्भुक्तिः†, कार्य्याख्यानं तत्फलग्रहणवार्त्ता, तैन यैः साक्षात्कार्य्यं न दृष्टम् उपश्रवणादिभिश्च तत्कार्य्यमवगतं ते उद्धृता इत्यर्थः । एवञ्च तेषामभावे सामन्ता मौलवृद्धोद्धृतादय इत्यत्रादिपदेन एतावत्प्रकारव्यतिरेकेण सीमाम्नातारो विधीयन्त इति बोद्धव्यम् ।

नारदः ।

ध्वजिनी मत्स्यिनी चैव नैधानी भयवर्जिता ।

राजशासननीता च सीमा पञ्चविधा स्मृता ॥

ध्वजिनी ध्वजतुल्यवृक्षवती, मत्स्यिनी मत्स्यवन्नदीमती, नैधानी तुषादिमती । भयवर्जिता वादिप्रतिवादिसम्मत्या कृता,

---

* परस्पराश्रवणमिति पाठान्तरम् ।

† दृष्टिरिति पाठान्तरम् ।

राजशासननीता मात्वचिह्नाभावे राजाज्ञाकारिता।

व्यासः।

निम्नोन्नता च ध्वजिनी नैधानी राजकारिता।
स्थिता पञ्चविधा सीमा मत्स्यिनी तु चला स्मृता॥

निम्ना च उन्नता च निम्नोन्नता। मत्स्यिनी तु चला जलस्था-
स्थिरत्वात्।

आसां विभागमाह।

ग्रामयोरुभयोर्यत्र गर्त्तः सीमाप्रवर्त्तकः।
निम्नोपलक्षिता सा तु शास्त्रविद्भिरुदाहृता॥

सा निम्नेति शेषः।

शरकुब्जकवल्मीका यत्र देवगृहाणि च।
अश्मकूटाश्च दृश्यन्ते सीमा सोन्ना* समुन्नता॥
ग्रामयोरुभयोः सीम्नि वृक्षा यत्र समुन्नताः।
समुच्छ्रिता ध्वजाकारा ध्वजिनी सा प्रकीर्त्तिता†॥
इष्टकाङ्गारसिकताः शर्कराश्चिकपालिकाः।
निक्षिप्ता‡ यत्र दृश्यन्ते नैधानी सा प्रकीर्त्तिता॥
साक्ष्यभावाद्§द्वयोर्यत्र प्रभुणा¶ परिकल्पिता।

---

* सा त्विति पाठान्तरम्।

† सा तु कीर्त्तितेति पाठान्तरम्।

‡ निखाता इति खनिता इति च पाठान्तरम्।

§ साक्ष्यभावे इति पाठान्तरम्।

¶ प्रभुणेति पाठान्तरम्।

सामन्तानुमता सीमा सा ज्ञेया राजकारिता ॥

कात्यायनः ।

भयवर्जितभूपेन सर्व्वाभावे स्वयंकृता ।

नारदः ।

यदा तु न स्युर्ज्ञातारः* सीमायाः† न च लक्षणम् ।

तदा राजा द्वयोः सीमामुन्नयेदिष्टतः स्वयम् ॥

इष्टतः स्वयं स्वेच्छयेत्यर्थः ।

व्यासः ।

स्वच्छन्दगा बहुजला झषकूर्म्मसमन्विता‡ ।

नित्यप्रवाहिणी यत्र सीमा सा मत्स्यिनी मता ॥

मनुः ।

सीमायामविषह्यायां स्वयं राजैव धर्म्मवित् ।

प्रदिशेद्भूमिमेकेषामुपकारादिति स्थितिः ॥

अविषह्यायां निर्णेतुमशक्यायां साक्ष्याद्यभावात् । एकेषां प्रदिशेद्दद्यादेकेषामुपकारात्, येषां तया भूम्या महानुपकारो भवति तेषामुपकारात्, उपकारसाम्ये तु द्वयोर्विभज्य दद्यात् ।

बृहस्पतिः ।

अन्यग्रामात्समाहृत्य दत्तान्यस्य यदा मही ।

महानद्याथवा राज्ञा कथं तत्र विचारणा ॥

---

* धातार इति दातार इति च पाठान्तरम् ।

† सीमाया इति पाठान्तरम् ।

‡ मत्स्यकूर्म्मसमुद्गमेति पाठान्तरम् ।

नद्योत्सृष्टा राजदत्ता यस्य तस्यैव सा मही ।
अन्यथा न भवेल्लाभी नराणां राजदैवकः ॥
चयोदयौ जीवनञ्च दैवराजवशान्नृणाम् ।
तस्मात्सर्व्वेषु कार्य्येषु तत्कृतं न विचारयेत् ॥
ग्रामयोरुभयोर्येन मर्य्यादा कल्पिता नदी ।
चयोदयेन तीर्त्या सा चालयन्दण्डमर्हति ॥
एककूलनिपातस्तु* भूमेरन्यत्र संस्थितिम् ।
नदीतीरेषु कुरुते तस्य तत्र† विचालयेत् ॥
चेत्रं सशस्यमुत्सृज्य भूमिश्छिन्ना यदा भवेत् ।
नदीस्रोतःप्रवाहेण पूर्व्वस्वामी लभेत ताम्‡ ॥
या राज्ञा क्रोधलोभेन छलन्यायेन वा हृता ।
प्रदत्तान्यस्य तुष्टेन न सा सिद्धिमवाप्नुयात् ॥
प्रमापरहितां भूमिं भुञ्जतो यस्य या हृता ।
गुणाधिकाय वा देया तस्य तां न विचालयेत्§ ॥

यत्र नदीकूलपातः क्रमेण ग्रामान्तरभूमिं ग्रामान्तरे निवेशयति तत्र विचालनं न कार्य्यम्¶ । यत्र तु नदी चेत्रादिकं समुत्सृज्य याति तत्र पूर्व्वग्रामस्यैव सा भूमिरित्यर्थः ।

* एकत्र कूलपातस्त्विति पाठान्तरम् ।

† तात्रेति पाठान्तरम् ।

‡ तमिति पाठान्तरम् ।

§ तत्र न चालयेदिति पाठान्तरम् ।

¶ विचालनं न कुर्य्यादिति पाठान्तरम् ।

दशग्रामशतग्रामसहस्रग्रामलक्षणाम् ।
विषमां नृपतिः कुर्याच्चिह्नैः सीमां विनिश्चिताम्* ॥

याज्ञवल्क्यः ।

आरामायतनग्रामनिपानोद्यानवेश्मसु ।
एष एव विधिर्ज्ञेयो वर्षाम्बुप्रवहादिषु ।

आरामः समीपवनोपलक्षितो भूभागः, आयतनं देवगृहभूमिः ग्रामग्रहणेन नगरादिरपि† लक्ष्यः, निपानं कूपाकृष्टपानीयोपलक्षितनिम्नभूभागः‡, उद्यानं क्रीड़ावनोपलक्षितभूभागः । एष साक्षिसामन्तादिरूपो विधिः । वर्षाम्बुप्रवहः हष्टितोयौघवर्त्म ।

मनुः ।

क्षेत्रकूपतड़ागानामारामस्य गृहस्य च§ ।
सामन्तप्रत्ययो ज्ञेयः सीमासन्धिविनिर्णयः ॥

कात्यायनः ।

क्षेत्रकूपतड़ागानां केदारारामयोरपि ।
गृहप्रासादावसथक्षेत्रदेवगृहेषु च ॥

वृहस्पतिः ।

---

* दशग्रामशतग्रामसहस्रग्रामलक्षणान् ।
विषमान्नृपति कुर्याच्चिह्नै सीमान्विनिश्चितान् ॥ इति पाठान्तरम् ।

† पुरादिरपीति पाठान्तरम् ।

‡ कूपाकृतिपानीयोपलक्षितनिम्नभूभाग इति पाठस्तु समीचीनवद्भाति ।

§ ग्रामारामगृहस्य चेति पाठान्तरम् ।

निवेशकालादारभ्य गृहवार्थ्यापणादिकम्।
येन यावद्यथा भुक्तं तस्य तन्न विचालयेत्॥
वातायनाः प्रणालीश्च तथा निर्यूहवेदिकाः।
चतुःशालं स्यन्दनिकां प्राङ्निविष्टां न चालयेत्॥

वातायनं गवाक्षः, प्रणाली जलनिर्गममार्गः, निर्यूहो नागदन्तकः, वेदिका प्रतोल्यादिसंस्कृता उन्नता भूमिः*, चतुःशालं चतुर्द्वारगृहं, स्यन्दनिका पटलप्रान्तः।

कात्यायनः।

मेखलाभ्रमनिष्काशगवाक्षान्नोपधारयेत्।
प्रणालीं गृहवास्तुञ्च पीड़यन्दण्डभाग्भवेत्॥
दृष्टिपातं प्रणालञ्च† न कुर्य्यात्परवेश्मसु॥

मेखला गृहादिमूलबन्धः, भ्रमोऽव जलनिर्गमप्रदेशः, निष्काशो निर्गमोचितदेशः, निष्काशो हर्म्यादिभित्तिषु निर्गतकाष्ठादिनिर्मितमस्पृष्टभूमिकमुपवेशनस्थानमिति कल्पतरुः। नोपधारयेन्न निरुन्ध्यात्, गृहवास्तुर्गृहभूमिः, दृष्टिपातो‡ गवाक्षः।

वर्च्चःस्थानं वह्निचयं गर्त्तोच्छिष्टादिसेचनम्§।
अत्याराद्परकुड्यस्य न कर्त्तव्यं कदाचन॥

वर्च्चःस्थानं मूत्रपुरीषोत्सर्गस्थानं, वह्निचयं अग्निस्थानं, क्वचित्

---

* भूरिति पाठान्तरम्।

† प्रणालीश्चेति पाठान्तरम्।

‡ दृष्टिनिपात इति पाठान्तरम्।

§ गर्त्तोच्छिष्टाम्बुसेचनमिति पाठान्तरम्।

वह्निस्थानं वा वह्निगृहमिति पाठः, स तु सुगम एव, अत्या-
रादतिसमीपे।

कात्यायनः।

विण्मूत्रोदकचक्रञ्च वह्निश्वभ्रनिवेशनम्* ।
अरत्निद्वयमुत्सृज्य परकुड्यान्निवेशयेत् ॥

चक्रं तैलादियन्त्रम्, अरत्निः निष्कनिष्ठमुष्टिहस्तः।

बृहस्पतिः।

यान्त्यायान्ति जना येन पशवश्चानिवारिताः।
तदुच्यते संसरणं न रोद्धव्यन्तु केनचित्† ॥

नारदः।

अवस्करस्थलश्वभ्रभ्रमस्यन्दनिकादिभिः।
चतुष्पथसुरस्थानरथ्यामार्गं न रोधयेत् ॥

अवस्करो विष्ठागृहादिशोधनार्थं पांशुनिचय इति हरि-
हरादयः, स्थलं वेदिका, श्वभ्रो गर्त्तः, भ्रमो जलनिर्गममार्गः,
स्यन्दनिका पटलप्रान्तः। आदिशब्देनान्यदपि तादृशम्।
रथ्यामार्गो राजमार्गः, रथ्या चत्वर इति कल्पतरुः।

शङ्खलिखितौ।

मार्गचित्रे पथि विसर्गो राजमार्गरथपरिवर्त्तनं‡ पूर्व-

---

* वह्निभूमिनिवसनमिति पाठान्तरम्।
† कस्यचिदिति पाठान्तरम्।
‡ परिवर्जनमिति पाठान्तरम्।

मर्य्यादा स्थापनं तोरणगृहरथ्यान्तरेषु त्रिपदं
देवराजायतनेषु यथेष्टम् ।

मार्गे यत्वेवं तत्र पथि स्थिते विसर्गः त्यागः पथिकानां गच्छतां, तेन स पन्था नावरोधव्य इत्यर्थः । राजमार्गे रथपरिवर्त्तनं यावता देशेन रथपरिवृत्तिः स्यात्तावान्देशः राजमार्गे त्याज्य इत्यर्थः । पूर्व्वमर्य्यादास्थापनं यावती पौरैः पूर्व्वं मर्य्यादा पूर्व्वसीमा कृता तस्याः स्थापनम् । तोरणगृहरथ्यान्तरेषु त्रिपदं तोरणगृहरथ्यासमीपे पदत्रयपरिमितं देशं त्यजेदित्यर्थः ।

कात्यायनः ।

सर्व्वे जनपदा येन प्रयान्ति सचतुष्पदाः ।
अनिरुद्धा यथाकामं राजमार्गः स उच्यते ॥
न तत्र रोपयेत्* किञ्चिन्नोपहन्यात्तु केनचित् ।
गुर्व्वाचार्य्यनृपादीनां मार्गादानाच्च दण्डभाक् ॥
यस्तत्र सङ्करश्वभ्रान्वृक्षारोपणमेव च ।
कामात्पुरीषं कुर्य्याच्च† तस्य दण्डस्तु मापकः ॥

तत्र मार्गे सङ्करोऽवकरः । हरिहरादिभिः संसरणानुवृत्तौ प्रजापतिरिति मस्तके दत्त्वा यस्तत्रेति वाक्यमवतारितम् इह न फलतो विशेष इति ।

मनुः ।

समुत्सृजेद्राजमार्गे यस्त्वमेध्यमनापदि ।

---

* तत्रारोपयेदिति पाठान्तरम् ।

† वा कुर्य्यादिति पाठान्तरम् ।

स द्वौ कार्षापणौ दद्यादमेध्यञ्चाशु शोधयेत् ॥
आपद्गतस्तथा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

परिभाषण दण्डशून्यं भूयः पुनरेव मा कार्षीरित्यादि वचनं शोध्यमापद्गतादिनेति शेषः ।

दण्ड इत्यनुवृत्तौ विष्णुः ।

पथ्युद्यानोदकसमीपेष्वशुच्युत्करादित्यागे* पणशतं तच्चापास्येति ।

एतच्चातिशयिताशुच्युत्करादित्यागे, तेन न मनुना विरोधः ।

कात्यायनः ।

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्व्वसाहसम् ॥

अमेध्यं शोधयित्वा त्वमेध्यशोधनममेध्यकर्त्तृद्वारा कारयित्वेत्यर्थः ।

तथा ।

दूषयन् सिद्धतीर्थानि स्थापितानि महात्मभिः ।
धान्यानि वापनीयानि प्राप्नुयात्पूर्व्वसाहसम् ॥

अथ मनुः ।

गृह तडागमारामं चेत्रं वा भीषया वहन् ।
शतानि पञ्च दण्ड्यः स्यादज्ञानाद्द्विशतो दमः ॥

भीषया भयोपादानेन अज्ञानाद् भ्रान्त्यादिना ।

---

* शौचे इति पाठान्तरम् ।

वृहमनुः ।

स्थापिताश्चैव मर्य्यादामुभयोर्ग्रामयोस्तथा ।

अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम् ॥

याज्ञवल्क्यः ।

मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा ।

क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः ॥

मर्य्यादा चिह्नभूतवृक्षादिः तस्याः प्रभेदे विघटने, सीमातिक्रमणं सीमार्थं रथ्याधिकभूग्रहणं क्षेत्रग्रहणमेव च ।

शङ्खलिखितौ ।

क्षेत्रमर्य्यादाभेदे अष्टशतं सीमातिक्रमणे अष्टसहस्रं क्षेत्रोदकाहरणे अष्टशतम् ।

अष्टशतमष्टभिरधिकं शतम् एवमष्टसहस्रमपि । क्षेत्रोदकाहरणे क्षेत्रशस्यनिर्व्वाहकोदकाहरणे ।

विष्णुः ।

सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनःसीमां कारयेत् ।

कात्यायनः ।

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः ।

फलं पुष्पञ्च सञ्जातं क्षेत्रस्वामिषु निर्द्दिशेत् ॥

अन्यक्षेत्रेषु जातानां शाखा यान्यत्र संस्थिता ।

स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिता ॥

संस्थिता शाखा इति शेषः ।

इति विवादरत्नाकरे सीमाविवादतरङ्गः ।

स द्वौ कार्षापणौ दद्यादमेध्यञ्चाशु शोधयेत् ॥
आपद्गतस्तथा वृद्धो गर्भिणी बाल एव वा ।
परिभाषणमर्हन्ति तच्च शोध्यमिति स्थितिः ॥

परिभाषणं दण्डशून्यं भूयः पुनरेवं मा कार्षीरित्यादि वचनं शोध्यमापद्गतादिनेति शेषः ।

दण्ड इत्यनुवृत्तौ विष्णुः ।

पथ्युद्यानोदकसमीपेष्वशुच्युत्कारादित्यागी* पणशतं तच्चापास्येति ।

एतच्चातिशयिताशुचुत्करादित्यागी, तेन न मनुना विरोधः ।

कात्यायनः ।

तडागोद्यानतीर्थानि योऽमेध्येन विनाशयेत् ।
अमेध्यं शोधयित्वा तु दण्डयेत्पूर्व्वसाहसम् ॥

अमेध्यं शोधयित्वा त्वमेध्यशोधनममेध्यकर्त्तृद्वारा कारयित्वेत्यर्थः ।

तथा ।

दूषयन् सिद्धतीर्थानि स्थापितानि महात्मभिः ।
धान्यानि वापनीयानि प्राप्नुयात्पूर्व्वसाहसम् ॥

अथ मनुः ।

गृहं तडागमारामं चैत्रं वा भीषया वहन् ।
शतानि पञ्च दण्डः स्यादज्ञानाद्विशतो दमः ॥

भीषया भयोपादानेन अज्ञानाद् भ्रान्त्यादिना ।

बृहस्पतिः।

स्थापिताश्चैव मर्य्यादामुभयोर्ग्रामयोस्तथा।

अतिक्रामन्ति ये पापास्ते दण्ड्या द्विशतं दमम्॥

याज्ञवल्क्यः।

मर्य्यादायाः प्रभेदे तु सीमातिक्रमणे तथा।

क्षेत्रस्य हरणे दण्डा अधमोत्तममध्यमाः॥

मर्य्यादा चिह्नभूतवृक्षादिः तस्याः प्रभेदे विघटने, सीमातिक्रमणे सीमार्थं दत्ताधिकभूग्रहणं क्षेत्रग्रहणमेव च।

शङ्खलिखितौ।

क्षेत्रमर्य्यादाभेदे अष्टशतं सीमातिक्रमणे अष्टसहस्रं क्षेत्रोदकाहरणे अष्टशतम्।

अष्टशतमष्टभिरधिकं शतम् एवमष्टसहस्रमपि। क्षेत्रोदकाहरणे क्षेत्रशस्यनिर्व्वाहकोदकाहरणे।

विष्णुः।

सीमाभेत्तारमुत्तमसाहसं दण्डयित्वा पुनःसीमां कारयेत्।

कात्यायनः।

सीमामध्ये तु जातानां वृक्षाणां क्षेत्रयोर्द्वयोः।

फलं पुष्पञ्च सञ्जातं क्षेत्रस्वामिषु निर्द्दिशेत्॥

अन्यक्षेत्रेषु जातानां शाखा यान्यत्र संस्थिता।

स्वामिनं तं विजानीयाद्यस्य क्षेत्रेषु संस्थिता॥

*संस्थिता शाखा इति शेषः।*

# अथ सेतुः ।

तत्र नारदः ।

परक्षेत्रस्य मध्ये तु सेतुर्न प्रतिषिध्यते ।
महागुणोऽल्पबाधश्चेद्वृद्धिरिष्टा क्षये सति ॥

वृद्धिर्बलवती क्षये अल्पीयसीति, तेन परक्षेत्रे परेण क्रियमाणः सेतुर्यदा बहूपकारकः, क्षेत्रस्वामिनश्चाल्पीयःक्षयकरः, तदा तेनासौ न निषेध्यः* । यतोऽल्पोपक्षये बलवती वृद्धिः सर्व्वस्येष्टा भवतीत्यर्थः ।

याज्ञवल्क्यः ।

न निषेध्योऽल्पबाधस्तु सेतुः कल्याणकारकः ।
परभूमिं हरन्† कूपः स्वल्पक्षेत्रो बहूदकः ॥

अल्पोपक्षयकारी बहूपकारी च परक्षेत्रे परेण यः क्रियमाणस्तु सेतुः तेन न निषेध्यः । एवं कूपोऽपि अल्पीयसीं परभूमिं हरन् बहूपकारी परेण न निषिध्यत इत्यर्थः । कूपग्रहणेन पुष्करिण्यादिकमपि विवक्षितम्‡ ।

तथा ।

स्वामिनो योऽनिवेद्यैव क्षेत्रे सेतुं प्रवर्त्तयेत् ।
उत्पन्ने स्वामिनो भोगस्तदभावे महीपतेः ।

---

* प्रतिषेध्य इति पाठान्तरम् ।

यदा स्वामिनमपृष्ट्वैव तस्य* क्षेत्रे सेतुं करोति तदा क्षेत्रस्वामिन एव तदुत्पन्नशस्यादौ भोगः तदभावे राज्ञः न तु सेतुकर्त्तुरित्यर्थः।

नारदः।

पूर्व्वप्रवृत्तमुच्छिन्नमपृष्ट्वा स्वामिनन्तु यः।
सेतुं प्रकल्पयेत्कश्चिन्न स तत्फलभाग्भवेत्॥

पूर्व्वप्रवृत्तं पूर्व्वजातमुच्छिन्नमधुना चिह्नावशेषं, स्वामिनं सेतोः, एतच्च सेतुगतविशेषणं सेत्वन्तराप्रवर्त्तनार्थम्। तत्र तु परक्षेत्रे तदनुमतिरपेक्षते सेतुकरणमेव†।

तथा।

मृते तु स्वामिनि पुनस्तद्वंश्ये वापि मानवे।
राजानमामन्त्र्य ततः कुर्य्यात्सेतुप्रवर्त्तनम्॥
अतोऽन्यथा क्लेशभाक् स्यान्मृगव्याधार्थदर्शनात्।
द्रुपवस्तस्य नश्यन्ति यो विद्धमनुविध्यति॥

अतोऽन्यथा अनुमतिमगृहीत्वा निष्फलः सेतुः यो विद्धे वेधः स दृष्टेत्यर्थः।

कात्यायनः।

अस्वाम्यनुमतेनैव संस्कारं कुरुते तु यः।
गृहोद्यानतड़ागानां संस्कर्त्ता लभते न तु॥
देयं स्वामिनि चायाते न निवेद्य नृपे यदि।
अथावेद्य प्रयुक्तस्तु तत्कृतं लभते व्ययम्॥

---

* परक्षेत्र इति पाठान्तरम्।

† तदनपेक्ष्य न तु सेतुकरणमेवेति पाठान्तरम्।

अस्वाम्यनुमतेनैव नृपे चानिवेद्य यदि परगृहोद्यानतड़ागानां संस्कारं कुरुते तदा संस्कर्त्ता न किञ्चित्फलं लभते। अथ स्वामिनि अनिवेद्य राजनि च निवेद्य करोति, तदा आयाते स्वामिनि तस्मात्संस्कारव्ययं लभत इत्यर्थः।

नारदः।

सेतुस्तु द्विविधः प्रोक्तः खेयो बन्ध्यस्तथैव च।
तोयप्रवर्त्तनात्खेयो बन्ध्यः स्यादिनिवर्त्तनात्* ॥
नान्तरेणोदकं शस्यं नाशयात्युदके भवेत्।
य एवानुदके दोषः स एवात्युदके भवेत् ॥

इति श्रीविवादरत्नाकरे सेतुतरङ्गः।

---

## अथ क्षटाक्षटे।

तत्र नारदः।

अयत्नप्रेतनष्टेषु चेत्रिकेषु निवारितः* ।
चेत्रश्चेदिक्षपेल्काथिद्गृह्णीत स तत्फलम्† ॥

---

* परिवर्त्तनादिति पाठान्तरम्।

---

* इति पाठश्चिन्तु पुस्तकेषु दृश्यते। किन्त्वत चेत्रिकैर्यनिवारित इति पाठ समी चीनतया प्रतिभातीति बोध्यम्।

† अश्नीत सततं फलमिति पाठान्तरम्।

निष्कृष्यमाणे क्षेत्रे तु* क्षैत्रिकः पुनराव्रजेत् ।
खिलोपचारं तत्सर्व्वं दत्त्वा क्षेत्रमवाप्नुयात् ॥

नष्टोऽत्र व्यवहितदेशः, क्षैत्रिकः क्षेत्रस्वामी, खिलोपचारं खिलकर्षणार्थमायासनिष्क्रयम्† ।

खिलोपचारदानासम्भवे विशेषमाह स एव ।

तदष्टभागप्रचयात्‡ यावत्सप्त गताः समाः ।
समाप्ते त्वष्टमे वर्षे भुक्तं क्षेत्रं लभेत सः ॥

यदि क्षेत्रपतिर्व्ययं§ न ददाति तदा कर्षकोऽष्टमं भागं तस्मै दद्यात् । यदि चाष्टवर्षपर्यन्तमपि क्षेत्रभोगं करोति, तदा व्ययादानेऽपि तत्सर्व्वं क्षेत्रमुत्पत्तिसहितं क्षेत्रपतेरेवेति हलायुधपारिजातौ । प्रकाशकारेण तु ततोऽष्टमे वर्षे स्वामिन इत्येवं¶ विवृतम् ।

कल्पतरौ तु कात्यायनः ।

अशक्तितो न दद्याच्चेत्खिलार्थे यः कृतो व्ययः ।
तदष्टभागहीनन्तु‖ कर्षकः कर्षमाप्नुयात् ॥
वर्षाण्यष्टौ स भोक्ता स्यात्परतः स्वामिने तु तत् ॥

अनेनाष्टमे वर्षे कर्षकस्य भोगो विहितः । पूर्व्वेण तु निषिद्ध-

---

* निष्कृष्यमाणक्षेत्रेष्विति पाठान्तरम् ।

† खिलकर्षणायायासनियमितनिष्कृयमिति पाठान्तरम् ।

‡ तदष्टभागा. प्रचया इति पाठान्तरम् ।

§ क्षेत्रपति क्षेत्रकर्षणादिव्ययमिति पाठान्तरम् ।

¶ इत्येवेति पाठान्तरम् ।

‖ तदाष्टभागहीनन्त्विति पाठान्तरम् ।

इति विरोधे पूर्व्वं कष्टसाध्यकर्षणभूमिविषयमुत्तरञ्चातिका साध्यकर्षणभूमिविषयमिति व्यवस्था।

नारदः।

संवत्सरेणार्द्धखिलं खिलं स्याद्वत्सरैस्त्रिभि.।

पञ्चवर्षावसन्नन्तु क्षेत्रं स्यादटवीसमम्॥

अटवीसमेऽपि खिलोक्तत्यागकालभागग्रहणक्रमेण न्यूनाधिक त्यागकालभागग्रहणव्यवस्था ऊह्या। अत्र च खिलेषु चतुर्थादि समन्यूनसंख्यादिभागग्रहणस्य सर्व्वसिद्धतया अष्टमभागदानं प्राचीनमिति खिल एवेत्याहुः।

तथा।

क्षेत्रं त्रिपुरुष यस्य गृहं वा स्यात्क्रमागतम्।

राजप्रसादादन्यत्र न तद्भोगः परावयेत्॥

गृह क्षेत्रञ्च वस्तू द्वे वासहेतू कुटुम्बिनाम्।

तस्मात्ते नाक्षिपेद्राजा तद्धि मूल कुटुम्बिनाम्॥

गृहक्षेत्रयोः करादिना त्रैपुरुषिकसम्भोगे सति राजप्रसादा द्विना न तद्भोक्तृपुरुषसकाशात्तयोर्भोगच्छेदः करणीय इत्यर्थः।

तथा।

वृद्धे जनपदे राज्ञो धर्म्मः कोषश्च वर्द्धते।

हीयते हीयमाने तु वृद्धिहेतुमतः श्रयेत्॥

याज्ञवल्क्य.।

कालाहृतमपि क्षेत्रं यो न कुर्य्यान्न कारयेत्।

* अष्टभागदहनमिति पाठान्तरम्।

स प्रदाप्योऽक्षष्टसदं चैत्रमन्येन कारयेत् ॥

फालाहतं प्रत्यब्दं कृष्यमाणमक्षष्टसदमक्षष्टे क्षष्टफलमिति यावत् ।

बृहस्पतिः ।

गृहीत्वा वाहयेत्काले वापगोपनसंग्रहान् ।

अकुर्व्वंस्वामिने दाप्यो मध्य क्षष्टसदन्तु सः ॥

गृहीत्वा चैत्रं वाहयेत्, अकुर्व्वन्वाप वपनं गोपनं रक्षणं संग्रह शस्यसञ्चयं दाप्यो मध्यमं क्षष्टसदं नात्युत्कृष्टं नात्यपक्षष्टमित्यर्थः ।

व्यासः ।

चैत्रं गृहीत्वा यः कश्चित्र कुर्य्यान्न च कारयेत् ।

स्वामिने तत्समं दाप्यो राज्ञो दण्डश्च तत्समम् ॥

चिरावसन्ने दशमं कृष्यमाणे ततोऽष्टमम् ।

प्रसंस्कृते तु षष्ठ स्यात्परिकल्प्य यथा स्थितिः ॥

भूमिं कर्षणार्थं गृहीत्वा य. स्वयं न कर्षति परद्वारा वा न कर्षयेत्, स स्वामिने सदं दाप्यः दण्डं राज्ञश्च तत्समम् । तत्र च चिरावसन्नायां भूमौ दशमं, कृष्यमाणायामष्टममक्षष्टायाञ्च षष्ठं भागमित्यर्थः ।

इति श्रीविवादरत्नाकरे क्षष्टाक्षष्टतरङ्गः ।

---

## अथ शस्यरक्षा।

याज्ञवल्क्यः।

ग्रामेच्छया गोप्रचारभूमी राजवशेन च।
धनुःशतं परीणाहो ग्रामक्षेत्रान्तरं भवेत्।
द्वे शते कर्व्वटस्य स्यान्नगरस्य चतुःशतम्॥

ग्रामेच्छया ग्रामवासिजनापेक्षया भूम्यल्पत्वबहुत्वानुसारेण वा राजाज्ञया वा गोप्रचारो गोप्रचारणार्थभूभागः कर्त्तव्य इति प्रथमखण्डार्थः। स चायं परीणाहो यो ग्रामक्षेत्रान्तररूपो धनुःशतं ग्रामे, धनुःशतद्वयं कर्व्वटक्षेत्रान्तररूपः कर्व्वटे, तद्धनुःशतचतुष्टयं नगरक्षेत्रान्तररूपो नगरे।

ग्रामनगरकर्व्वटलक्षणञ्च मार्कण्डेये।

तथा भद्रजनप्राया* सुसमृद्धकृषीवला।
क्षेत्रोपभोगभूमध्ये वसतिर्ग्रामसंज्ञिता॥
सोत्सेधनं सप्राकारं सर्व्वतः परिखावृतम्†।
योजनार्द्धार्द्धविष्कम्भमष्टभागोत्तरं पुरम्॥
प्रागुदक्प्रवणं शस्तं शुद्धवंशबहिर्गमम्।
तदर्द्धं तु तथा खेटं तस्मादूनञ्च कर्व्वटमिति॥

एवञ्च यथायथं बहुधा कीर्णं‡ ग्रामादि, तत्र तावदनुसारेण गोप्रचारोऽनुक्तोऽप्यूह्यः। धनुश्चतुर्हस्तो दण्डः।

---

* शूद्रजनप्र चेति पाठान्तरम्।

† ग्रामवाटकमिति पाठान्तरम्।

‡ कावद्ग्रामीर्णमिति पाठान्तरम्।

मनुः।

धनुःशतं परीणाहो ग्रामस्य स्यात्समन्ततः।

सम्यापाता*स्त्रयो वापि त्रिगुणो नगरस्य च॥

तत्रापरिवृतं धान्यं विहिंस्युः पशवो यदि।

न तत्र प्रणयेद्दण्डं नृपतिः पशुरक्षिणाम्॥

सम्यापाता†स्त्रयो वेति समो कीलक‡ स च प्रक्षिप्तो§ यावतीं भूमिमुल्लङ्घ्य पतति तावत्त्रिगुणो वा ग्रामस्य परीणाह इत्यर्थः¶। त्रिगुण इति खण्डेन एतत्त्रिगुणो नगरस्य परीणाह‖ उक्तः।

नारदः।

ग्रामोपान्ते च यत्क्षेत्रं विवीतान्ते च यत्पुनः।

अनावृतञ्चेत्तन्नाशे न पालस्य व्यतिक्रमः॥

विवीतो गवादिविनियोगार्थं रक्षितयवसो भूप्रदेशः, तस्यान्ते समीपे।

विष्णुः।

पथि ग्रामे विवीतान्ते न दोषोऽनावृते वाल्पकालम्।

---

* समम्याता इति पाठान्तरम्।

† समम्याता इति पाठान्तरम्।

‡ सम्पातोयुगकीलक इति पाठान्तरम्। यस्मा यष्टि तस्मा प्रक्षेप इति कुल्लूकभट्ट।

§ वाहुप्रक्षिप्त इति पाठान्तरम्।

¶ परीणाहस्याज्यप्रयर्थ इति पाठान्तरम्।

‖ नगरपरिणाह इति पाठान्तरम्।

महापथे ग्रामान्ते विवीतान्ते च यत्येनमनावृतमल्पकालं पशुभिः खाद्यते न तत्र पालदोषः। एवञ्चानल्पकाले तु दोष-एवेति मन्तव्यम्।

याज्ञवल्क्यः।

पथि ग्रामे विवीतान्ते क्षेत्रे दोषो न विद्यते।
अकामतः कामचारे चौरवद्दण्डमर्हति॥

अकामत इत्यल्पकालमिति बोद्धव्यम्।

मनुः।

पथि क्षेत्रे परिवृते ग्रामान्तीयेऽथवा पुनः।
स पालः शतदण्डार्हो विपालं धारयेत् पशुम्*॥

ग्रामान्तीये इत्यस्याग्रे यस्य शस्यं भक्षितमिति शेषः।

नारदः।

उत्क्रम्य† तु वृतिं यः स्याच्छस्यघाती गवादिभिः।
पालः शास्यो भवेत्तत्र न चेच्छक्तो निवारयेत्॥

वृतिरावरणम्।

उशनाः।

गोभिर्विनाशितं धान्यं यो नरः प्रतियाचते।
पितरस्तस्य नाश्नन्ति नाश्नन्ति च‡ दिवौकसः॥

---

* विपालान्वारयेत्पशूनिति पाठान्तरम्।

† उत्क्रम्येति पाठान्तरम्।

‡ न चाश्नन्तीति पाठान्तरम्।

नारदः।

पथि क्षेत्रे वृतिः कार्य्या यामुष्ट्रो नावलोकयेत्।

न लङ्घयेत्पशुर्नाश्वो न भिन्द्याद्यान्तु शूकरः॥

यामुष्ट्रो नावलोकयेदित्यत्र एकस्मिन्वृतिपार्श्वे स्थित उष्ट्रो येन परिमाणेन वृतेः पार्श्वान्तरं नावलोकते इत्यर्थ इति हलायुधः। यां वृतिमुल्लङ्घ्य शस्यं नावलोकयेदिति पारिजातः।

शङ्खलिखितौ।

मार्गक्षेत्रे वृतिः कार्य्या यामुष्ट्रो नावलोकयेत्।

नाश्वशूकरावन्तरं विन्देताम्।

अन्तरमवकाशम्।

कात्यायनः।

अजातेष्वेव शस्येषु* कुर्य्यादावरणं महत्।

दुःखेन हि निवार्य्यन्ते लब्धास्वादरसा मृगाः॥

मृगा अत्र पशवो विवक्षिताः।

इति श्रीविवादरत्नाकरे शस्यघाततरङ्गः।

---

* अजाती परशस्येष्विति पाठान्तरम्।

# अथ शस्यघातदण्डः* ।

तत्र मनुः ।

क्षेत्रेष्वन्येषु तु पशुः सपादं पणमर्हति ।

अन्येषु पार्श्वक्षेत्रादिव्यतिरिक्तेषु†, पशुरत्र‡ पशुपाल एव पशोरदण्ड्यत्वात् । अत्र चैकैकं पशुं प्रति§ सपादः पणो दण्ड इति मन्तव्यम् ।

शङ्खलिखितौ ।

रात्रौ चरन्ती गौः पञ्च माषान्दिवा त्रीन्मुहूर्त्तं माषं ग्रामे त्वदण्डः ।

चरन्ती यावत्सौहित्यं भक्षयन्ती तेन सौहित्यपर्य्यन्तं भक्षयन्ती त्रीन्माषान्, मुहूर्त्तं चरन्ती माषमेकं दण्ड्या, ग्रामे त्वदण्डः ग्रामसीमक्षेत्रादावदण्ड एवेत्यर्थः¶ । माषोऽत्र कार्षापणस्य विंशतितमो भागः । तथाचोक्तं नारदेन, माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य च । स च राजतो विवक्षितः । तथा च भाष्यकारः । सौवर्णमाषकैः संख्या दण्डकर्म्मसु शस्यते‖ । पशूनां शस्यचरणे माषैरन्यैव राजतैः ॥ एवञ्च

---

* शस्यघातदण्ड इति पाठान्तरम् ।

† पार्श्वक्षेत्राद्यतिरिक्तेषु इति पार्श्वक्षेत्रादतिरिक्तेष्विति च पाठान्तरम् ।

‡ पशुपदादिति पाठान्तरम् ।

§ चैकैकं प्रतीति पाठान्तरम् ।

¶ ग्रामसमीपक्षेत्रादावदण्ड एवेति पाठान्तरम् ।

‖ मन्यते इति पाठान्तरम् ।

भागी कार्षापणोऽपि रौप्य एव। राजतश्चात्र माषकस्त्रियव-कृष्णलद्वयात्मकः। तदुक्तं मनुना, त्रियवन्त्वेककृष्णलम्। द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषक इति।

कात्यायनः।

दापयेत्पणपादं गां द्वौ पादौ महिषीं तथा।
तथाजाविकवत्सानां पादो दण्डः प्रकीर्त्तितः॥

पाददण्डोऽत्र रात्रौ भक्षणे सति मन्तव्यः। पणपादः कार्षापणस्य चतुर्थो भागः।

गौतमः।

पञ्चमाषान् गवि षड़ुष्ट्रे अश्वमहिष्योर्दृगाजाविके द्वौ द्वौ।

शङ्खलिखितौ।

सर्व्वेषामेव वत्सानां* माषं महिषी दश खरोष्ट्रं षोड़श अजाविकं चतुरः।

सर्व्वेषां पशूनां वत्सः प्रथमवयाः।

याज्ञवल्क्यः।

माषानष्टौ महिषी शस्यघातस्य कारिणी।
दण्डनीया तदर्द्धन्तु गौस्तदर्द्धमजाविकम्॥
भक्षयित्वोपविष्टानां यथोक्ताद्द्विगुणो दमः†।
सममेषां विवीतेऽपि खरोष्ट्रमहिषीसमम्॥

---

* सिन्तु पुस्तकेषु प्रथमैव पाठो दृश्यते, परं वत्स इति पाठ सङ्गच्छते इति बोध्यम्।

† द्विगुणा दमा इति पाठान्तरम्।

समर्मेषां विवीतेऽपीति विवीतोपद्रवेऽपि पशूनां चैत्रोपद्रव इव दण्ड इत्यर्थः।

नारदः।

गावः पादं प्रदण्ड्याः* स्युर्महिष्यो द्विगुणं तथा।
अजाविके सवत्से तु माषो दण्डः परः† स्मृतः॥
सन्नानां द्विगुणो दण्डो वसताम्‡ चतुर्गुणः।

सन्नानां शस्यभक्षणश्रान्तानाम्, वसतां तत्रैव चरित्वा नीतरात्रीणाम्§। तदेतदप्रत्यक्षचारकाभिप्रायम्।

प्रत्यक्षचारकेष्वाह।

प्रत्यक्षचारकाणान्तु चौरदण्डः स्मृतो बुधैः।

प्रत्यक्षचारकाः क्षेत्रिणां समक्ष एव बलेन चारकाः।

विष्णुः।

महिषी चेत्शस्यनाशं कुर्यात्तत्पालस्त्वष्टौ माषान्दण्ड्यः।
अपालकायाः स्वामी, अश्वस्तूष्ट्रो गर्दभो वा गौश्चेत्तदर्द्धं
तदर्द्धमजाविकश्चेद्भक्षयित्वोपविष्टेषु द्विगुणम्।

अश्वस्तूष्ट्र इत्यादौ शस्यनाशं कुर्यादित्यनुषज्यते।

नारदः।

नष्टा या पालदोषेण गौः क्षेत्रन्तु विनाशयेत्।

---

* गावश्च पादं दण्ड्या इति पाठान्तरम्।

† परमिति पाठान्तरम्।

‡ वसतान्त्विति पाठान्तरम्।

§ नीतरात्रिकाणामिति पाठान्तरम्।

न तत्र स्वामिनो दण्डः पालस्तद्दण्डमर्हति ॥
शस्याभिवारयेत्तस्तु चौर्य्ये दोषो द्वयोर्भवेत्।
स्वामी सदं दमं दाप्यः पालस्ताड़नमर्हति ॥

चौर्य्ये भक्षिते द्वयोः पालस्वामिनोः सदं भक्षितशस्यानुरूपं फलं स्वामिनो देयं दमं दण्डं राज्ञे। स्वामिपालसमक्षविषयमेतत्।

याज्ञवल्क्यः।

यावच्छस्यं विनश्येत्तु तावत्स्यात्क्षेत्रिणां फलम्*।
पालस्ताड्यस्तु गोमी तु पूर्व्वोक्तं दण्डमर्हति ॥

गोमी गोस्वामी। एतदपि समूलशस्यघाते†।

अथ नारदः।

समूलशस्यघाते तु तत्स्वामी दण्डमाप्नुयात्।
वधेन पालो मुच्येत दण्डं स्वामिनि पातयेत्‡ ॥

समूलशस्यनाशे तु द्वयोर्दोषे नाशानुरूपं फलं दण्डञ्च स्वामी दद्यात्। वधेन अपराधानुरूपहननेन। समूलशस्यनाशस्तु यस्मिन्नाशे पुनः प्ररोहो न भवति स द्रष्टव्यः।

विष्णुः।

सर्व्वत्र स्वामिने विनष्टशस्यमूल्यञ्च।

---

* तावच्चेत्री फलं लभेदिति पाठान्तरम्।

† एतदमूलशस्यनाशे इति पाठान्तरम्।

‡ ताडयेदिति पाठान्तरम्।

दाप्यतः* इति शेषः। सर्व्वत्र सपाले विपाले च। चकारा-
द्राजदण्डसमुच्चयः।

नारदः।

> गोभिस्तु भक्षितं शस्यं यो नरः प्रतियाचते।
> सामन्तानुमतं देयं धान्यं यत्र तु भक्षितम्॥
> गवतं स्वामिना देयं धान्यं वै कर्षकाय च।

भक्षितं धान्यं भक्षितधान्यानुरूपं गवत्र यवसम्, एतच्च यवस-
दानं विनीतचरणपक्षे। अत्र चैकस्मिन्नप्यपराधे परस्परविरुद्ध-
शस्यदण्डदानबोधकानां† दिनरात्रिकामाकामकृतादिव्यव-
स्थया विरोधः परिहरणीयः।

इति श्रीविवादरत्नाकरे शस्यघातदण्डतरङ्गः‡।



---

* दाप्य इति पाठान्तरम्।

† परस्परविप्रतिपन्नस्य दण्डदानबोधकानामिति पाठान्तरम्।

‡ शस्यघाततरङ्ग इति पाठान्तरम्।

# अथादण्ड्या: ।

तत्र पाल इत्यनुवृत्तौ नारदः ।

राजग्रहगृहीतो वा वज्राग्निनिहतोऽपि* वा ।
अथ सर्पेण वा दष्टो वृक्षाद्वा पतितो भवेत् ॥
व्याघ्रादिभिर्हतो वापि व्याधिभिर्वाप्युपद्रुतः ।
न तत्र दोषः पालस्य न च दोषोऽस्ति गोमिनः ॥

याज्ञवल्क्यः ।

महोक्षोत्सृष्टपशवः सूतिकागन्तुकादयः ।
पालो येषाञ्च ते मोच्या दैवराजपरिप्लुताः ॥

महोक्षो बीजसेक्ता वृषः । उत्सृष्टपशवः वृषोत्सर्गादिना त्यक्तपशवः । सूतिका प्रसूता अनिर्दशाहा । आगन्तुकः स्वयूथपरिभ्रष्टः । आदिग्रहणेन हस्त्यादयोऽदण्ड्यतया कथ्यन्ते। एते मोच्या न दण्ड्या इत्यर्थः । पालो येषाञ्चेति येषां पालो विद्यते तेऽपि दैवराजपरिप्लुताः विद्युदादिभिर्दैविकैः राजपुरुषैर्वा पालदोषं विना विद्राविताश्चेऽपि मोच्या इत्यर्थः । पारिजाते तु पालो येषां न विद्यते इति शेषं दत्वा इदं व्याख्यातम् । अर्थस्तु द्वेधापि ग्राह्यः प्रयोजनसाम्यात् ।

मनुः ।

अनिर्दशाहां गां सूतां वृषान्देवपशूंस्तथा ।
सपालान्वा विपालान्वा नदण्ड्यान्मनुरब्रवीत् ॥

---

* वज्राग्निहतोऽपीति पाठान्तरम् ।

देवपशवः देवार्थमुत्सृष्टाः पशवः।

शङ्खः।

> छागवृषभा अनिर्दशाहा गावः शस्यापबाधे न दण्डमवाप्नुयुः।

वृषभशब्देन वीजसेक्तृ-पित्रर्थोत्सृष्टवृषभयोर्ग्रहणम्। छागशब्दोऽपि तादृशच्छागपर एव।

नारदः।

> गौः प्रसूता दशाहन्तु महोक्षा वाजिकुञ्जराः।
> विनिवार्याः प्रयत्नेन तेषां* स्वामी न दण्डभाक्॥

वाजिकुञ्जराः प्रजापालनोपयुक्ताः।

उशनाः।

> अदण्ड्या हस्तिनोऽश्वाश्च प्रजापाला हि ते स्मृताः।
> अदण्ड्याः काणकुण्ठाश्च† वृषश्च कृतलक्षणः॥
> अदण्ड्यागन्तुका या गौः सूतिका चातिचारिणी।
> अदण्ड्याश्चोत्सवे गावः श्राद्धकाले तथैव च॥

कुण्ठः‡ खञ्जः, अत्र काणकुण्ठशब्दाभ्यामत्यन्तासमर्थं§ उच्यते। वृषश्च कृतलक्षणः त्रिशूलाद्यङ्कितः। अतिचारिणी¶ अत्यन्त-

* तेनेति पाठान्तरम्।

† काणकुब्जाश्चेति पाठान्तरम्।

‡ कुब्ज इति पाठान्तरम्।

§ काणकुब्जशब्दाभ्यामत्यन्तासमर्थ इति पाठान्तरम्।

¶ चभिचारिणीति पाठान्तरम्।

मारणशीला। पारिजाते तु अभिसारिणीति पठित्वा हयस्यन्तीति विवृतम्।

शङ्खलिखितौ।

क्षुद्रपशवः सर्व्वथा अनिवार्य्याः, अश्वतरगजवाजिनश्चादण्ड्याः अवश्याः शनैरपवार्य्याः।

अश्वतरोऽश्वायां रासभादुत्पन्नः, अवश्याः शीघ्रं निवारयितुमशक्याः। प्रकाशपारिजातयोस्तु अवध्या इति पठित्वा अताद्या इति व्याख्यातम्।

कात्यायनः।

अधमोत्तममध्यानां पशूनाञ्चैव ताड़ने।

स्वामी तु विवदेद्यत्र* तत्र दण्डं प्रकल्पयेत्॥

चैत्यारामविवीतेषु गृहेषु पशुवाटिषु।

ग्रहणं तत्प्रविष्टानां ताड़नञ्च बृहस्पतिः॥

पशुवाटिषु विकीर्णशस्येषु स्थानेषु ग्रहणं बन्धनम्।

इति श्रीविवादरत्नाकरे अदण्ड्यतरङ्गः।



---

* स्वामी विवदते यत्रेति, स्वामी तु विवदेत्तत्रेति च पाठान्तरम्।

# अथ वाक्पारुष्यम्।

तत्र मनुः।

एषोऽखिलेनाभिहितो धर्म्मः सीमाविनिर्णयः।
अतः परं प्रवक्ष्यामि वाक्पारुष्यविनिर्णयम्॥

नारदः।

देशजातिकुलादीनामाक्रोशन्यङ्गसंश्रितम्।
यद्वचः प्रतिकूलार्थं वाक्पारुष्यं तदुच्यते*॥

आक्रोश आक्षेपः। तत्र देशाक्रोशो यथा गौड़ं प्रति कलहप्रियाः† गौड़ा इति जात्याक्रोशो यथा ब्राह्मणं प्रति अत्यन्तलुब्धा ब्राह्मणा इति। कुलाक्रोशो यथा क्रूरचरिता वैश्वानरा इति, आदिशब्देन वृत्तादेरुपादानम्। न्यङ्गसंश्रितं निष्ठाङ्गसंश्रयवत्। मिताक्षराकारेण तु आक्रोशन्यङ्गसंयुतमिति पठित्वा उच्चैर्भाषणमाक्रोशो न्यङ्गमपथ्यं तदुभयसंयुक्तं यत् प्रतिकूलार्थमुद्वेगजनकं वाक्यं तद्वाक्पारुष्यमिति व्याख्यातम्‡।

मनुः।

क्षद्रार्थं कामनश्चैव लोके यच्च विगर्हितम्।
अनुकुर्य्यादनुब्रूयाद्वाक्पारुष्यं तदुच्यते॥

नारदः।

निष्ठुराश्लीलतीव्रत्वात्तदपि त्रिविधं स्मृतम्।

---

* तदिष्यते इति पाठान्तरम्।

† कलहकारा इति पाठान्तरम्।

‡ व्याख्यातवते इति पाठान्तरम्।

गौरवानुक्रमात्तस्य दण्डोऽप्युक्तः क्रमाद्गुरुः ॥

गौरवानुक्रमाद्यथोत्तरं गौरवात्, अस्य वाक्पारुष्यस्य।

स एव निष्ठुरादीन् लक्षयति।

साक्षेपं निष्ठुरं ज्ञेयमश्लीलं न्यङ्गसंज्ञितम्।
तपनीयैरुपक्रोशैस्तीव्रमाहुर्मनीषिणः ॥

एतच्च न्यङ्गसंज्ञितत्वस्य विभागोपाधित्वात् सामान्यलक्षणं विवेचितं प्राक्।

कात्यायनः।

यस्त्वसत्संज्ञितैः* रङ्गैः परमाक्षिपति क्वचित्।
अभूतैरथ भूतैर्वा निष्ठुरा वाक् स्मृता तु सा ॥
न्यङ्गावगूरणं वाचा क्रोधात्तु कुरुते यदा।
वृत्तदेशकुलानाञ्च अश्लीला सा बुधैः स्मृता ॥
महापातकयोक्त्री च रागद्वेषकरी च या।
जातिभ्रंशकरी या च तीव्रा सा कथिता तु वाक् ॥

न्यङ्गावगूरणं निकृष्टाङ्गप्रकटीकरणेन तिरस्करणम्।

बृहस्पतिः।

अप्रियोक्तिस्ताडनञ्च पारुष्यं द्विविधं स्मृतम्।
एकैकञ्च द्विधा† भिन्नं दमयोक्तस्तिलक्षणः ॥
देशग्रामकुलादीनां क्षेपः पापनियोजनम्।

---

* यस्त्वसत्संज्ञितैरिति पाठान्तरम्।

† त्रिधेति पाठान्तरम्।

द्रव्यं विना तु प्रथमं वाक्पारुष्यं तदुच्यते* ॥
भगिनीमातृसम्बन्धमुपपातकशंसनम् ।
पारुष्यं मध्यमं प्रोक्तं वाचिकं शास्त्रवेदिभिः ॥
अभक्ष्यापेयप्रथनं महापातकदूषणम् ।
पारुष्यमुत्तमं प्रोक्तं तीव्रं मर्माभिघट्टनम्† ॥

द्रव्यं विनेति द्रव्यशब्दोऽयमभिधेयपरः। तेनैवमभिधेयमभिधानं‡ विनापि वाक्पारुष्यमित्यर्थः। भगिनीमातृसम्बन्धमुपपातकशंसनं तव भगिनी तव माता मया याह्यत्वभिकीर्त्तनमित्यर्थः§ ।

नारदः ।

उद्दिश्यात्मानमन्यं वा क्षिपेदस्तु निरूप्य च¶ ।
आक्रोष्टेव‖ स मन्तव्यो यदि संस्पर्शनं तयोः ॥

आक्षिपेन्निन्दयेत्, निरूप्य अभिसन्धाय। यदि संस्पर्शनं तयोः, यदि आक्षेप्तुराक्षेप्यद्वेषः, एतच्चाभिसन्धानज्ञापनार्थम्।

कात्यायनः ।

योऽगुणान् कीर्त्तयेद्द्वेषान्निर्गुणे वा गुणव्रताम् ।

---

* तदिष्यते इति पाठान्तरम् ।

† तीव्रकर्म्माभिघट्टनमिति पाठान्तरम् ।

‡ तेनैवाभिधानमभिधेयमिति पाठान्तरम् ।

§ याह्यत्वभुकीर्त्तनमित्यर्थ इति पाठान्तरम् ।

¶ लिति पाठान्तरम् ।

‖ आक्रोष्टेवेति पाठान्तरम् ।

अन्यसंज्ञानियोजी च वाग्दुष्टं तं नरं विदुः॥

अगुणान् कीर्त्तयेद्गुणिनीति शेषः। अन्यसंज्ञानियोजी निन्दितसंज्ञाव्यपदेशकारी।

तथा।

अदुष्टस्यैव यो दोषान् कीर्त्तयेद्दोषकारणात्।

अन्यापदेशवादी च वाग्दुष्टं तं नरं विदुः॥

अदुष्टस्यैवेत्येवकारोऽप्यर्थः। अन्यापदेशवादी योऽन्यमपदिश्यान्यदोषान् वदति। वाग्दुष्टं वाक्पारुष्यकर्त्तारम्।

बृहस्पतिः।

समानयोः समो दण्डो न्यूनस्य द्विगुणस्तु सः।

उत्तमस्यार्द्धिकः प्रोक्तो वाक्पारुष्ये परस्परम्॥

परस्परं वाक्पारुष्ये कृते आक्षेपकस्य दण्डे यद्यसावाक्षेप्येण* समो जात्यादिभिस्तदा समो दण्डोऽयं† न्यूनः तदा तस्मात्द्विगुणः। यद्युत्कृष्ट‡स्तदा तस्मादर्द्धो दण्ड इत्यर्थः।

याज्ञवल्क्यः।

पादोऽधमेषु द्विगुणः परस्त्रीपूत्तमेषु च।

दण्डप्रणयनं कार्य्यं वर्णजात्युत्तराधरैः॥

प्रातिलोम्यापवादेषु द्विगुणत्रिगुणा दमाः।

वर्णानामानुलोम्येन तस्मादर्द्धार्द्धहानितः॥

---

* चाक्षिप्तेनेति पाठान्तरम्।

† यदीति पाठान्तरम्।

‡ यद्युत्कृष्ट इति पाठान्तरम्।

अधमेष्वाक्षेप्त्रपेक्षया न्यूनशीलादिगुणेषु आक्षेप्तुरधिकगुणस्याद्धो दण्डः स च पञ्चविंशतिः, पञ्चविंशतिदमस्य प्रकृतत्वात्परस्त्रीषु परभार्य्यासु उत्कृष्टासु अपकृष्टासु च विशेषाभावाद्द्विगुणः उत्तमेष्वाक्षेप्त्रपेक्षयैवाधिकगुणेषु द्विगुणः पञ्चाशत्पणात्मकः। दण्डप्रणयनमित्यादि, वर्णा ब्राह्मणादयः, जातयोऽनुलोमविलोमजा अम्बष्ठादयः, वर्णाश्च जातयश्चेति वर्णजातयः वर्णजातयश्चोत्तराधराश्च वर्णजात्युत्तराधरास्तैः परस्पराक्षेपे क्रियमाणे दण्डस्य प्रणयनं प्रकर्षेण नयनमूहनं कार्य्यं, तन्नीचोत्तराधरैरिति* विशेषानुपादानाद्यादृगुत्तराधरभावस्तादृगपेक्षयैव कार्य्यम्। प्रातिलोम्यापवादेष्विति, यदा वर्णेषु ब्राह्मणक्षत्रियवैश्येषु प्रातिलोम्येनापवादोऽधिक्षेपो भवति, तदा क्षत्रियेण ब्राह्मणापवादे द्विगुणः, वैश्येन तदपवादे त्रिगुणः। यदा तु ब्राह्मणेन क्षत्रियाक्षेपः, तदा पूर्व्वोक्तादर्द्धदण्डः, क्षत्रियेण वैश्याक्षेपे तदर्द्धम्। शूद्रमधिकृत्याग्रे वक्ष्यति†।

कात्यायनोशनसौ।

मोहात्प्रमादात्संहर्षात्‡ प्रीत्या वोक्तं मयेति यः।
नाहमेवं पुनर्वक्ष्ये दण्डार्द्धं तस्य कल्पयेत्॥

परिहार्य्यवाक्पारुष्यकाराभिप्रायमेतत्।

---

* तन्नोत्तराधरैरिति पाठान्तरम्।

† भविष्यतीति पाठान्तरम्।

‡ सहर्षादिति पाठान्तरम्।

याज्ञवल्क्यः।

सत्यासत्यान्यथास्तोत्रैर्न्यूनाङ्गेन्द्रियरोगिणाम्।
क्षेपं करोति चेद्दण्ड्यः पणानर्द्धत्रयोदश॥

न्यूनाङ्गाः करादिहीनाः, न्यूनेन्द्रिया नेत्रादिहीनाः, रोगिणः कुष्ठिप्रभृतयः, तेषां सत्येन असत्येन अन्यथास्तोत्रेण क्षेपमाक्रोशं करोति चेत्, तदा पणानर्द्धत्रयोदश दण्ड्यः। सत्यञ्च नेत्रशून्ये नेत्रशून्यस्त्वमसीति, असत्यमिन्द्रियवति इन्द्रियशून्यस्त्वमसीति,* अन्यथास्तोत्रमन्धमेव चक्षुष्मानतिशयेनासीति वचनम्। प्रथम-वाक्पारुष्ये समजातिगुणविषयमेतत्।

अत्रैव वृहस्पतिः।

समजातिगुणानाञ्च वाक्पारुष्ये परस्परम्।
विनयोऽभिहितः शास्त्रे पणानर्द्धत्रयोदश॥

विष्णुः।

समवर्णाक्रोशने† द्वादश पणान्दण्ड्यः हीनवर्णाक्रोशने षट्।

समवर्णाक्रोशने‡ समवर्णमात्राक्रोशने§।

मनुनारदविष्णवः।

काणं वाप्यथवा खञ्जमन्यं वापि तथाविधम्।

---

* तादृशमिन्द्रियशून्यस्त्वमसीति पाठान्तरम्।

† सवर्णाक्रोशने इति पाठान्तरम्।

‡ सवर्णाक्रोशने इति पाठान्तरम्।

§ सवर्णमात्राक्रोशने इति पाठान्तरम्।

तथैनापि वदन्दाप्योदण्डं कार्षापणावरम् ॥

कार्षापणावरं कार्षापणद्वयं कार्षापणोऽवरः कनिष्ठो यस्येति व्युत्पत्त्या ।

तथाच विष्णुः ।

दण्ड्यः काणखञ्जादीनां तथ्यवाद्यपि कार्षापणद्वयम् ।

तथ्य याथार्थ्य, सगुणातिदरिद्रविषयमेतत् ।

शङ्खलिखितौ ।

यथाकालमुत्तमवर्णाक्षेपे तत्प्रसादो* दण्डस्त्रयो वा कार्षापणाः शुक्तवाक्याभिधानेऽप्येवमेव† । तथा सवर्णव्यतिक्रमे द्वादश कार्षापणाः यथारूपविशिष्टाक्षेपे विशिष्टस्य चतुर्विंशतिः ।

तत्प्रसादो‡ वाक्पारुष्यकर्ता कार्य्यः, दण्डो राज्ञस्त्रयो वा कार्षापणा देयाः । वाशब्दः समुच्चये । शुक्तं परुषं परुषवाक्येऽतिदेशात्तदन्यवाक्पारुष्यपरः उत्तमवर्णाक्षेप इत्यत्राक्षेपशब्दः§ यथारूपविशिष्टस्य जात्यादिमतोऽविशिष्टेन जात्यादिहीनेनाक्षेपे कृते तस्य चतुर्विंशतिः पणाः । अविशिष्टस्य विशिष्टेनाक्षेपेण¶ कृते वाक्पारुष्ये तदर्द्धमित्यर्थः ।

---

* तत्तत्प्रसाद इति पाठान्तरम् ।

† एवमेतदिति पाठान्तरम् ।

‡ तत्र प्रसाद इति पाठान्तरम् ।

§ उत्तमवर्णाक्षेपशब्द इति पाठान्तरम् ।

¶ विशिष्टेनातिक्रमे इति पाठान्तरम् ।

मनुनारदौ।

समवर्णे द्विजातीनां द्वादशैव व्यतिक्रमे।
वादेष्ववचनीयेषु तदेव द्विगुणं भवेत्॥

द्विजातिपदमत्रातन्त्रं, व्यतिक्रमे वाक्पारुष्ये अप्रकाशनीयप्रकाशादन्यस्मिन्निति यावत्। वादेष्ववचनीयेष्वित्यनेनाप्रकाश्यप्रकाशको वादो विवक्षितः।

याज्ञवल्क्यः।

अभिगन्तास्मि* भगिनीं मातरञ्च तवेति ह्रि।
शपन्तं दापयेद्राजा पञ्चविंशतिकं दमम्॥
बाहुग्रीवानेत्रसक्थिविनाशे वाचिके दमः।
शत्यस्तदर्द्धिकः† पादनासाकर्णकरादिषु॥
अशक्तस्तु वदन्नेवं दण्डनीयः पणान्दश।
तथा शक्तः प्रतिभुवं दाप्यः क्षेमाय तस्य तु॥

अत्र बाह्वादिपदेन प्रधानाङ्गविवक्षा, पादनासाकर्णकरादिपदेन चाप्रधानाङ्गविवक्षा। शत्यः शतपरिमितः। अशक्तश्चात्र नेत्रबाह्वादिकर्त्तने अशक्तोऽपि यो वाक्पारुष्यं सृजति स विवक्षितः। शक्तस्य तु दण्डोत्तरकालं उपक्षीणशक्तेरपेक्ष्यस्य क्षेमाय प्रतिभूरपि ग्राह्यः तेन शक्तो यदि तथा कुरुते तदा पणशतं तदर्द्धञ्च बाह्वादीनां पदादीनाञ्च विनाशाभिधाने यथाक्रमं दण्डः प्रतिभुवश्चापेक्ष्याय दाप्यः।

---

* अभिगन्तास्मीति पाठः क्वचित्।

† शतार्द्धक इति पाठान्तरम्।

दण्ड इत्यनुवृत्तौ विष्णुः।

व्यङ्गता उक्तौ चेपे* कार्षापणशतम्।

एतदपि व्यङ्गता शक्तौ बोद्धव्यम्। बाह्वादयश्चाङ्गानि।

मनुः।

मातरं पितरं जायां भ्रातरं तनयं गुरुम्।

आचारयञ्छतं दाप्यः पन्थानञ्चाददद्गुरोः॥

आचारयन् वाक्पारुष्यविषयीकुर्व्वन्।

क्रोशत इत्यनुवृत्तौ शङ्खलिखितौ।

तथाधिक्षतान्गुरून्विमांश निर्भत्सनं ताड़नं गोमयानुलेपनं खरारोहणं दर्पहरो दण्डो वा।

अपराधतारतम्यमपेक्ष्यायं† व्यवस्थितविकल्पः।

दण्ड इत्यनुवृत्तौ विष्णुः।

गुरूनाचारयन्कार्षापणशतम्।

बृहस्पतिः।

क्षिपन्स्वसादिकं‡ दद्यात्पञ्चाशत्पणिकं दमम्।

मनुः।

शतं ब्राह्मणमाक्रुश्य चक्षियो दण्डमर्हति।

वैश्योऽप्यर्द्धं शतं द्वे वा शूद्रस्तु वधमर्हति॥

आक्रुश्य मध्यमेन वाक्पारुष्येणेति शेषः। इति पारिजातः।

---

* चक्षावेपे इति पाठान्तरम्।

† अपराधतारतम्यविषयाचेति पाठान्तरम्।

‡ स्वशादिकमिति पाठान्तरम्।

अध्यर्द्धं सार्द्धं शतं द्वे वेति आक्रोशगौरवापेक्षया। वधस्ताड़न-जिह्वाच्छेदाद्यात्मकः।

दण्ड इत्यनुवृत्तौ हारीतः।

*अधोवर्णानामुत्तमवर्णाक्षेपाभिभवेष्वष्टौ पुराणाः।*

अधोवर्णोऽनन्तरो वर्णो विप्रस्य क्षत्रिय इत्यादिः। पुराणशब्दोऽत्र द्वात्रिंशत्*-रूप्यां*†क्तपणपरः।

शङ्खलिखितौ।

आक्रोशे ब्राह्मणः क्षत्रियस्य शतं दण्ड्यः शतार्द्धं वैश्यस्य पञ्चविंशतिं शूद्रस्य।

मनुः।

विप्रः पञ्चाशतं दण्ड्यः क्षत्रियस्याभिशंसने।
वैश्यस्य त्वर्द्धपञ्चाशत्‡ शूद्रे तु द्वादशो दम.॥

अभिशंसनमाक्रोश.।

बृहस्पतिः।

विप्रे शतार्द्धं दण्ड्यस्तु§ क्षत्रियस्याभिशंसने।
वैश्यस्य त्वर्द्धपञ्चाशच्छूद्रस्यार्द्धत्रयोदश॥
सच्छूद्रस्यायमुदितो विनयोऽनपराधिनः।
गुणहीनस्य पारुष्ये ब्राह्मणो नापराध्नुयात्॥

---

* द्वात्रिंशतीति पाठान्तरम्।

† कृष्णेति पाठान्तरम्।

‡ वैश्यस्य चार्द्धपञ्चाशदिति पाठान्तरम्।

§ विप्र शतार्द्धं दण्ड्यश्चेति पाठान्तरम्।

वैश्यस्तु क्षत्रियाक्षेपे दण्डनीयः शतं भवेत् ।
तदर्द्धं क्षत्रियो वैश्यं क्षिपन्विनयमर्हति ॥
शूद्राक्षेपे क्षत्रियस्य पणविंशतिको दमः ।
वैश्यस्य चेत्स्याद्विगुणं शास्त्रविद्भिरुदाहृतम् ॥
वैश्यमाधारयञ्छूद्रो दाप्यः स्यात्प्रथम दमम् ।
क्षत्रियं मध्यमञ्चैव विप्रमुत्तमसाहसम् ॥

प्रथमं दमं पणानां द्वे शते सार्द्धे, मध्यमं पञ्चशतानि, उत्तमं सहस्रम्।

विष्णुः ।

मातृयुक्ते तूत्तमम् ।

मातृयुक्ते आक्रोशे उत्तमं साहसं* दण्ड इत्यर्थः ।

शूद्र इत्यनुवृत्तौ बृहस्पतिः ।

धर्मोपदेशकर्त्ता† च वेदोदाहरणान्वितः ।
आक्रोशकश्च विप्राणां जिह्वाच्छेदेन दण्ड्यते ॥

गौतमः ।

शूद्रो द्विजातीन्वाचाभिसन्धायाभिहत्य दण्डेनाङ्गं मोच्यो येनोपहन्यात् ।

वाचाभिसन्धाय अभिसन्धिपूर्व्वकवागतिक्रमं‡ विधाय वाक्पारुष्येणाभिहत्य अभिसन्धिपूर्व्वकं दण्डेन ताड़यित्वा, येनाङ्गेन तथा करोति तदङ्ग त्याजनीय इत्यर्थः ।

---

* सहस्रमिति पाठान्तरम् ।

† धर्मोपदेशकर्त्तेति पाठान्तरम् ।

‡ वाग्यमतिक्रममिति पाठान्तरम् ।

आपस्तम्बः।

जिह्वाच्छेदं शूद्रस्यातिधार्म्मिकमाक्रोशतः*।

पुराणाधिकारे अधोवर्णस्योत्तमवर्णानामित्यनुवृत्तौ हारीतः।

अनृताभिशंसने तदङ्गच्छेदः पञ्चाशतं वाद्येषु पादौ न वा, स्वामित्वादादिवर्णत्वाच्चोत्तमानाम्।

अनृताभिशंसनमाक्रोशः, अङ्गमत्र जिह्वा, अपकृष्टवर्णेषु उत्कृष्टवर्णं प्रति मिथ्यातीव्राक्रोशे जिह्वाच्छेदः, पञ्चाशतं वा दण्डः,† आद्येषु उत्कृष्टवर्णेषु निकृष्टं प्रति मिथ्यातीव्राक्रोशे पञ्चाशत् पादः। मतान्तरमाह‡ न वा किञ्चिदत्र हेतुः, स्वामित्वादादिवर्णत्वाच्च, आदिवर्णत्वाच्छूद्राद्यपेक्षया वैश्यादीनां प्रथमवर्णत्वात्।

मनुनारदौ।

एकजातिर्द्विजातींस्तु वाचा दारुणया क्षिपन्।
जिह्वायाः प्राप्नुयाच्छेदं जघन्यप्रभवो हि सः॥
नामजातिग्रहं तेषामभिद्रोहेण§ कुर्व्वतः।
निक्षेप्योऽयोमयः शङ्कुर्ज्ज्वलन्नास्ये दशाङ्गुलः॥

---

* शूद्रस्यापि धार्म्मिकमाक्रोशत इति पाठान्तरम्।

† पञ्चाशद्वा दण्ड इति पाठान्तरम्।

‡ चाकृष्टे चेति पाठान्तरम्।

§ दोषादतिद्रोहेणेति पाठान्तरम्।

धर्म्मोपदेशं दर्पेण* द्विजानामस्य कुर्व्वतः ।
तप्तमासेचयेत्तैलं वक्त्रे श्रोत्रे च पार्थिवः ॥

एकजातिरिह शूद्रः उपनयनाभावाद्दारुणया मर्म्मस्पृशा पातित्यादिबोधिकया, जघन्यप्रभवः श्रुतौ पद्भ्यामुत्पन्नत्वेन बोधितत्वात्। एतेन सङ्करजातानामपि द्विजातिं प्रति दारुणाक्षेपे अयं दण्डः, तेषामपि जघन्यजातत्वात्। अभिद्रोहः† अतिशयितद्रोहः। अयोमयः लौहमयः। शङ्कुः कीलकः।

शूद्र इत्यनुवृत्तौ

गौतमः।

अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां कर्णपूरणमुदाहरणे जिह्वाच्छेदो धारणे शरीरभेदः।

त्रपुजतुनी चात्र द्रुते‡ बोद्धव्ये।

हारीतः।

तस्माद्वेदश्रुतिश्रवणे शूद्रस्य त्रपुसीसे विद्राव्य कर्णौ पूरयेत्।

विद्राव्य द्रवीकृत्य।

मनुः।

श्रुतं देशञ्च जातिञ्च कर्म्म शारीरमेव च।
वितथेन वदन्दर्पाद्दाप्यः स्याद्द्विशतं दमम् ॥

---

* धर्म्मेवेति पाठान्तरम्।

† अतिद्रोह इति पाठान्तरम्।

‡ द्रवे इति पाठान्तरम्।

कर्म तपश्चर्य्यादिरूप, शारीर शरीरावयव, वितथेनासत्येन । तेन श्रुतदेशजातितपश्चर्य्याशरीरावयवविशेषमधिकृत्य दर्पाद्सत्य वदति तत्र द्विशत दण्ड । वितथेनेति प्रकृत्यादिभ्य उपसङ्ख्यानमिति तृतीया । श्रुतादिवितथवचनोदाहरणानि । नानेन वेद श्रुत । नाय्यार्य्यावर्त्ती देश । नाय विप्र । नानेन तप कृतम । नायमदुश्चर्मा इत्यादि । दर्प स्वगुणदार्ढ्य ज्ञानेन परावज्ञानम् ।

विष्णु ।

श्रुतदेशजातिकर्म्मणामन्यथावादी कार्षापणद्वय दण्ड्य ।
न किल्बिषेणापवदेच्छास्त्रत कृतपावन न राज्ञो
धृतदण्डञ्च दण्डभाक तद्वातिक्रमात् ।

कृतपावन कृतकिल्बिषनाशनम्, अपवदेदाक्रोशेत्, उद्धृतदण्ड कृतदण्डम् । अत्र हेतुर्दण्डभाक् तद्वातिक्रमादाक्रोशकर्त्ता यत ।

याज्ञवल्क्य ।

पतनीये कृते क्षेपे दण्डो* मध्यमसाहसम् ।
उपपातकयुक्ते तु दाप्य प्रथमसाहसम् ॥

पतनीये कृते क्षेपे पातित्यहेतुभिर्ब्रह्महत्यादिभि कृत आक्रोशे ।

मनु ।

ब्राह्मणक्षत्रियाभ्यान्तु† दण्ड कार्य्यो विजानता ।
ब्राह्मणे साहस पूर्व्व क्षत्रियेष्वेव मध्यम ॥

---

* दण्ड्य इति पाठ न्तरम् ।

† ब्राह्मणक्षत्रियाभ्यामिति पाठान्तरम् ।

विट्शूद्रयोस्त्वेवमेव स्वजातिं प्रति तत्त्वतः ।
छेदवर्ज्जं प्रणयनं दण्डस्येति विनिश्चयः ॥

ब्राह्मणक्षत्रियाभ्यां परस्परमाक्रोशे कृते ब्राह्मणस्य पूर्व्वः साहसः, क्षत्रियस्य मध्यमः। वैश्यशूद्रयोरप्येवमेव*। स्वजातिं प्रति तुल्यजातिं प्रति तत्त्वतः स्वरूपगुणोत्कर्षापकर्षलक्षणात्। छेदवर्ज्जमिति जिह्वाच्छेदनिवृत्त्यर्थम्।

व्यासः।

पापोपपापवक्तारी महापातकशंसकाः।
आद्यमध्योत्तमान्दण्डान्दद्युस्त्वेते यथाक्रमम् ॥

अत्र महापातकं प्रसिद्धं ततो न्यूनमुपपापमुपपातकमिति यावत्। ततो न्यूनं पापम्। तत्र पापे अधमो दण्डः, उपपापे मध्यमो महापातके तूत्तमः।

विष्णुः।

परस्य पतनीये क्षेपे कृते उत्तमसाहसमुपपातकयुक्ते मध्यमं त्रैविद्यवृद्धानां क्षेपे जातिपूगानाञ्च† ग्रामदेशयोः प्रथमम्।

त्रैविद्यवृद्धानामित्यत्र उत्तमसाहसमित्यनुषङ्गः, जातिपूगानामित्यत्र मध्यममित्यनुषङ्गः।

याज्ञवल्क्यः।

त्रैविद्यनृपदेवानां क्षेपे उत्तमसाहसः।

---

* रप्ययमेवेति पाठान्तरम्।

† जातिपूगस्थानाञ्चेति पाठान्तरम्।

मध्यमो जातिपूगानां प्रथमो ग्रामदेशयोः ॥

त्रैविद्या वेदत्रयसम्पन्नाः, नृपः प्रजापालकः, जातयो ब्राह्मणादयः, तेषां पूगः सङ्घः*।

बृहस्पतिः।

देशादिकं त्रिपन्दण्डः पणानर्द्धत्रयोदश ।
पापेन योजयन्दर्पाद्दण्डः प्रथमसाहसम् ॥
एष दण्डः समाख्यातः पुरुषापेक्षया मया ।
समन्यूनाधिकत्वेन कल्पनीयो महर्षिभिः ॥

नारदः।

अवक्रुश्य च राजानं कर्म्मणि स्वे† व्यवस्थितम् ।
जिह्वाच्छेदाद्भवेच्छुद्धिः सर्व्वस्वहरणेन वा ॥

याज्ञवल्क्यः।

राज्ञोऽनिष्टप्रवक्तारं तस्यैवाक्रोशकं तथा ।
तन्मन्त्रस्य च भेत्तारं छित्त्वा जिह्वां प्रवासयेत् ॥

अनिष्टमभिचरणीयादि। मन्त्रः स्वराष्ट्ररक्षादिहेतुव्यापारचिन्ता।

नारदः।

लोकेऽस्मिन्द्वाववक्तव्यावबध्यौ च प्रकीर्त्तितौ ।
ब्राह्मणश्चैव राजा च तौ हीदं बिभृतो जगत् ।
पतितं पतितेत्युक्ता चौरं चौरेति वा पुनः ।

---

* सङ्घ इति पाठान्तरम्।

† धर्म्मे निर्वृतमिति पाठान्तरम्।

वचनात्तुल्यदोषः स्यान्मिथ्या द्विर्दोषतां व्रजेत् ॥

वचनाच्छास्त्ररूपात् ।

एतदपवादमाह कात्यायनः ।

यत्र स्यात्परिहारार्थं पतितस्तेन* कीर्त्तनम्† ।
वचनात्तत्र न स्यात्तु दोषो यत्र विभावयेत् ॥

यत्र परिहारार्थं पतितादिसंसर्गपरिहारार्थं पातित्यादि कीर्त्तितमिति विभावयति‡ तत्र न दोष इत्यर्थः ।

तथा ।

अन्यथा तुल्यदोषः स्यान्मिथ्योक्तौ तूत्तमः स्मृतः ।

अन्यथा संसर्गपरिहारार्थमन्तरेण ।

तथा ।

महता प्रणिधानेन वाग्दुष्टं साधयेन्नरम् ।
अतथ्यं चावितं राजा प्रयत्नेन विचारयेत् ।
अनृताख्यानशीलानां जिह्वाच्छेदो विशोधनम् ॥

वाग्दुष्टोऽत्र वाक्पारुष्यकारी । साधयेत्सत्यमसत्यं वा अनेनोक्तमिति चिन्तयेत् । जिह्वाच्छेद इत्यब्राह्मणविषयम् ।

हारीतः ।

मिथ्यादूषिणां मैलकानां जिह्वां छिन्द्याद्दण्डयेद्वा सहस्रम् ।

---

* पुस्तकत्रये एष पाठः, पर पतितत्वेनेति पाठः साधुतया प्रतिभातीति बोध्यम् ।

† कीर्त्तितमिति पाठान्तरम् ।

‡ कीर्त्तयति विभावयति च तथेति पाठान्तरम् ।

मिथ्यादूषिणां मिथ्यावाक्पारुष्यकारिणां* मेलकानां वाक्पारुष्यमेलयितॄणां† क्वचित्पाठो मिथ्यादृष्टीनामिति‡ तत्रापि स एवार्थो विवक्षितः ।

उशना ।

यत्र नोक्तो दमः पूर्व्वैरानन्त्याच्च महात्मभिः ।
तत्र कार्य्यं परिज्ञाय कर्त्तव्यं दण्डधारणम् ॥

इति श्रीविवादरत्नाकरे वाक्पारुष्यतरङ्गः ।

---

## अथ दण्डपारुष्यम् ।

तत्र मनुः ।

एष दण्डविधिः प्रोक्तो वाक्पारुष्यस्य तत्त्वतः ।
अत ऊर्द्ध्वं प्रवक्ष्यामि दण्डपारुष्यनिर्णयम् ॥

बृहस्पतिः ।

हस्तपाषाणलगुडैर्भस्मकर्द्दमपांशुभि. ।
आयुधैश्च प्रहरणं दण्डपारुष्यमुच्यते ॥

---

* मिथ्यावाक्पारुष्यकर्त्तॄणामिति पाठान्तरम् ।

† वाक्पारुष्यमेतॄणामिति पाठान्तरम् ।

‡ मिथ्यादुष्टानामिति पाठान्तरम् ।

नारदः ।

परगात्रेष्वभिद्रोहो हस्तपादायुधादिभिः ।
भस्मादिभिश्चोपघातो दण्डपारुष्यमुच्यते ॥
* तस्यापि दृष्टं त्रैविध्यं मृदुमध्योत्तमक्रमात् ।
अवगूरणनिःशङ्कपातनक्षतदर्शनैः ॥

अभिद्रोहो हिंसा, अवगूरणं शस्त्राद्युद्यमनम् । निःशङ्कपातनं निर्दयं शस्त्रादिना पातनमरुधिरं मध्यममेव । निःशङ्कपातनं सरुधिरं क्षतदर्शनपदेन विवक्षितमुत्तमम् ।

नारदीय एवावगूरणादिभेदेन* त्रैविध्यमभिधायाप्येषद्रव्य-भेदेन† प्रत्येकमेषां त्रैविध्यमाह ।

हीनमध्योत्तमानाञ्च द्रव्याणां समतिक्रमात् ।
त्रीण्येव साहसान्याहुस्तत्र कण्टकशोधने ॥

कण्टकशोधने दण्डे कर्त्तव्ये साहसानि अवगूरणादिद्रव्य-भेदेन‡ त्रीणि प्रत्येकमधममध्यमोत्तमभावेन त्रीण्याहुरित्यर्थः । एष च पाठो मिताक्षरा-प्रकाश-हलायुध-पारिजातेषु दृष्टः । लक्ष्मीधरेण तु त्रयाणां समतिक्रमात्त्रीण्येव साधनानीति पठितं तत्रापि त्रीण्येव साधनान्याहुरिति पाठतस्त्रयाणां त्रित्वमेव विवक्षितम् ।

---

* अवगूरणादिभेदभेदेनेति पाठान्तरम् ।

† त्रैविध्यमभिधायाप्येषद्रव्यभेदेनेति पाठान्तरम् ।

‡ इत्यभिदधुरिति पाठान्तरम् ।

बृहस्पतिः।

भस्मादीनां प्रक्षेपणं ताडनञ्च करादिना।
प्रथमं दण्डपारुष्यं दमः कार्य्योऽत्र माषिकः॥
एष दण्डः समेपूक्तः परस्त्रीष्वधिकेषु च।
द्विगुणस्त्रिगुणो ज्ञेयः प्राधान्यापेक्षया बुधैः॥

माषिकः माषमितः, समेषु जात्यादिभिस्तुल्येषु।

याज्ञवल्क्यः।

भस्मपङ्करजःस्पर्शे दण्डो दशपणः स्मृतः।
अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने द्विगुणस्ततः।
समेष्वेव परस्त्रीषु द्विगुणस्तूत्तमेषु च।
हीनेष्वर्द्धदमो मोहमदादिभिरदण्डनम्॥

अमेध्येति अश्रुश्लेष्मनखकेशकर्णविट्दूषिकाभुक्तोच्छिष्टादि*। पार्ष्णिश्चरणस्य पश्चिमो भागः। चरण एव तात्पर्य्यमस्येत्येके। निष्ठ्यूतं मुखनिःसृतं जलम्। तैः स्पर्शने ततः पूर्व्वोक्ताद्दशपणाद्द्विगुणो दण्ड इत्यर्थः। परस्त्रीषूत्तमेषु च द्विगुण इति, भस्मपङ्करजःस्पर्शे विंशतिपणः। अमेध्यपार्ष्णिनिष्ठ्यूतस्पर्शने चत्वारिंशत्पण† इत्यर्थः। हीनेष्वपकृष्टेषु, मोहश्चित्तवैकल्यम्, मदो मद्यादिजनिता विकृतावस्था, आदिग्रहणादुन्मादो‡ लक्ष्यते।

---

* शुक्रोच्छिष्टादीति पाठान्तरम्।

† पणरूप इति पाठान्तरम्।

‡ उन्मादोऽपीति उन्मादादीति च पाठान्तरम्।

छर्द्यादौ तु कात्यायनो विशेषमाह।

छर्दिमूत्रपुरीषाद्यैरापाद्यः* स चतुर्गुणः।

षड्गुणः कायमध्ये तु मूर्ध्नि चाष्टगुणः स्मृतः॥

आदिपदग्राह्यश्लेष्मादयो ग्राह्याः, आपाद्यः स चतुर्गुणः कायमध्यशिरोव्यतिरिक्तसर्वाङ्गस्पर्शने चतुर्गुण इत्यर्थः। चतुर्गुणो दशपणात्, एवं षड्गुणादिकमपि।

याज्ञवल्क्यः।

पादकेशांशुककरोल्लुञ्चनेषु पणान्दश।

पीडाकर्षांशुकावेष्टपादाध्यासे शतं दमः॥

पीडाकर्षांशुकावेष्टय पादाध्यासमपीति शेषात्प्रकृतः। तेन चरणकेशकरांशुकानामन्यतमं गृहीत्वा य उल्लुञ्चति आकर्षति, असौ दश पणान्दण्ड्य इति पूर्वार्द्धार्थः। यच्चांशुकेनावेष्ट्य गाढमापीड्य आकर्षति† पादेन चाध्यास्ते, तस्य पणशतं दण्ड इत्युत्तरार्द्धार्थः।

कात्यायनः।

उद्गूर्णे तु हस्तस्य कार्यो द्वादशको दमः।

स एव द्विगुणः प्रोक्तः पातनेषु सजातिषु‡॥

उद्गूर्णे हस्तस्य प्रहारार्थं हस्तोद्यमे,§ पातने हस्तस्यैव प्रहा-

* [illegible]

† [illegible]

‡ [illegible]

§ [illegible]

क्रमं द्वादशपणः चतुर्विंशतिपणो दण्ड इत्यर्थः*।

बृहस्पतिः।

> उद्यतेऽश्मशिलाकाष्ठे कर्त्तव्यः प्रथमो दमः।
> परस्परं हस्तपादे दशविंशतिकस्तथा॥

अयञ्चोभयोरेव समानजात्योर्दण्ड इति मन्तव्यम्।

दण्ड इत्यनुवृत्तौ विष्णुः।

> हस्तेनोद्गूरयित्वा दश कार्षापणान् पादेन विंशतिः
> काष्ठेन प्रथमसाहसं शस्त्रेणोत्तमम्।

अधमो यदा शस्त्रेणोत्तमस्योद्गूरणं करोति, तदासावुत्तमसाहसं दण्ड्य इति शस्त्रेणोत्तममित्यस्यार्थः।

याज्ञवल्क्यः।

> उद्गूर्णे हस्तपादे तु दशविंशतिकौ दमौ।
> परस्परस्य सर्व्वेषां शस्त्रे मध्यमसाहसम्॥

सर्व्वेषां ब्राह्मणादीनाम्। एतत्तु समानजातीयानामवगन्तव्यम् असमानजातीयानां दण्डान्तरश्रवणात्।

पणानुवृत्तौ शङ्खलिखितौ।

> प्रहारोद्यमे षट्पञ्चाशन्निपातने तद्द्विगुणम्।

प्रक्रियतेऽनेनेति प्रहारोऽश्मदण्डादिः, षट्पञ्चाशत् षडधिकपञ्चाशत्, इदञ्चोत्तमवर्णेनाधमवर्णस्य दण्डोद्यमने बोद्धव्यम्।

---

* अत्र दशपण पञ्चविंशतिपणौ दण्ड इति पुस्तकत्रये दृश्यते, किन्तु मूलेन तदर्थस्यासङ्गतिरिति द्रष्टव्यम्।

बृहस्पतिः ।

मध्यमः शस्त्रसन्धाने संयोज्यः क्षुब्धयोर्द्वयोः ।
कार्य्यः क्षतानुरूपस्तु लग्ने घाते दमो बुधैः ॥

यदा तु शस्त्रेण क्षतमेव करोति, तदा क्षतगौरवागौरवानुसारेण* दण्डः कार्य्य इत्युत्तरखण्डार्थः ।

अथमेवेष्टकोपलकाष्ठैस्ताड़नमधिकृत्याह ।

इष्टकोपलकाष्ठेश्च ताड़ने तु द्विमाषकः ।
द्विगुणः शोणितोद्भेदे दण्डः कार्य्यो मनीषिभिः ॥

विष्णुः ।

दण्डः शोणितेन विना दुःखमुत्पादयिता त्रिंशतं पणान्सह शोणितेन चतुःषष्टिम् ।

एतत्तु† शस्त्रकरणकदुःखोत्पादने ।

मनुः ।

त्वग्भेदकः शतं दण्ड्यो लोहितस्य प्रवर्त्तकः ।
मांसभेत्ता तु षण्निष्कान्प्रवास्यस्त्वस्थिभेदकः ॥

अत्र सह शोणितेनेत्यनेन विष्णुना शोणितेन चतुःषष्टिपणदण्डाभिधानादधिकत्वग्भेदादिप्रयुक्तशोणिते इदं बोद्धव्यम् ।

त्वग्भेदे प्रथमो दण्डो मांसभेदे तु मध्यमः ।
उत्तमस्त्वस्थिभेदे तु घातने तु प्रमापणम् ॥

---

* क्षतगौरवानुसारेणेति पाठान्तरम् ।

† एतच्चेति पाठान्तरम् ।

कर्णनासाकरच्छेदे दन्तभेदेऽस्थिभेदने ।
कर्त्तव्यो मध्यमो दण्डो द्विगुणः पतितेषु च ॥

घातने वधे, प्रमापणं वध एव*, पतितेषु स्वस्थानात्च्यवितेषु ।

कात्यायनः ।

कर्णौष्ठघ्राणनासाक्षिजिह्वाशिश्नकरस्य तु ।
छेदने चोत्तमो दण्डो भेदने मध्यमो भृगुः ॥

छेदने स्वस्थानात्च्यावने, भेदने विदारणे ।

याज्ञवल्क्यः ।

करपाददन्तभङ्गे छेदने कर्णनासयोः ।
मध्योदण्डो व्रणोद्भेदे मृतकल्पहते तथा ॥
चेष्टाभोजनवाग्रोधे नेत्रादिषु विभेदने ।
कन्धराबाहुसक्थ्नाञ्च भङ्गे मध्यमसाहसः ॥

व्रणोद्भेदे प्ररूढप्रायव्रणस्य पुनर्नवीकरणे, मृतकल्पो हतः मृतकल्पहतः तस्मिन् हते† मध्यमो दण्ड इत्यर्थः । मृतकल्पो मृतप्रायः ।

दण्ड इत्यनुवृत्तौ विष्णुः ।

नेत्रकन्धराबाहुसक्थ्यंससक्थ्नाञ्च भङ्गे चोत्तमम्, उभयनेत्रभेदिनं राजा यावज्जीवं बन्धनान्न मुञ्चेत्तादृशमेव वा कुर्य्यात् ।

याज्ञवल्क्यः ।

---

* मारणमिति पाठान्तरम् ।

† तेनाहत इति पाठान्तरम् ।

छिन्नेऽस्थिभेदिनो राजद्विष्टादेशकृतस्तथा ।
विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः ॥

राजद्विष्टादेशकृद्द्वितीये वर्षे राजा मरिष्यतीत्यादेशकारी, तस्य । विप्रत्वेन विप्रचिह्नोपवीतधारणादिना जीवतः शूद्रस्य । अष्टौ शतानि यस्मिन्नसौ अष्टशतो दमः । अत्र चैकस्मिन् विषये नानाविधशरीरार्थदण्डाः* ते पीड़ाभूयस्त्वाभूयस्त्वाभ्यामाक्षेपकसधनत्वनिर्धनत्वाभ्यां† वा व्यवस्थाप्याः । ये चार्थदण्डा एकस्मिन्नपि विषये शरीरदण्डत्वेन विकल्पितास्तेऽप्याक्षेपकस्य‡ आढ्यत्वानाढ्यत्वाभ्यां समाधेयाः ।

तथाच मनुः ।

मनुष्याणां पशूनाञ्च दुःखाय प्रहृते सति ।
यथा यथा महद्दुःखं दण्डं कुर्य्यात्तथा तथा ॥

दुःखाय दुःखोदयमभिसन्धाय, तेन प्रमादकृते, बलात्कृते च न दोष इति दर्शितम् ।

अथ हारीतः ।

अधोवर्णानामुत्तमवर्णाक्रोशाक्षेपाभिभवे अष्टौ पुराणाः§ ग्रीवावस्त्रगलस्तनकचपक्षग्रहणेषु विंशत् । रोमोत्पाटनतर्जनावगूरणेषु त्रिषष्टिः । शिखाकर्णाङ्ग-

* दण्डविकल्पः इति पाठान्तरम् ।

† पीड़ाभूयस्त्वाल्पत्वापेक्षया सधननिर्धनत्वाभ्यामिति पाठान्तरम् ।

‡ भेदकत्वमिति पाठकर्त्तुरिति च पाठान्तरम् ।

§ पणा इति पाठान्तरम् ।

भङ्गच्छेदेषु द्विशतम्। पादताड़नेऽनृताभिशंसने तदङ्गच्छेदः पञ्चशतं वा। आद्येषु पादोनं वा, स्वामित्वादाद्यवर्णत्वाच्चोत्तमानामीशानतमो ब्राह्मणः*।

त्रिंशत्पुराणा इत्यर्थः, एवमुत्तरत्र। आद्येष्वित्यादिना हीनवर्णस्य दण्डमुक्ताधिकस्याप्युक्तः।

याज्ञवल्क्यः।

विप्रपीड़ाकरं छेद्यमङ्गमब्राह्मणस्य तु।
उद्गूर्णे प्रथमो दण्डः संस्पर्शे तु तदर्द्धकः॥

उद्गूर्णे वधार्थमुद्यमनविषयीकृते शस्त्रादौ। संस्पर्शे वधोद्यमनार्थमेव शस्त्रादेः संस्पर्शे।

नारदः।

येनाङ्गेनावरो वर्णो ब्राह्मणस्यापराध्नुयात्।
तदङ्गं तस्य छेत्तव्यमेवं शुद्धिमवाप्नुयात्॥

अवरो हीनवर्णः†।

तथा।

राजनि प्रहरेद्यस्तु कृतागस्यपि दुर्म्मतिः।
शूल्यं तमग्नौ विपचेद्ब्रह्महत्याशतातिगम्॥

योऽब्राह्मणः। कृतागसि कृतापराधे। शूलमारोप्य यस्तंस्क्रि-

---

* अधोवर्णैरा ब्राह्मणभिन्नानाम्। आद्येषु ब्राह्मणेषु। पादोनम् षष्टी पणा इत्यत्र षट् पणा त्रिंशदित्यत्र सार्द्धद्वाविंशति, त्रिषष्टिरित्यत्र सप्तचत्वारिंशत्पणाधिक काकिन्य, पञ्चशतमित्यत्र पञ्चसप्तत्यधिकशतचतुष्टयमिति निष्कर्षः।

† एष पाठः पुस्तकद्वयस्य दृश्यते, परं हीन इति पाठः साधुरिति बोध्यम्।

यते तच्छूलं तेन प्रथमतस्तस्य शूलभेदेन पीड़ां विधाय अग्नि-
विपाकेन पीडा कर्त्तव्येत्यर्थः ।

मनुः ।

येन केनचिदङ्गेन हिंस्याच्छ्रेयांसमन्त्यजः ।
छेत्तव्यं तत्तदेवास्य तन्मनोरनुशासनम् ॥
पाणिमुद्यम्य दण्डं वा पाणिच्छेदनमर्हति ।
पादेन प्रहरन्कोपात्पादच्छेदनमर्हति ॥

हिंस्यात्प्रहरेत् । श्रेयांसं त्रैवर्णिकम् । अन्त्यजः शूद्रः ।

मनुनारदौ ।

सहासनमभिप्रेप्सुरुत्कृष्टस्यापकृष्टजः ।
कट्यां कृताङ्को निर्वास्यः स्फिचं वास्य प्रकर्त्तयेत्* ॥

सहासनमभिप्रेप्सुरेकासनोपवेशी, अभिप्रेप्सुपदस्याभिप्रायपरत्वात् । तथाच विष्णुः । एकासनोपवेशी कट्यां कृताङ्को निर्वास्य इति । उत्कृष्टो ब्राह्मणः । अपकृष्टजः शूद्रः । कृताङ्कः तप्तलोहशलाकया कृतचिह्नः । स्फिक् योन्येकदेशः ।

तथा ।

अवनिष्ठीवतो दर्पाद्द्वावोष्ठौ छेदयेन्नृपः ।
अवमूत्रयतो मेढ्रमवशर्द्धयतो† गुदम् ॥
केशेषु गृह्णतो हस्तौ छेदयेदविचारयन् ।
पादयोर्दाढिकायाञ्च ग्रीवायां वृषणेषु च ॥

---

* विकर्त्तयेदिति स्फिचं राजा विकर्त्तयेदिति च पाठान्तरम् ।

† अवशर्द्धयत इति अवमर्द्दयत इति च पाठान्तरम् ।

अवनिष्ठीवतो दर्पादुपरि निष्ठीवनं* दर्पात्कुर्व्वतः। अवमूत्रयतः मूत्रेण सेकं कुर्व्वतः। अवशर्द्धयतो गुदं गुदेन कुत्सितशब्दं कुर्व्वतः। हस्ताविति द्विवचनं एकेनापि करेण ग्रहणे हस्तच्छेदनार्थम्। दाढ़िका श्मश्रु।

शूद्र इत्यनुवृत्तौ गौतमः।

आसनशयनवाक्पथिषु समत्वं प्रेप्सुर्दण्ड्यः शतमिति।

वाक्समत्वं युगपद्वादः। पथि साम्यं सहगमनम्।

शूद्र इत्यनुवृत्तावापस्तम्बः।

वाचि पथि शय्यायामासने इति समीभवतो दण्डताड़नम्।

पूर्व्ववाक्ये अस्मिन्नेव विषये दण्ड्यत्वाभिधानं पारुष्यकर्त्तुर्धनवत्त्वपक्षे, इदन्तु निर्धनत्वपक्षे दण्डताड़नमित्यविरोधः।

कात्यायनः।

वाक्पारुष्ये यथैवोक्तः प्रतिलोमानुलोमतः।
तथैव दण्डपारुष्ये पात्यो दण्डो यथाक्रमम्॥

अथ विष्णुः।

एकं बहूनां विघ्नतां प्रत्येकम् उक्तो दण्डो द्विगुणः।
उत्क्रोशन्तमनभिधावतां तत्समीपवर्त्तिनां सताञ्च॥

याज्ञवल्क्यः।

एकं घ्नतां बहूनाञ्च यथोक्ताद्द्विगुणो† दमः।

---

* ष्ठीवनमिति पाठान्तरम्।

† यथोक्तद्विगुणो दम इति पाठान्तरम्।

कलहापहृतं* देयं दण्डश्च द्विगुणस्ततः ॥

द्विगुणो दमः प्रत्येकम्। कलहापहृतं देयं कलहे यद्येनापहृतं† तत्तेन देयम्। दण्डश्च द्विगुणस्ततः ततोऽपहृताद्द्रव्यादपहारकस्य द्विगुणो दण्डः करणीय इत्यर्थः।

कात्यायनः।

वाग्दण्डस्ताडनञ्चैव येपूक्तमपकारिषु‡।

हृतं भग्नन्तु दाप्यास्ते शोध्यं निःस्वैस्तु कर्म्मणा।

निःस्वैर्निर्धनैः, कर्म्मणा सेवादिरूपेण, शोध्यं पूरणीयम्।

मनुः।

अङ्गावपीड़नायाञ्च व्रणशोणितयोस्तथा।

समुत्थानव्ययं* दाप्यः सर्व्वदण्डमथापि वा ॥

वृहस्पतिः।

अङ्गावपीड़ने चैव छेदने भेदने तथा।

समुत्थानव्ययं§ दाप्यः कलहापहृतं तथा ॥

समुत्थानव्ययं भग्नसंघटनार्थं भेषजपथ्यादिजनकधनव्ययम्।

याज्ञवल्क्यः।

दुःखमुत्पादयेद्यस्तु स समुत्थानजं व्ययम्।

दाप्यो दण्डञ्च यो यस्मिन्कलहे समुदाहृतः ॥

---

* कलहापहृतमिति पाठान्तरम्।

† कलहापहृतं कलहे यद्येनापहृतमिति पाठान्तरम्।

‡ येपूक्तमपकारिषु इति यथूक्तमपकारिष्विति च पाठान्तरम्।

§ समर्हणव्ययमिति पाठान्तरम्।

अङ्गावपीड़नायां करायङ्गपीड़ने प्राणशोणितयोर्वा पीड़ने सति यावता कालेन पीड़ितः समुत्थानसमर्थो भवति, तावता समयेन दण्डत्वेन यावान् पथ्यौषधादिव्ययो भवति तावन्तं पीड़ाकर्त्ता दाप्यः। अथ तं व्ययमसौ न दातुमिच्छति, तदा यः समुत्थानव्ययो यश्च दण्डः तत्सर्व्वं दाप्यः।

कात्यायनः।

देहेन्द्रियविनाशे तु यथा दण्डं प्रकल्पयेत्।
तथा तुष्टिकरं देयं समुत्थानञ्च पीड़ितैः* ।
समुत्थानव्ययश्चासौ दद्याद्वा व्रणरोपणम्॥

व्रणपदमत्र पीड़ाहेतुमुपलक्षयति। रोपणपदं शान्तिपरम्।

विष्णुः।

सर्व्वे च पुरुषपीड़ाकराः समुत्थानव्ययं दद्युर्गोव्यपशु-पीड़ाकराश्च।

अथ मनुः।

भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदरः।
प्राप्तापराधास्ताड्याः स्यूरज्ज्वा वेणुदलेन वा॥
पृष्ठतस्तु शरीरस्य नोत्तमाङ्गे कदाचन।
अतोऽन्यथा तु प्रहरन्प्राप्तः स्याच्चौरकिल्विषम्॥

भ्राता कनिष्ठः, पृष्ठतोऽमर्म्मणि, नोत्तमाङ्गे न मर्म्मणीत्यर्थः। न्यायसाम्यात्।

---

* पुस्तकत्रयेऽपि पीड़ितैरित्येव पाठो दृश्यते, परं पीड़कैरिति पाठस्तु समीचीनतराभातीति ध्येयम्।

यमः ।

भार्या पुत्रश्च दासश्च दासी शिष्यश्च पञ्चमः ।
प्राप्तापराधास्ताड्याः स्यू रज्ज्वा वेणुदलेन वा ॥
अधस्तात् प्रहर्तव्या नोत्तमाङ्गे कदाचन* ।
अतोऽन्यथा प्रहरन् यमोक्तं दण्डमर्हति ॥

ब्रह्मचारीत्यनुवृत्तौ नारदः ।

अनुशास्यः† स गुरुणा न चेदनुविधीयते ।
अवधेनाप्यशक्तं रज्ज्वा वेणुदलेन वा ॥
भृशं न ताडयेदेनं नोत्तमाङ्गे न वक्षसि ।
अनुशास्यश्च विश्वास्यः शास्यो राज्ञोऽन्यथा‡ गुरुः ॥

अवधेन ताडनहेतुदण्डादिव्यतिरेकेण ।

गौतमः ।

शिष्यशिष्टिरवधेन§ अशक्तौ रज्जुवेणुदलाभ्यां तनुभ्या-
मन्येन घ्नन् राज्ञा शास्यः ।

शिष्यानुशासनमापस्तम्बः ।

अपराधेषु चैनं सततमुपालभेताभित्रासन उदकोपस्पर्शन-
मिति दण्डाः यथामात्रमानिवृत्तेः ।

---

* [illegible]
† [illegible]
‡ [illegible]
§ [illegible]
¶ [illegible]

उपालभेत रूक्षोक्तिभिस्तिरस्कुर्य्यात्। अतिचासोऽतिभीत्युत्पादनम्। उदकोपस्पर्शनमतिशयितजाड्यकाले, यथामात्रं सामर्थ्यापराधानुरूपमात्रम्, आनिवृत्तेरपराधस्येति शेषः।

नारदः।

पुत्रापराधे न पिता श्ववान् शुनि न दण्डभाक्।
न मर्कटे च तत्स्वामी तेनैव प्रहितो न चेत्॥

याज्ञवल्क्यः।

शक्तो ह्यमोचयन्स्वामी पशिणां शृङ्गिणामपि।
प्रथमं साहसं दण्ड्यो विक्रुष्टे द्विगुणं तथा॥

स्वीयं शृङ्गिणमपसारयेत्यसकृदाक्रोशे कृते विक्रुष्ट इति।

बृहस्पतिः।

विविक्ते ताड़ितो यस्तु हेतिदृश्यो न वा भवेत्।
ज्ञात्वा तदनुमानेन विज्ञेयः शपथेन वा॥
अन्तर्वेश्मन्यरण्ये वा निशायां यत्र ताड़ितः।
शोणितं तत्र दृश्येत न पृच्छेत्तत्र साक्षिणः॥

विविक्ते ताड़ितो यस्तु ताड्येन ताड़केऽदृश्यमाने मध्यस्थेऽसति अदृश्यमाने वा ताड़ित इत्यर्थः। अनुमानेन अविनाभूतेन धर्म्मेण*। शोणितं ताड़कत्वाविनाभूतम्†।

नारदः।

कश्चित्कृत्वात्मनश्चिह्नं द्वेषात्परमभिद्रवेत्।

---

* अनुमानकृतेन धर्म्मेणेति पाठान्तरम्।

† ताड़नकारिणा कृतमिति ताड़कत्वाविनाकृतमिति च पाठान्तरम्।

हेत्वर्थगतिसामर्थ्यैर्युतं* तत्र परीक्षणम् ॥

आत्मनश्चिह्नं व्रणादिरूपं, परमभिद्रवेत् अहमनेन व्रणवान् कृतोऽयं दण्ड्यतामित्यनुयुञ्जीत। हेतुर्गण्डदस्त्रादिः, अर्थः प्रयोजनं, गतिः सन्निधिगमनं, सामर्थ्य प्रहारक्षमता।

याज्ञवल्क्यः।

असाक्षिकहते चिह्नैर्युक्तिभिश्चागमेन च।

द्रष्टव्यो† व्यवहारस्तु कूटचिह्नकृताद्भयात् ॥

चिह्नैर्हन्तुरसाधारणैरुपनीतादिभिः युक्तिभिः कारणवीजप्रयोजनपर्य्यालोचनरूपाभिः। आगमेन जनप्रवादेन‡। चशब्दो दिव्यसमुच्चयार्थः।

तथा च कात्यायनः।

हेलादिभिर्न§ पश्येच्चेद्दण्डपारुष्यकारणम्।

तदा साक्षिकृतं तत्र दिव्यञ्चापि नियोजयेत् ॥

वाग्दण्डपारुष्याधिकारे नारदः।

विधिः पञ्चविधस्तूक्त एतयोरुभयोरपि।

विशुद्धिर्दण्डभाक्त्वञ्च¶ तत्र सम्बध्यते यथा ॥

विधिः क्रिया, अत्र वाक्पारुष्यं त्रिधा निष्ठुराश्लीलतीव्र-

---

* हेत्वर्थगतिसामर्थ्ययुक्तेति पाठान्तरम्।

† द्रष्टव्य इति पाठान्तरम्।

‡ जनप्रमाणेनेति पाठान्तरम्।

§ हेलादिकमिति पाठान्तरम्।

¶ दण्डताश्चेति पाठान्तरम्।

त्वात्। एवं दण्डपारुष्यं द्विधा अभिद्रोहाघातरूपत्वात्। मिश्रद्विर्दण्डाभावः, यथा तथा वक्ष्यते इति शेषः।

विधिमाह।

पारुष्ये सति संरम्भादुत्पन्ने क्षुब्धयोर्द्वयोः।
स मान्यते यः क्षमते दण्डभाग्योऽतिवर्त्तते॥
पारुष्यदोषाच्च तयोर्युगपत्संप्रवृत्तयोः।
विशेषश्चेन्न दृश्येत विनयः स्यात्समस्तयोः॥

क्षुब्धयोः क्रुद्धयोः। मान्यते पूज्यते न दण्ड्यते इत्यर्थः। क्षमते पारुष्यं नानुबध्नाति, अतिवर्त्तते पारुष्यं तनोति। विशेषोऽयमेवं पूर्वं कृतवानित्याद्याकारः।

बृहस्पतिः।

द्वयोः प्रहरतोर्दण्डः समयोस्तु समः स्मृतः।
आरम्भकोऽनुबन्धी च दाप्यः स्यादधिकं दमम्॥

नारदः।

द्वयोरापन्नयोस्तुल्यमनुबध्नाति योऽधिकम्।
स तयोर्दण्डमाप्नोति पूर्वो वा यदि वोत्तरः॥
पूर्वमाक्षारयेद्यस्तु नियतं स्यात्स दोषभाक्।
पश्चाद्यः सोऽप्यसत्कारी पूर्वे तु विनयो गुरुः॥

द्वयोरापन्नयोस्तुल्यं पारुष्ये तुल्यं प्रवृत्तयोः। अनुबध्नाति असत्कारं करोति। पूर्वं प्रथममाक्षारयेत्पारुष्यं कुर्य्यात्। दोषभाक् दण्ड्यः। असत्कारी अपराधवान्। पूर्वे तु विनयो गुरुरित्यनेन तदन्यस्मिन् लघुर्विनय इत्युक्तम्।

कात्यायनः ।

आभीपणेन दण्डेन प्रहरेद्यस्तु मानवः ।

पूर्व्वं वा पीड़ितो वाथ स दण्ड्यः परिकीर्त्तितः ॥

आभीपणेन खड्गादिना ।

वृहस्पतिः ।

आक्रुष्टस्तु समाक्रोशंस्ताड़ितः प्रतिताड़यन् ।

हत्वाततायिनञ्चैव नापराधी भवेन्नरः ॥

पश्चात्कारिणि योऽल्पदण्ड उक्तो नारदेन, असावनुबन्धकलहे* अननुबन्धे तु वृहस्पतिनानपराधाभिधानं, तदपि तन्न्यूनसमानौ प्रति मन्तव्यम् । अधिकं प्रति एवंविधेऽपि अपराधस्योक्तत्वात् ।

तथाच ।

वाक्पारुष्यादिना नीचो यः सत्तममभिलङ्घयेत् ।

स एव ताड़यंस्तस्य नान्वेष्यो महीभृता ॥

नीचोऽनुत्तमः सत्तमुत्तमम् । स एव उत्तम एव, तस्य ताड़यतिति हिंसार्थे षष्ठी, न अन्वेष्यः न तस्य दण्डः करणीय इत्यर्थः ।

नारदः ।

श्वपाकपण्ढचाण्डालवेश्यावधकहस्तिषु ।

दृक्षिपग्रात्यदासेषु गुर्व्वाचार्य्यातिगेषु च ॥

मर्य्यादातिक्रमे सद्यो घात एवानुशासनम् ।

* अनानुबन्धकलह इति पाठान्तरम् ।

न च तद्दण्डपारुष्ये दोषमाहुर्मनीषिणः॥
यमेव ह्यतिवर्त्तेरन्नेते सन्तं जनं नृप।
स एव विनयं कुर्य्यान्न तद्विनयभाङ्नृपः॥
मला ह्येते मनुष्याणां धनमेषां मलात्मकम्।
अपि तान्घातयेद्राजा नार्थदण्डेन दण्डयेत्॥

श्वपाकः क्षत्रियायामुग्राज्जातः, उग्रस्तु, शूद्रायां क्षत्रियाज्जातं प्राहुरुग्रमिति द्विजा इति देवलेन दर्शयिष्यते। पशुशब्दः क्लीवपरः। चाण्डालः शूद्राद्ब्राह्मण्यां जातः। वधकवृत्तिः परवध एव वृत्तिर्जीवनं यस्य स वधकवृत्तिः स्वार्थे कन्। हस्तिपको हस्त्यधिरोहकः। दासोऽत्र गृहजातादिः। गुर्व्वाचार्य्यातिगः गुर्व्वाचार्य्यवचनलङ्घनकर्त्ता। मर्य्यादा धर्म्मव्यवस्था। सद्योऽविलम्बितम्। घात एव ताड़नमेव। श्वपाकादयो येषु पारुष्यं* कुर्व्वते, तएवैषां घातरूपं दण्डं कुर्य्युः। तेषामसामर्थ्ये तु राजा घातरूपमेव दण्डं कुर्य्यान्नार्थदण्डम्, अत्र हेतुर्मला ह्येत इत्यादि।

बृहस्पतिः।

प्रातिलोम्यास्तथाचान्त्याः पुरुषाणां मलाः स्मृताः।
ब्राह्मणातिक्रमे वध्या न दातव्या धनं† क्वचित्॥

दातव्या दापयितव्या इत्यर्थः।

कात्यायनः।

---

* ताड़नमिति पाठान्तरम्।

† दमनमिति पाठान्तरम्।

अस्पृश्य धूर्त्तदासानां म्लेच्छानां पापकारिणाम् ।
प्रातिलोम्यप्रसूतानां ताड़नं नार्थतो दमः ॥

पापकारिणोऽतिशयेन प्रातिलोम्यप्रसूता निषादादयः* ।

अथ याज्ञवल्क्यः ।

दुःखेषु शोणितोत्पादे शाखाङ्गच्छेदने तथा ।
दण्डः क्षुद्रपशूनाञ्च द्विपणात्† प्रभृति द्विगुणः क्रमात् ॥
लिङ्गस्य च्छेदने मृत्यौ मध्यमो मूल्यमेव च ।
महापशूनामेतेषु स्थानेषु द्विगुणो दमः ॥

शाखा अनारम्भकशृङ्गादिरूपा, अङ्गमारम्भकं करचरणादि। तेन क्षुद्रपशूनामजादीनां शोणितं विना दुःखोत्पादे, शोणितोत्पादे, शाखाच्छेदे, अङ्गच्छेदे यथाक्रम द्विपणचतुष्पणाष्टपण-षोड़शपणा दण्डाः । तथा क्षुद्रपशूनामेव लिङ्गच्छेदने मारणे च मध्यमः साहसो दण्डः । पशुस्वामिने च तन्मूल्यदानम् । महापशूनां तुरगादीनाम् । एतेषु दण्डस्थानेषु एते दमाः द्विगुणाः कार्य्या इत्यर्थः ।

कार्षापणशत दण्डः इत्यनुवृत्तौ विष्णुः ।

पशूनां पुंस्त्वोपघातकारी ।

पुंस्त्वोपघातोऽण्डच्छेदः ।

पुनर्विष्णुः ।

---

* पापकारिणोऽतिशयेन, प्रातिलोम्यप्रसूतानां प्रतिलोमजातानामिति पाठान्तरम् ।

† द्विगुण इति पाठान्तरम् ।

गवाश्वगजोष्ट्रोपघाती* चैकैकपादः कार्य्यः विमांसविक्रयी च ग्राम्यपशुघाती कार्षापणशतं दण्ड्यः, पशुस्वामिनश्च तन्मूल्यं दद्यात्। अरण्यपशुघाती पञ्चाशतं कार्षापणानां, पक्षिघाती मत्स्यघाती च दश कार्षापणान्, कीटोपघाती कार्षापणम्।

विमांसं विरुद्धमांसं श्वशृगालादिमांसमिति यावत्।

कात्यायनः।

> त्रिपणो द्वादशपणो घाते तु पशुपक्षिणाम्†।
> सर्पमार्जारनकुलश्वशूकरवधे नृणाम्॥

अत्रात्यन्तापकृष्टमृगपक्षिघातेषु‡ त्रिपणः, उत्कृष्टतद्घातेषु§ द्वादशपणः। विष्णूक्तस्तु पञ्चाशत्पणोऽत्यन्तोत्कृष्टमृगपक्षिवधविषयः। पञ्चाशदुत्तरो दण्डः शुभेषु मृगपक्षिष्विति वचनात्।

मनुः।

> गोकुमारीदेवपशूनुक्षाणं वृषभं तथा।
> वाहयन्साहसं पूर्व्वं प्राप्नुयादुत्तमं वधे॥

गोकुमारी रूपेण संयुक्ता गौः। देवपशुः देवाय दत्तः पशुः। उक्षा उक्ष सेचने इत्यनुसाराद्बीजसेक्ता वृषः। वृषभपदेन जीर्णवृषोऽत्र उक्तः।

---

* गवाश्वखरोष्ट्रोपघातीति पाठान्तरम्।

† मृगपक्षिणामिति पाठान्तरम्।

‡ घातकेष्विति पाठान्तरम्।

§ घातकेष्विति पाठान्तरम्।

वृपाधिकारे* वृहस्पतिः।

यान्ताम्बुधार्त्तान्नृपितानकाले वाहयेत्तु यः।
स गोघ्नो निष्कृतिं कार्य्यो दाप्यो वा प्रथमं दमम्॥

एवञ्च दण्डप्रायश्चित्तयोर्विकल्पदर्शनाद्दण्डेनापि पापं क्षीयते†" इत्याहुः।

कात्यायनः।

यान्ताम्बुधार्त्तान्नृपितानकाले वाहयेत्तु यः।
खरगोमहिषोष्ट्रादीन्प्राप्नुयात्पूर्व्वसाहसम्॥

याज्ञवल्क्यः।

चतुष्पदकृतो दोषो नापैहीति प्रभाषतः।
काष्ठलोष्टेष्टपाषाणबाहुयोग्याकृतस्तथा॥
छिन्ननास्येन यानेन तथा भग्नयुगादिना।
पश्चाच्चैवापसरता हिंसने स्वाम्यदण्डभाक्॥

काष्ठलोष्टेष्टपाषाणबाहुयोग्याकृतः काष्ठलोष्टेष्टपाषाणबाहुभिरभ्यासकरणे यः परमो घातो दण्डोचित्यलक्षणो दोषः‡ प्रथममेव अपैहीति भाषमाणस्य न भवतीत्यर्थः। एतच्च एवंविधस्यान्यस्याप्यभ्यासकरणस्योपलक्षणं न्यायसाम्यात्।

मनुः।

यानस्यैव हि यन्तुश्च यानस्वामिन एव च।

* खरपाधिकारे इति पाठान्तरम्।

† क्षीयेतेति पाठान्तरम्।

‡ वधो दोष इति पाठान्तरम्।

दशातिवर्त्तनान्याहुः शेषे दण्डो विधीयते॥

यानस्य रथादेः, यन्तुः सारथेः। अतिवर्त्तनानीति दण्डमतिक्रम्य वर्त्तन्ते इति अतिवर्त्तनानि अदण्ड्यानीत्यर्थः*।

तानि दश निमित्तान्याह मनुः।

छिन्ननास्ये भिन्नयुगे तिर्य्यक्प्रतिमुखागते।
अक्षभङ्गे तु यानस्य चक्रभङ्गे तथैव च॥
भेदने चैव यन्त्राणां योक्त्ररश्म्योस्तथैव च।
आक्रन्दे चाप्यपैहीति न दण्डं मनुरब्रवीत्॥

छिन्ननास्ये छिन्ननासासम्बद्धरज्जौ,† भिन्नयुगे भिन्नं युगं युगकाष्ठम्। तिर्य्यक्प्रतिमुखागते तिर्य्यक् प्रतिमुखं यत्तत्प्रतिरोधादागतमागमनं, तेन तिर्य्यग्विरोधिगमनस्य बलेन यत्परस्य यानस्यागमनादि, तदपि न दण्डहेतुरित्यर्थः। अक्षचक्रमध्यकाष्ठं, यन्त्राणां युगादिबन्धनानाम्, योक्त्रं युगबन्धनरज्जुः, रश्मिः प्रग्रहः, आक्रन्दे चाप्यपैहीति, दूरं गच्छेत्युच्चैरभिलापे‡ सारथ्यादिना कृते तदनादरेण समीपमागतो यदि रथादिना पीड्यते, तदा सारथ्यादेर्न दण्ड इत्यर्थः§।

तथा।

---

* अदण्ड्यनिमित्तानीत्यर्थ इति पाठान्तरम्।

† छिन्ननासासम्बद्धरज्ज्वामिति पाठान्तरम्।

‡ गच्छेत्यभिलापे इति पाठान्तरम्।

§ सारथ्यादिर्न दण्ड्य इत्यर्थ इति पाठान्तरम्।

यत्रातिवर्त्तते युग्यं वैगुण्यात्प्राजकस्य तु ।*
तत्र स्वामी भवेद्दण्ड्यो हिंसायां द्विशतं दमम् ॥

यत्रानभिज्ञ एव प्राजकः† सारथ्यादिः स्वामिना कृतः तदज्ञानाच्च युग्यं तुरगाद्यतिवर्त्तते‡ अतिक्रामति तत्र तज्जन्यहिंसायां स्वामी द्विशतं दण्ड्यः। यत्र पुनरभिज्ञ एव§ प्राजकः¶ कृतः, तत्र प्राजकस्यैव दण्डो न स्वामिनः‖।

तदिदमाह मनुरेव**।

प्राजकश्चेद्भवेदाप्तः प्राजको दण्डमर्हति ।
युग्यस्थाः प्राजकेऽनाप्ते सर्व्वे दण्ड्याः शतं शतम् ॥

आप्तोऽभिज्ञः।

तथा।

स चेत्तु पथि संरुद्धः पशुभिर्वा रथेन वा ।
प्रमापयेत्प्राणभृतस्तत्र दण्डोऽविचारितः ॥

यत्र प्राजकाकौशलप्रयुक्तः†† पशुना यानान्तरेण वा प्रतिरुद्धः

---

* द्विशतं चेति पाठान्तरम् ।

† अयोग्यश्च इति पाठान्तरम् ।

‡ तुरगादिरतिवर्त्तते इति पाठान्तरम् ।

§ पुनरभिज्ञ एवेति पाठान्तरम् ।

¶ अयोग्यश्च इति पाठान्तरम् ।

‖ प्राजकस्यैव न स्वामिन इति अयोग्यकस्यैव न स्वामिन इति च पाठान्तरम् ।

** मनुरिति पाठान्तरम् ।

†† अयोग्यकाकौशलेन प्रयुक्त इति पाठान्तरम् ।

प्राणिहिंसाहेतुर्भवति, तत्रापि प्राजकस्य दण्डोऽविचारितो-निश्चित इत्यर्थः।

इदानीं प्राणिविशेषमाह मनुरेव*।

मनुष्यमारणे चिप्रं चौरवत्किल्विषं भवेत्।
प्राणवत्सु महत्स्वर्द्धं गोगजोष्ट्रहयादिषु॥

अत्र चौरवदित्यनेन मद्धतिं† साहसे यथोक्तोऽर्थदण्डः‡ सोऽतिदिश्यते न तु वधदण्डस्तस्यार्द्धत्वासम्भवात्§ अतैवोत्तरार्द्धे गवादिषु तदर्द्धस्याभिधानात्¶।

तथा।

क्षुद्रकाणां पशूनाञ्च हिंसायां द्विशतो दमः।
पञ्चाशत्तु भवेद्दण्डः शुभेषु मृगपक्षिषु॥
गर्दभाजाविकानाञ्च दण्डः स्यात्पञ्चमाषिकः।
माषकस्तु भवेद्दण्डः श्वशूकरनिपातने॥

क्षुद्रत्वमल्पपरिमाणत्वं, तच्च वयसः कलभादीनां, जातितोऽजादीनां, शुभमृगा रुरुप्रभृतयः, पक्षिणः शुकादयः। माषको हि रूप्यकृष्णले इति पारिजातः।

कात्यायनः।

---

* प्राणिविशेषे सारवेदण्डविशेषमाह मनुरिति पाठान्तरम्।

† मतीति पाठान्तरम्।

‡ योऽर्थदण्ड इति पाठान्तरम्।

§ तस्यार्द्धत्वाभावादिति पाठान्तरम्।

¶ तदर्द्धत्वाभिधानादिति पाठान्तरम्।

प्रमापणे प्राणभृतां प्रतिरूपन्तु दापयेत् ।

तस्यानुरूपं मूल्यं वा दाप्य इत्यब्रवीन्मनुः ॥

प्रतिरूपं प्रमापितस्य गुणादिना* समम्†। एतच्च स्वामिने प्रतिरूपादिदानम् ।

कात्यायनः ।

वनस्पतीनां सर्व्वेषामुपभोगो यथा यथा ।

तथा तथा दमः कार्य्यो हिंसायामिति धारणा ॥

वनस्पतिशब्द उपयुक्तसर्व्वस्थावरोपलक्षणार्थो न्यायसाम्यात् । तथा तथा उपयोगगौरवलाघवानुसारेण ।

याज्ञवल्क्यः ।

प्ररोहिशाखिनां शाखास्कन्धसर्व्वविदारणे ।

उपजीव्यद्रुमाणाञ्च‡ विंशतेर्द्विगुणो दमः ॥

चैत्यश्मशानसीमासु पुण्यस्थाने सुरालये ।

जातद्रुमाणां द्विगुणो दमो वृक्षेऽथ विश्रुते ॥

गुल्मगुच्छक्षुपलताप्रतानौषधिवीरुधाम् ।

पूर्व्वस्मृतादर्द्धदण्डः स्थानेष्वेतेषु§ कर्त्तने ॥

प्ररोहिशाखिनो येषां शाखा अपि प्ररोहन्ति ते वटादयः । उपजीव्यद्रुमाः येषां छायाद्युपजीव्यते ते चाम्रादयः । स्कन्धो

---

* प्रमापितप्राणिगुणादिना सममिति पाठान्तरम् ।

† प्राणिरूप वस्त्विति ।

‡ उपजीव्यद्रुमाणाश्चेति पाठान्तरम् ।

§ स्थानेषूक्तेष्विति पाठान्तरम् ।

यतो भागाच्छाखा उद्यते, सर्व्वशब्दो मूलपरः। तेषां* छेदने विंशतिपणादारभ्य उत्तरोत्तरो दण्डो द्विगुणो विंशतिपणचत्वारिंशत्पणोऽशीतिपण इति यावत्। चैत्यमायतनं, विश्रुते पलाशादौ†। गुल्मा अदीर्घा‡ लता मालत्यादयः गुच्छा अवल्लीरूपाः असरलप्रकाण्डाः कुरुण्टकादयः। क्षुपा ह्रस्वशाखाः शाकोटकादयः§। लता दीर्घायामिन्यो¶ द्राक्षादयः। प्रतानाः काण्डप्ररोहरहिताः|| सरलायामिन्यः** सारिवाप्रभृतयः। ओषध्यः फलपाकान्ताः कदल्यादयः। वीरुधश्छिन्ना अपि या विविधं प्ररोहन्ति गुडुच्यादयः। स्थानेषु स्कन्धशाखामूलेषु।

दण्ड इत्यनुवृत्तौ विष्णुः।

> फलोपगद्रुमच्छेदी उत्तमसाहसं, पुष्पोपगद्रुमच्छेदी मध्यमसाहसं, वल्लीगुल्मलताच्छेदी कार्षापणशतं, तृणच्छेद्येकं, सर्व्वे च तत्स्वामिना तदुत्पत्तिम्††।

---

* येषामिति पाठान्तरम्।

† पञ्चाशादादिति पाठान्तरम्।

‡ अनदीर्घा इति पाठान्तरम्।

§ शाकोटकादय इति पाठान्तरम्।

¶ दीर्घगामिन्य इति पाठान्तरम्।

|| प्ररोहरहिता इति पाठान्तरम्।

** सरलगामिन्य इति पाठान्तरम्।

†† तदुपयोगमिति पाठान्तरम्।

एक कार्षापणम्। दद्युरिति शेषः।

वशिष्ठः।

फलपुष्पोपगमान् वृक्षान् छित्त्वा कर्षणार्थं वोपहन्यात्।
गार्हस्थ्याङ्गे च।

कर्षणार्थं कृषिहेतुहलाद्यर्थम्। सम्भवासम्भवनिमित्तकविकल्प परो वाशब्दः। गार्हस्थ्याङ्गे गृहस्थकर्म्म दृष्टमदृष्टं वा, येन गृहोपकरणं यज्ञोपकरणञ्च सिध्यति। लक्ष्मीधरेण तु कार्षापणमिति पठितम्। तन्न अर्थसम्बन्धसङ्गप्रसङ्गात्प्रकाश हलायुधपारिजातविरोधान्मूलमृग्यदर्शनाच्चोपेक्षितम्।

इति श्रीविवादरत्नाकरे दण्डपारुष्यतरङ्गः।



## अथ स्तेयम्।

¹तत्र मनुः।

एषोऽखिलेनाभिहितो दण्डपारुष्यनिर्णयः।
स्तेनस्याथ प्रवक्ष्यामि विधिं दण्डविनिर्णये॥
स्यात्साहसन्त्वन्वयवत्प्रसभं कर्म्म यत्कृतम्।
निरन्वयं भवेत्स्तेयं कृत्वापव्ययते च यत्॥

---

¹ तत्रेत्यधिकमिति।

अन्वयवद्रक्षकपुरुषसमक्षं, तेन प्रसभं बलात्कारेणापहृत्य अपहार-मगोपयतोऽपहरणं साहसम्। अपव्ययते अपह्नुते इत्यर्थः। तेन यत्रापहारिऽपहरणं* भवति तत्स्तेयं, तद्विधा, रक्षक-पुरुषासमक्ष एव किञ्चिदपहृतं, किञ्चित्तु समक्षेऽपि हृत्वानन्तरं गोपितमित्यर्थः।

कात्यायनः।

सान्वयस्तु प्रहारो यः प्रसह्य हरणञ्च यत्।
साहसन्तु भवेदेवं स्तेयमुक्तं विनिह्नवः†॥

अत्र सान्वयो रक्षकपुरुषसमक्षं तदनभिभवेन विवक्षितः। प्रसह्य हरणमित्यनेन रक्षकमभिभूय हरणं विवक्षितम्।

साहसानन्तरं नारदः।

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र तूच्यते।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु॥

आधिर्द्रव्यहरणम्। तद्यदाक्रम्य रक्षकानवधीर्य्य क्रियते तत्साहसम्। यत्तु छलेन गोपनेन रक्षितं‡ तत्स्तेयम्। एवञ्च तस्यैव भेद इत्यत्र तत्पदार्थः साहसं, तदेकदेशोऽनैयायिक-द्रव्यहरणमात्रात्मको विवक्षित इति मन्तव्यम्।

तथा।

तदपि त्रिविधं प्रोक्तं द्रव्यापेक्षं मनीषिभिः।

---

* अपहरणचरति पाठो दृश्यते।

† विनिह्नवमिति पाठान्तरम्।

‡ हृतमिति पाठान्तरम्।

क्षुद्रमध्योत्तमानान्तु द्रव्याणामपकर्षणात् ॥
मृद्भाण्डासनखट्वास्थिदारुचर्मतृणादिकम् ।
शमीधान्यं कृतान्नञ्च क्षुद्रद्रव्यमुदाहृतम् ॥
वासः कौशेयवर्ज्जञ्च गोवर्ज्जं पशवस्तथा ।
हिरण्यवर्ज्जं लोहञ्च मध्यं व्रीहियवाद्यपि* ॥
हिरण्यरत्नकौशेयं† स्त्रीपुंसौ गजवाजिनः ।
देवब्राह्मणराज्ञाञ्च द्रव्यं विज्ञेयमुत्तमम् ॥
उपायैर्विविधैरेवं छलयित्वापकर्षणम् ।
सुप्तमत्तप्रमत्तेभ्यः स्तेयमाहुर्मनीषिणः‡ ॥

शमीधान्यं शिम्बां भवं§ मुद्गादि । लोहशब्दो धातुपरः । मध्यमिति मध्यमद्रव्यमित्यर्थः । उपायैः कूटतुलनसन्धिभेदनादिभिः । छलयित्वा गोपयित्वा अपकर्षणं अपहरणम् ।

इति श्रीविवादरत्नाकरे स्तेयतरङ्गः ।

---

* व्रीहियवाद्यपीति पाठान्तरम् ।

† हिरण्य वस्त्रकौशेयमिति पाठान्तरम् ।

‡ स्तेयमाहुर्मनीषिण इति पाठान्तरम् ।

§ शिम्बा भवमिति पाठान्तरम् ।

## अथ स्तेनाः।

तत्र मनुः।

द्विविधांस्तस्करान्विद्यात्परद्रव्यापहारिणः।
प्रकाशांश्चाप्रकाशांश्च चारचक्षुर्महीपतिः॥

व्यासः।

प्रकाशाश्चाप्रकाशाश्च द्विविधास्तस्कराः स्मृताः।
सचिह्नैरेव विज्ञेयाश्चौरास्तस्करवेदिभिः॥

सचिह्नैश्चौरश्चिह्नैर्मोषणादिभिः*।

बृहस्पतिः।

प्रकाशाश्चाप्रकाशाश्च द्विविधास्तस्करा मताः।
प्रज्ञासामर्थ्यमायाभिः प्रभिन्नास्ते† सहस्रशः॥

प्रज्ञा परद्रव्यहरणानुकूला, माया परव्यामोहनम्।

तथा।

नैगमा वैद्यकितवाः सभ्योत्कोचकवञ्चकाः।
दैवोत्पातविदो भद्राः‡ शिल्पज्ञाः प्रतिरूपकाः॥
अक्रियाकारिणश्चैव मध्यस्थाः कूटसाक्षिणः।
प्रकाशतस्करा ह्येते तथा कुहकजीविनः॥

नैगमा अत्र कपटतुलादिव्यवहारा अर्थहारिणः। वैद्या

---

* मोहनादिभिरिति पाठान्तरम्।

† प्रतिच्छन्ना इति पाठान्तरम्।

‡ अभद्रा इति पाठान्तरम्।

रोगं प्रकोप्यार्थहारिणः। कितवा कूटदेवनद्वारा* अर्थहारिणः। सभ्याः पार्षदाः अर्थलोभेनान्यायवादिनः। उत्कोचकाः कार्य्याधिकृताः सन्तः उत्कोचग्राहकाः। वञ्चकाः सम्भूयोद्यतानां प्रच्छाद्येतरार्थग्राहिणः। दैवं भाग्यमुत्पातोद्भूतं तद्विदो मिथ्योक्त्यार्थहराः। भद्राः† शान्तिनियुक्ताः शान्तिमकृत्वैवार्थहराः। शिल्पज्ञाः कूटशिल्पेनार्थहराः। प्रतिरूपकाः कूटविवादादिद्वारा अर्थहराः। अक्रियाकारिणो भृतका भृतिं गृहीत्वा अक्रियाकारिणः। मध्यस्था मूल्यव्यवस्थापकाः कूटमूल्यव्यवस्थापनेनार्थहराः। कूटसाक्षिणोऽयथावादेन परव्यवहारसाक्षिणः। कुहकजीविन इन्द्रजालादिनार्थहारिणो विवक्षिताः।

नारदः। -

प्रकाशवञ्चकास्तत्र कूटमानतुलाश्रिताः।
उत्कोचकाः सोपधिकाः कितवाः पण्ययोषितः॥
प्रतिरूपकराश्चैव मङ्गलादेशकारिणः।
इत्येवमाद्यो ज्ञेयाः प्रकाशास्तस्करा भुवि॥

सोपधिका: ये भयमाशां वा दर्शयित्वा परस्य धनमपहरन्ति। कितवाश्छद्मनार्थहराः। मङ्गलादेशकारिणः अनादेश्यमङ्गलादेशद्वारार्थहराः। इत्येवमाद्य इत्यादिपदेन प्रकारान्तरस्थप्रकाशतस्करग्रहणम्।

---

* कूटदेवनेनेति पाठान्तरम्।

† अभद्रा इति पाठान्तरम्।

व्यासः ।

प्रकाशापणसंस्थाश्च नानापण्योपजीविनः ।
प्रकाशवञ्चका ज्ञेया भिषक्प्रभृतयोऽपरे ॥

आपणः पण्यवीथी ।

मनुः ।

प्रकाशवञ्चकास्तेषां नानापण्योपजीविनः ।
उत्कोचकाः सोपधिका वञ्चकाः कितवास्तथा ॥
मङ्गलादेशवृत्ताश्च भद्राश्चेक्षणिकैः सह ।
असम्यक्कारिणश्चैव महामात्राश्चिकित्सकाः ॥
शिल्पोपचारयुक्ताश्च निपुणाः पण्ययोषितः ।
एवमाद्यान्विजानीयात्प्रकाशाँल्लोककण्टकान् ॥
निगूढ़चारिणश्चान्याननार्यानार्य्यलिङ्गिनः ।
प्रच्छन्नवञ्चकास्तेषां स्तेनाटव्यादयो जनाः ॥

ऐक्षणिका लक्षणवेदिनः असम्यग् लक्षणवादेनार्थहराः । असम्यक्कारिणः कर्म्मासद्दशं कुर्व्वाणा वेतनहारिणः । महामात्रा राजप्रधानभूताः* कर्म्मसहकारिणः लोभेनासम्यक्कारिणः । अनार्य्यानार्य्यलिङ्गिनः अब्रह्मचार्य्यादय एव ब्रह्मचार्य्यादिभावनयार्थहराः । प्रच्छन्नवञ्चकाः सन्धिचौरादयः । आटव्या अटव्याश्रिताः दिवापि चौर्य्यकारिणः । आदिपदात् प्रान्तवासिचौरपरिग्रहः ।

---

* महामात्रप्रधानभूता इति पाठान्तरम् ।

नारदः ।

अप्रकाशास्तु विज्ञेया बहिरभ्यन्तराश्रिताः ।
सुप्तमत्तप्रमत्तार्त्तान्मुष्णन्त्याक्रम्य ये नराः ॥

बृहस्पतिः ।

सन्धिच्छिदः प्रान्तमुषो* द्विचतुष्पदहारिणः ।
उत्क्षेपकाः शस्यहरा ज्ञेयाः प्रच्छन्नतस्कराः ॥

उत्क्षेपकाः रक्षकस्याग्रत एवानवहितस्य दृष्टिं वञ्चयित्वार्थहारिणः । शस्यहरशब्देन एतद्वाक्यपूर्व्वोक्तप्रच्छन्नहारकमात्रं† विवक्षितम् ।

व्यासः ।

साधनाङ्गान्विताश्चान्ये विचरन्त्यविभाविताः ।
अविज्ञातनिवेशाश्च ज्ञेयाः प्रच्छन्नतस्कराः ॥
उत्क्षेपकः सन्धिभेत्ता पान्यमुड्ग्रन्थिभेदकः ।
स्त्रीपुंसयोः पशुस्तेयी चौरो नवविधः स्मृतः ॥

साधनाङ्गान्विताः स्तेयकरणउनिपायान्विताः । अविज्ञातनिवेशाः अनवगतप्रवेशकाः । ग्रन्थिभेदकाः ग्रन्थिभेदनद्वारा *ग्रन्थिस्थसुवर्णाद्यपहारकाः ।*

चौरानुज्ञा नारदः ।

तान्विदित्वा तु कुशलैश्चारैस्तत्कर्मवेदिभिः ।
अनुसृत्य तु गृह्णीयाद्भूमिपतिश्वरैः ॥

* पान्यमुष इति समीचीनतया प्रतिभातीति बोध्यम् ।

† एतद्वाक्यपूर्व्वोक्तप्रच्छन्नहारकमात्रमिति पाठान्तरम् ।

चौरानन्तरं मनुः।

तान्विदित्वा तु चरितैस्तैस्तैस्तत्कर्म्मकारिभिः।
चारैश्चानेकसंस्थानैः प्रोत्साह्य वशमानयेत्॥
तेषां दोषानभिख्याय स्वे स्वे कर्म्मणि तत्त्वतः।
कुर्व्वीत शासनं राजा सम्यक् सारापराधतः॥

अभिख्याप्य लोकैः कथयित्वा। सारशब्दोऽपहृतधनपरः तेनापहृतधनानुसारिणा अपराधेन तान्दण्डयेदित्यर्थः।

बृहस्पतिः।

संसर्गचिह्नलोप्त्रैश्च विज्ञाता राजपूरुषैः।
प्रदाप्यापहृतं शास्या दमैः शास्त्रप्रचोदितैः॥

संसर्गो निर्णीतचौरैः सह मिलनम्*। चिह्नमसाधारणं चौर्य्यादिचिह्नलिङ्गम्। लोप्त्रं मुषितद्रव्यम्।

मनुः।

नहि दण्डादृते कर्त्तुं शक्यः पापविनिग्रहः।
स्तेनानां पापबुद्धीनां निभृतं चरतां चितौ॥

पापविनिग्रहः स्तेननिवारणम्। पापबुद्धीनां स्वभावतः पापार्जकबुद्धीनाम्। निभृतमप्रकाशम्।

तथा।

परमं यत्नमातिष्ठेत्स्तेनानां निग्रहे नृपः।
स्तेनानां निग्रहादस्य यशो राष्ट्रञ्च वर्द्धते॥
अभयस्य हि यो दाता स पूज्यः सततं नृपः।

* मेलनमिति पाठान्तरम्।

सत्रं विवर्द्धते तस्य सदैवाभयदक्षिणम् ॥
निर्भयं हि भवेद्यस्य राष्ट्रं बाहुबलाश्रितम् ।
तस्य तद्वर्द्धते नित्यं सिच्यमान इव द्रुमः ॥

सत्रमिति प्रतिदिनकर्त्तव्यतया अभयदक्षिणमभयमेव दक्षिणा यस्मिन् सत्रे ।

आपस्तम्बः ।

क्षेमकृद्राजा यस्य विषये ग्रामेऽरण्ये वा तस्करभयं न विद्यते ।

मनुः ।

विक्रोशन्त्यो यस्य राष्ट्राद्ध्रियन्ते दस्युभिः प्रजाः ।
सम्पश्यतः सभृत्यस्य मृतः स नहि जीवति ॥

ह्रियन्ते मुष्यन्ते । सम्पश्यत इत्यनादरे षष्ठी ।

तथा ।

अशासंस्तस्करान्यस्तु बलिं गृह्णाति पार्थिवः ।
तस्य प्रक्षुभ्यते राष्ट्रं स्वर्गाच्च परिहीयते ॥

परिहीयते राजेत्यन्वयः ।

हारीतः ।

पापास्तु यस्य राष्ट्राद्वै वर्द्धन्ते दस्यवः सदा ।
तत्पापमतिहर्द्ध* हि राज्ञो मूलं निकृन्तति ॥

इति श्रीविवादरत्नाकरे स्तेनतरङ्गः ।

---

* मतिवृद्धेति पाठान्तरम् ।

## अथ प्रकाशतस्करदण्डाः ।

तत्र व्यासः ।

तुलामानविशेषेण लेख्येन गणनेन च ।
अर्घस्य* वृद्धिह्रासेन मुष्णन्ति वणिजो नरान् ॥
तद्द्रव्यसदृशैरन्यैर्हीनमूल्यैर्विमिश्रणम् ।
कुर्वन्त्यौपाधिकायान्ये पण्यानां परिवर्त्तने ॥

याज्ञवल्क्यः ।

मानेन तुलया वापि यो योऽंशमष्टमं हरेत् ।
दण्डं स दाप्योद्विशतं वृद्धौ हानौ च कल्पितम् ॥

मानेन कपटप्रमाणेन† एवं तुलायामपि । वृद्धौ हानौ च कल्पितं अष्टमांशापेक्षया वृद्धौ हानौ वा अष्टमांशहरणोक्त-द्विशतानुसारेण कल्पितं दण्डं दाप्य इत्यर्थः ।

कात्यायनः ।

तुलामानप्रतिमान‡प्रतिरूपकलक्षितैः ।
परलक्षितैर्वापि प्राप्नुयात्पूर्व्वसाहसम् ॥

प्रतिमानं परिमाणमिति प्रसिद्धम्§ । तुलामानप्रतिमानैः प्रतिरूपकैराभासलक्षितैर्वा चरन्व्यवहरन्पूर्व्वसाहसं प्राप्नु-

---

* अर्घस्येति पाठान्तरम् ।

† कपटमानेनेति पाठान्तरम् ।

‡ प्रतीमानेत्यपि पाठः ।

§ प्रतीमानं पलिमानेति प्रसिद्धमिति पाठान्तरम् ।

यात्। एतच्चाष्टमांशाधिकहरणपक्षे, तेन न पूर्व्वयाज्ञवल्क्येन* विरोधः।

मनुः।

समैर्हि विषमं यस्तु चरेद्वा मूल्यतोऽपि वा।
स प्राप्नुयाद्दमं पूर्व्वं नरो मध्यममेव वा॥

समैः सममूल्यदातृभिः नानापुरुषैः सह उत्कृष्टापकृष्टविषमद्रव्यदानेन यो व्यवहरति असौ पूर्व्वसाहसं प्राप्नोति। समैर्वा द्रव्यैः क्रेतव्यैर्मूल्यतो विषमं चरन्योऽधिकमूल्यं गृह्लन्† मध्यमसाहसं प्राप्नोतीत्यर्थः। हलायुधस्तु विनिमयप्रवृत्तयोरेकतरस्यार्थित्वं ज्ञात्वा अल्पमूल्येन बहुमूल्यस्य विनिमयव्यवहारं विषमं यश्चरति, यो वा क्रेतुरर्थिताविशेषं ज्ञात्वा अल्पमूल्यं वस्तु बहुमूल्येन विक्रीणीते, स धनापेक्षया प्रथमं साहसं मध्यमं साहसं वा दण्ड्य इत्याह।

तथा।

अवीजविक्रयी यस्तु वीजोत्कर्षी तथैव च।
मर्य्यादाभेदकश्चैव विकृतं प्राप्नुयाद्वधम्॥

अवीजविक्रयी अवीजं वीजतया यो विक्रीणीते, वीजोत्कर्षी उप्तं वीजं बलेन योऽपहरति, मर्य्यादाभेदकः देशजातिकुलशास्त्रराजलोकस्थित्यतिक्रमकारी। विकृतं वधं कर्णादिच्छेदनरूपं घातम्।

* पूर्व्वोक्तेन याज्ञवल्क्येनेति पाठान्तरम्।

† गृह्णाति स मध्यमसाहसं प्राप्नोतीति तात्पर्य्यम्।

बृहस्पतिः।

प्रच्छन्नदोषव्यामिश्रं पुनः संस्कृतविक्रयी।
पण्यन्तु द्विगुणं दाप्यो वणिग्दण्डञ्च तत्समम्॥

प्रच्छन्नदोषो गोपितदोषः। व्यामिश्रमनभिमतद्रव्येण। पुनः संस्कृतं पुरातनमेव सम्भावनादिना* नवीकृतम्।

याज्ञवल्क्यः।

भेषजस्नेहलवणगन्धधान्यगुड़ादिषु।
पण्येषु हीनं चिपतः पणा दण्डस्तु† षोड़श॥

हीनमपद्रव्यम्, एतच्च विक्रेतव्ये प्रचेपमात्रेण बोद्धव्यम्। बृहस्पतिस्तु तादृशे विक्रीते सति द्विगुणपण्यदानं दण्डञ्च वदतीत्यविरोधः‡।

नारदो मनुश्च।

शुल्कस्थानं वणिक् प्राप्तः शुल्कं दद्याद्यथोदितम्।
न तद्व्यभिचरेद्राज्ञां वलिरेष प्रकीर्त्तितः॥
शुल्कस्थानं परिहरन्नकाले क्रयविक्रयी।
मिथ्यावादी च संख्याने दाप्योऽष्टगुणमत्ययम्॥

शुल्कः क्रयविक्रयादौ राजग्राह्यं, तत्स्थानं राजव्यवस्थापितं नदीनगरपर्व्वताद्यधिकरणं, तत् प्राप्तो वणिक् शुल्कं दद्यात्

* सम्भावनादिना पाकादिनेत्यर्थे इति बोध्यम्।

† दैयास्त्विति पाठान्तरम्।

‡ द्विगुणपण्यदान वदतीत्यविरोध इति पाठान्तरम्।

न तद्व्यभिचरेन्नातिक्रामेदुत्पथगमनेन*। शुल्कस्थानमित्यादि। यदि शुल्कस्थानं परिहरन्नकाले निशादौ क्रयविक्रयी भवति, संख्याने वस्तुनो मिथ्यावादी च भवति, तदा क्रीतविक्रीतवस्तुमूल्यादष्टगुणमत्ययं दण्डं दाप्यइत्यर्थः।

अत्रैव याज्ञवल्क्यः।

मिथ्या वदन् परीमाणं शुल्कस्थानादपक्रमन्।
दाप्यस्त्वष्टगुणं यश्च सव्याजक्रयविक्रयी॥

विष्णुः।

शुल्कस्थानमनाक्रामन् सर्व्वापहारमाप्नुयात्।

अनाक्रामन् परिहरन्। सर्व्वापहारम्, अयञ्च सर्व्वस्यापहारो† वारंवारशुल्कस्थानपरिहारे। याज्ञवल्कीय‡स्त्वष्टगुणदण्डोऽनभ्यासे परिहारस्येत्यविरोधः§।

शङ्खलिखितौ।

कूटतुलामानप्रतिमानव्यवहारेण¶ शारीरोऽङ्गच्छेदो वा। मानं प्रस्थादि। शारीरो मुण्डनादिरूपः। अङ्गच्छेदः कर्णादिच्छेदः‖। अर्थगौरवागौरवाभ्यां विकल्पस्थितिः।

---

* विपथगमनेनेति पाठान्तरम्।

† सर्व्वापहार इति पाठान्तरम्।

‡ याज्ञवल्कीक्त इति पाठान्तरम्।

§ अनभ्यासपरिहारे इत्यविरोध इति पाठान्तरम्।

¶ कूटतुलामानप्रतिमानव्यवहारे इति पाठान्तरम्।

‖ कर्णाद्यवयवच्छेद इति पाठान्तरम्।

याज्ञवल्क्यः।

तुलाशासनमानानां कूटकृन्नाणकस्य च।
एभिश्च व्यवहर्त्ता यः स दाप्यो दममुत्तमम्॥

तुला स्वर्णादितोलनदण्डः। शासनं राजनिबद्धचिह्नमुद्रा। नाणकः कार्षापणगतमानटङ्कादि*। एषां कूटकृत्। यश्च एतैः सकूटैः परकृतैरपि व्यवहरति तावुभावपि उत्तमसाहसं दण्ड्यौ।

तथा।

न कूटं कूटकं ब्रूते कूटं यश्चाप्यकूटकम्।
स नाणकपरीक्षी तु दाप्य उत्तमसाहसम्॥

इदमाद्यापराधे। तदतिरेके मुत्तमादन्यमर्हतीत्याहुः†।

दण्ड उत्तमसाहस इत्यनुवृत्तौ विष्णुः।

तुलानाणककूटकर्त्तृषु तदकूटवादिनश्च‡ द्रव्याणां प्रतिरूपविक्रायकस्य च सम्भूयवणिजां पण्यमनर्घेणाव-रुन्धतां प्रत्येकश्च विक्रीणताञ्च।

प्रतिरूपकञ्च कृतकमुक्तादि। सम्भूयवणिजामित्यादि, मिलिता वणिजामधिकमूल्यं पण्यमल्पमूल्येन क्रीणतामल्पमूल्यञ्च महा-र्घेण विक्रीणताञ्च एकैकस्योत्तमसाहसं दण्ड इत्यर्थः।

याज्ञवल्क्यः।

---

* कार्षापणमानटङ्कादीनीति पाठान्तरम्।

† उत्तमाद्धिकमप्यर्हतीति च पाठान्तरम्।

‡ तदकूटवादिनश्चेति पाठान्तरम्।

सम्भूय कुर्व्वतामर्घं साबाधं* कारुशिल्पिनाम्।
अर्घस्य हानिं वृद्धिं च साहसं† दण्ड उच्यते॥

कारवोऽत्र प्रतिमाघटकादयः, शिल्पिनश्चित्रकरादयः। तेषां साबाधमतिपीड़ाकरमर्घं ये वणिजः सम्भूय कुर्व्वन्ति, ये वा राजस्थापितस्य मूल्यस्य ह्रासं वृद्धिं च सम्भूय कुर्व्वते‡ तेषां सहस्रपणात्मको दण्ड इत्यर्थः।

तथा।

'सम्भूयवणिजां पण्यमनर्घेणावरुन्धताम्।
विक्रीणतां वाभिहितो दण्ड उत्तमसाहसः§॥

ये वणिजो मिलित्वा स्थानान्तरागतं पण्यमनुचितार्घेण ह्रापयित्वा¶ धारयन्ति, ये वा अनर्घेण बहुना मूल्येनाल्पमूल्यं विक्रीणते, तेषामप्युत्तमसाहस एव दण्ड इत्यर्थः।

मनुः।

राज्ञः प्रख्यात||भाण्डानि प्रतिषिद्धानि यानि च।
तानि निर्हरतो लोभात्सर्व्वहारं हरेन्नृपः॥

यान्यतिशयेन राजोपभोगयोग्यानि प्रसिद्धानि करिवरादीनि,

---

* सबाधमिति पाठान्तरम्।

† साहस इति पाठान्तरम्।

‡ कुर्व्वन्तीति पाठान्तरम्।

§ उत्तमसाहसमिति पाठान्तरम्।

¶ ह्रापयित्वा विक्रेतुर्हानिं कारयित्वेत्यर्थः।

|| राजप्रख्यातेति पाठान्तरम्।

यानि च राज्ञा प्रतिषिद्धानि तद्देशदुर्लभानि धान्यादीनि, नैतान्यन्यत्र देशे विक्रेतव्यानीति, तानि लोभादन्यत्र देशे विक्रीणानस्य वणिजो राजा सर्व्वहारं कुर्य्यात्, यत्किञ्चित् भाण्डेनार्जितं तत्सर्व्वं हरेदित्यर्थः।

तत्र याज्ञवल्क्यः।

व्यासिद्धं राजयोग्यञ्च विक्रीतं राजगामि तत्।

शारीरोऽङ्गच्छेदो वा दण्ड इत्यनुवृत्तौ शङ्खलिखितौ।

प्रतिषिद्धभाण्डनिर्हारे।

निर्हारे विक्रये। नाशितभाण्डमूल्यो यदि, तदैवमित्यविरोधः*। एवञ्च राज्ञा निषिद्धमपि राजयोग्यमपि विक्रीय यदि मूल्यदानाशक्त एव कश्चित्स्यात्, तदा तत्राप्ययं दण्डो न्यायतोऽस्यात्†।

मनुः।

आगमं निर्गमं स्थानं तथा वृद्धिक्षयावुभौ।
विचार्य्य सर्व्वपण्यानां कारयेत्क्रयविक्रयौ॥
पञ्चरात्रे पञ्चरात्रे पक्षे पक्षेऽथवा गते।
कुर्व्वीत चैषां प्रत्यक्षमर्घसंस्थापनं नृपः॥
तुलामानं प्रतीमानं सर्व्वं तस्यात्सुलक्षितम्।
षट्सु षट्सु च मासेषु पुनरेव परीक्षयेत्॥

आगमं देशान्तरीयस्य विक्रय्यस्य दूरदुर्गमासन्नसुगमदेशादेश-

---

* तदैवमित्यनुरोध इति पाठान्तरम्।

† तत्राप्येष दण्डो न्यायसाम्यादिति पाठान्तरम्।

वर्त्तिनः* आगमनम्। निर्गमं निर्गमणं स्वदेशीयपण्यस्य तादृग् देशे गमनम्। स्थानं चिरमचिरं वा कालमेतस्मिन् क्रीतं द्रव्यं भक्ताद्विव्ययो वृत्तद्रव्यवस्थानम्। तथा वृद्धिक्षयौ एतावान् लाभ उपचयो वा भवति इति विचार्य्य परामृश्य यथा क्रयकर्त्तॄणामनुचिते लाभहानी न भवतः, तथा राजा क्रयविक्रयौ कारयेत। चिरेण निष्कामति यद्द्रव्यं तत्प्रतिपक्षम्, अन्यच पाश्चरात्रिकमिति शेषम्। प्रतिमानं सुवर्णमाननियमार्थं राजचिह्नाङ्कितं शिलाशकलादि तद्बोद्धव्यम्।

शङ्खलिखितौ।

तुलामानप्रतीमानव्यवहारार्थसंस्थापनं देशद्रव्यानुरूपं प्रत्ययितपुरुषाधिष्ठितम्।

राज्ञा कार्य्यमिति शेषः†।

याज्ञवल्क्यः।

पण्यस्योपरि संस्थाप्य व्ययं पण्यसमुद्भवम्।
अर्घोऽनुग्रहकृत्कार्य्यः क्रेतुर्विक्रेतुरेव च॥
राजनि स्थाप्यते योऽर्घः प्रत्यहं तेन विक्रयः।
क्रयो वा निस्रवस्तस्माद्वणिजां लाभकृत्स्मृतः॥
स्वदेशपण्ये तु शतं वणिग्गृह्णीत पञ्चकम्।
दशकं पारदेश्ये तु यः सद्यः क्रयविक्रयी॥

पण्यस्योपरि पण्यसमुद्भवं व्ययं संस्थाप्य क्रेतुर्विक्रेतुर्वा पनु

* ऽर्त्तिन इति पाठान्तरम्।

† राज्ञा स्थापितव्य शेष इति पाठान्तरम्।

ग्रहक्रयोऽर्घः स कार्य्य इति प्रथमश्लोकार्थः। राजनि राजविषये राज्ञे वा योऽर्घः स्थापितः तेनैव क्रयविक्रयौ, तस्मात्क्रयादिक्रयाद्वा यो निश्चयो लाभः स एव तेषां लाभकृत् उपचयकृत् नान्यो दण्डापादकत्वादिति द्वितीयश्लोकार्थः। यः स्वदेशोद्भवमेव पण्य तस्मिन्नेव दिने दिने ग्रामान्तरादानीय विक्रीणीते, स पणशतमूल्ये पणपञ्चकं गृह्णीयात्। यस्तु परदेशादानीयानयनदिन एव विक्रीणीते, स पणशतमूल्ये पणदशकं लाभं गृह्णीयान्न ततोऽधिकं, विलम्बेन विक्रीणाने नायं नियम इति तृतीयवाक्यार्थः।

राज्ञ इत्यनुवृत्तौ गौतमः।

पण्यं वणिग्भिरर्घापचये न देयम्।

अर्घापचये मूल्यापचये। तेन मूल्यापचये पण्यमप्रयच्छन्नपि वणिक् न दण्ड्य इति तात्पर्य्यम्।

वशिष्ठः।

अधिष्ठानान्निर्हारः सार्थानामर्घमानमानमूल्यमात्रं
नैर्हारिकं स्यान्महामहयोस्त्वनत्ययः स्यादभयञ्च।

अधिष्ठानात्पत्तनादेर्यो निर्हारः निष्कृष्य हरणम्*। सार्थानां पण्यपूर्णानां† हरणपदेऽर्घमान मूल्यमात्रं मानं भाण्डं तन्मूल्यं यत्तेन मात्रा परिमाणं यस्येति व्यधिकरणेऽपि बहुव्रीहिः‡।

---

* इत्थमेव विक्रय्य हरणमिति पाठान्तरम्।

† पण्यवर्गाणामिति पाठान्तरम्।

‡ व्यधिकरणे हि बहुव्रीहिरिति व्यधिकरणबहुव्रीहिरिति च पाठान्तरम्।

तेन भाण्डस्य पत्तनादेर्निर्हारपक्षे तन्मूल्यानुसारेण राजशुल्कं* देयम्। नैर्हारिकं निर्हारसम्बन्धि। महामहयोर्महोत्सवयोः राज्ञः पुत्रजन्मादीन्द्रमहादिरूपयोस्त्रियमपि निर्हारं कुर्व्वतोऽनत्ययोऽदण्डः स्यादभयमताड़नञ्चेत्यर्थः।

विष्णुः।

स्वदेशपण्याच्छुल्कं दशममादद्यात्परदेशपण्याच विंशतितमम्।

स्वदेशपण्ये वणिज उत्पन्ने लाभे दशमांशं राजा गृह्णीयात्। परदेशपण्ये च उत्पन्ने लाभे विंशतितममंशं गृह्णीयादित्यर्थः।

मनुः।

शुल्कस्थानेषु कुशलाः सर्व्वपण्यविचक्षणाः†।
कुर्य्युरर्घं यथापण्यं ततो विंशं नृपो हरेत्॥

एतच्च‡ परदेशपण्याभिप्रायं विष्णुनुसारात्।

बाध्य इत्यनुवृत्तौ गौतमः।

विंशतिभागः शुल्कः पण्ये मूलपुष्पौषधमधुमांसतृणेन्धनानां षाष्टं तद्रक्षणधर्म्मित्वात्तेषु नित्ययुक्तः स्यात्।

षाष्टं षष्टितमं भागम्। तेषु मूलादिषु रक्षणधर्म्मित्वाद्रक्षणे आगमधर्म्मित्वान्नित्ययुक्तः स्यान्नित्यावहितः स्यादित्यर्थः।

---

* राज्ञे शुल्कमिति पाठान्तरम्।

† सर्व्वे पण्यविचक्षणा इति पाठान्तरम्।

‡ एतदिति पाठान्तरम्।

अत्र* विंशतिभागः परदेशागतं† द्रव्यमपेक्ष्य, वस्तुविशेषापेक्षया तु षाष्टिभागो यथाश्रुत्यैव सङ्कोचाभावात्‡ ।

बौधायनः ।

सामुद्रः शुल्को वरं रूपमुद्धृत्य शतपणमूल्ये दशपण-
मन्येषामपि सारानुरूपेणानुपहत्य धर्म्यं प्रकल्पयेत् ।

सामुद्रः समुद्रागतपण्यगोचरः शुल्कः, तत्र पण्येषु वरं रूपं मुक्ताफलादि उद्धृत्य गृहीत्वा शतपणमूल्ये दशपणं शुल्कं गृह्णीयात् । अन्येषामपि लाभभूयस्त्वप्रयोजकदेशान्तरागतानां सारानुरूपेण श्रेष्ठं वस्तूद्धृत्य गृहीत्वा धर्म्यं धर्मादनपेतं शुल्कं प्रकल्पयेद्गृह्णीयादित्यर्थः । अनुपहत्येत्यनेनैव वणिजो द्रव्योपघातो न कार्य्य इत्युक्तम् । हलायुधस्तु उपहत्येति पठित्वा गृहीत्वेति व्याख्यातवान्, फलतो न विशेषः ।

वशिष्ठः शुल्के चापि मानवं श्लोकमुदाहरति ।

न भिन्नकार्षापणमस्ति शुल्कं
न शिल्पवृत्तौ न शिशौ न दूते ।
न भैक्षलब्धे न हृतावशेषे
न श्रोत्रिये प्रव्रजिते न यज्ञे ॥

भिन्नो न्यूनः कार्षापणो§ मूल्यं यस्य तद्भिन्नकार्षापणं पण्यं,

---

* चत्रेति पाठान्तरम् ।

† परदेशादागतमिति पाठान्तरम् ।

‡ सङ्कोचकाभावादिति पाठान्तरम् ।

§ कार्षापणमेवेति पाठान्तरम् ।

शुल्कोऽपि भिन्नकार्षापण:* तेन कार्षापणादल्पमूल्यस्य मूल्यं† तत्र वस्तुनि शुल्को न ग्राह्य इत्यर्थः। न शिल्पवृत्तौ न शिल्पिना शिल्पिलाभासवित्ते‡ शिशौ विक्रय्य गवादि मल्लादौ,§ दूते दूतवस्तुनि, कृतावशेषे वणिजः¶ शेषवस्तुनि। यज्ञे यज्ञार्थमानीयमाने द्रव्ये। हलायुधस्तु शिशुशिल्पिदूतान् बुद्धिस्थीकृत्य एवं न शिशुप्रभृतिभ्यः वणिग्भ्यः क्वचिदपि शुल्कद्रव्यं ग्राह्यमित्यत्र वाक्ये प्राह।

बृहस्पतिः।

अज्ञातौषधमन्त्रस्तु यश्च व्याधेरतत्त्ववित्।
रोगिभ्योऽर्थं समादत्ते स दण्ड्यश्चौरवद्भिषक्॥

याज्ञवल्क्यः।

भिषङ्मिथ्याचरन्दाप्यस्तिर्य्यक्षु प्रथमं दमम्।
मानुषे‖ मध्यमं राजमानुषेषूत्तमं तथा॥

विष्णुः।

उत्तमं साहसं दण्ड्यो भिषङ्मिथ्या चरन्नुत्तमेषु पुरुषेषु मध्यमेषु मध्यमं तिर्य्यक्षु प्रथमम्।

---

* तद्भिन्न' शुल्कोऽपि भिन्नकार्षापण इति, तद्भिन्नः शुल्को भिन्नकार्षापण इति च पाठान्तरम्।

† यत्कार्षापणादल्पमूल्यं वस्तु इति पाठान्तरम्।

‡ प्राप्ते द्रव्ये इति पाठान्तरम्।

§ गवादिरत्नादाविति पाठान्तरम्।

¶ क्रयितवणिज इति पाठान्तरम्।

‖ मध्यमे इति पाठान्तरम्।

अथ व्यासः।

अनिच्छन्तमभूमिज्ञं संयोज्य व्यसने नरम्।
अपकर्षन्ति तद्द्रव्यं वेश्याकितवशिल्पिनः॥

अनिच्छन्तं प्रवृत्त्यनुन्मुखम्*। अभूमिज्ञं कार्याकार्यज्ञानहीनम्। एतेनैषां विश्वव्यवच्चकत्वमुक्तम्।

एतानादाय निर्व्वासनमाह† बृहस्पतिः।

अन्यायवादिनः सभ्यास्तथैवोत्कोचजीविनः।
विश्वव्यवच्चकाश्चैव निर्व्वास्याः सर्व्व एव ते॥

व्यासः।

न्यायस्थाने ह्यधिकृताः‡ गृहीत्वार्थं विनिर्णयम्।
कुर्व्वन्त्युत्कोचकास्ते तु राजद्रव्यविनाशकाः॥

विनिर्णयं विरुद्धनिर्णयम्।

याज्ञवल्क्यः।

उत्कोचजीविनो द्रव्यहीनान्कृत्वा प्रवासयेत्।

नारदः।

कूटाक्षदेविनः पापान्निर्हरेद्द्यूतमण्डलात्।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः॥

बृहस्पतिः।

ग्लहः प्रकाशः कर्त्तव्यो निर्व्वास्याः कूटदेविनः।

---

* अप्रवृत्त्युन्मुखमिति पाठान्तरम्।

† निर्व्वासनमादायेति पाठान्तरम्।

‡ न्यायस्थानमुपागम्येति पाठान्तरम्।

ग्लहो द्यूते यः पणः क्रियते।

तथा।

कूटाक्षदेविनः क्षुद्रा राजद्रव्यहराश्च ये*।
गणानां वञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः॥

याज्ञवल्क्यः।

राज्ञा सचिह्नं निर्व्वास्याः कूटाक्षोपधिदेविनः†।

विष्णुः।

कूटाक्षदेविनां करच्छेद उपधिदेविनां सन्दंशच्छेदः। पूर्व्ववाक्ये चिह्नमपि यथायथं करसन्दंशच्छेदात्मकमेव विवक्षितमेकमूलत्वानुरोधात्‡। सन्दंशच्छेदश्च तर्ज्जन्यङ्गुष्ठच्छेदः। एतच्चापराधातिशये द्रष्टव्यम्।

व्यासः।

स्त्रीपुंसौ वञ्चयन्तीह मङ्गलादेशवृत्तयः।
गृह्णन्ति छद्मना चार्थमनार्य्याः§ आर्य्यलिङ्गिनः॥

बृहस्पतिः।

ज्योतिर्ज्ञानं तथोत्पातमविदित्वा तु ये नृणाम्।
श्रावयन्त्यर्थलोभेन विनेयास्तेऽपि यत्नतः॥
दण्डाजिनादिना युक्तमात्मानं दर्शयन्ति ये।

---

* राजद्रव्यापहारका इति पाठान्तरम्।

† कूटाक्षपरिदेविन इति पाठान्तरम्।

‡ एकवाक्यत्वानुरोधादिति पाठान्तरम्।

§ गृह्णन्ति च धर्मं ये च धनार्थ्यो इति पाठान्तरम्।

हिंसन्ति छद्मना नृणां वध्यास्ते राजपूरुषैः ॥

अथ मनुः।

सर्व्वकण्टकपापिष्ठं हेमकारन्तु पार्थिवः।

प्रवर्त्तमानमन्याये छेदयेल्लवशः क्षुरैः ॥

कण्टकः प्रकाशतस्करः। अभ्यासविषयमेतद्दण्डस्यातिमहत्त्वादित्याहुः।

कात्यायनः।

कूटस्वर्णव्यवहारी विमांसस्य च विक्रयी।

त्र्यङ्गहीनाश्च कर्त्तव्या दाप्यास्तूत्तमसाहसम् ॥

त्रिभिर्नासादन्तकरैः। कूटस्वर्णव्यवहारी रसवेधाद्यापादितवर्णोत्कर्षादिना सुवर्णव्यवहारी।

तथा।

मृचर्म्ममणिसूत्रायःकाष्ठवल्कलवाससाम्।

अजातौ जातिकरणे विज्ञेयोऽष्टगुणो दमः ॥

अजातौ बहुमूल्यजातीयत्वानाधारे* जातिकरणे बहुमूल्यकजातीयत्वभ्रमहेतुसादृश्यकरणे। तेन योऽबहुमूल्यं बहुमूल्यद्रव्यभ्रमविषयं कृत्वा बहुना मूल्येन विक्रीणीते तस्य तद्विक्रयलभ्यादष्टगुणो दमः कार्य्य इति वाक्यार्थः। तत्र मृदि कृष्णायां कस्तूरिकामोदसञ्चारेण कस्तूरिकेति। चर्म्मणि वर्णोत्कर्षापादनेन व्याघ्रचर्म्मेति। स्फटिके लौहित्याचरणेन पद्मराग इति।

---

* बहुमूल्यजातीयानां समानजातिकरणे इति पाठान्तरम्।

कार्पासिके सूत्रे गुणोत्कर्षाधानेन पट्टसूत्रमिति। कांस्यायसे वर्णोत्कर्षाधानेन रजतमिति। विल्वकाष्ठे चन्दनामोदसञ्चारेण चन्दनमिति। कक्कोले लगाख्यचन्दनमिति*। कार्पासिके वाससि गुणाधानेन कौशेयमिति।

तथा।

समुद्गपरिवर्त्तञ्च सारभाण्डञ्च कृत्रिमम्।
आधानं विक्रयं वापि नयतो दण्डकल्पना॥
भिन्ने पणे तु पञ्चाशत्पणे तु शतमुच्यते।
द्विगुणे द्विशतो दण्डो मूल्यवृद्धौ च वृद्धिमान्॥

समुद्गं सम्पुटं, कृत्वेति पूरणीयम्। जनसुवर्णादि पूर्णसम्पुटपरिवर्त्तं† कृत्वा आधानं धारणं नयतः, सारभाण्डञ्च कस्तूरिकादि कृत्रिमं कृत्वा विक्रयं नयतः, दण्डकल्पना कार्य्या। तामाह भिन्ने पणे त्विति, भिन्नो न्यूनः, तेन पणन्यूनमूल्ये वस्तुनि तथा कुर्व्वतः पञ्चाशत्पणाः, पणमूल्ये शतं पणाः, द्विपणमूल्ये पणशतद्वयम्। इतोऽधिकमूल्यादौ त्वनेनैव क्रमेण दण्डवृद्धिरित्यर्थः।

वृहस्पतिः।

अल्पमूल्यन्तु संस्कृत्य नयन्ति बहुमूल्यताम्।
स्त्रीबालकान्वञ्चयन्ति दण्ड्या अर्थानुसारतः॥
हेममुक्ताप्रवालाद्यं कुर्व्वते कृत्रिमन्तु ये।

---

* दुर्गाख्यचन्दनमिति पाठान्तरम्।

† जनपसुद्रादिपूर्णसम्पुटपरिवर्त्तमिति पाठान्तरम्।

क्रीते मूल्यं प्रदाप्यास्ति राज्ञे च द्विगुणं* दमम् ॥
द्विगुणं विक्रीततादृग्द्रव्यमूल्यापेचयाए† ।

नारदः ।

लोहानामपि सर्व्वेषां हेतुरग्नि. क्रियाविधौ ।
चयः संक्रियमाणानां तेषां दृष्टोऽग्निसङ्गमात् ॥
सुवर्णे तु चयो नास्ति रजते द्विपलं शतम् ।
शतमष्टपलं ज्ञेयं चयस्तु त्रपुसीसयोः ॥
ताम्रे पञ्चपलं द्द्याद्विकारा ये तु तन्मयाः ।
तद्धातूनामनेकत्वादयसोऽनियमः चये ॥

क्रियाविधौ घटनकर्म्मणि, लोहानां धातूनां, सुवर्णशब्दोऽत्र शुद्धपरः अन्याद्दशे तत्रापि चयात् । रजते द्विपलं शतं, पलशते ध्मायमाने पलद्वयं चयो भवति, एवमुत्तरत्रापि । तन्मयास्ताम्रमयाः कांस्यादयः, तद्धातूनामयोहेतुभूतानां पाषाणमृत्तिकादीनामनेकत्वाद्वाहुल्यादनियम.‡ चये न नियमः कर्त्तुं शक्यते, अय.शब्दोऽपि शुद्धायोव्यतिरिक्तायःपरः। शुद्धे तु नियमोऽयतएव उक्तः। उक्तचयादप्यधिकचये सुवर्णकारादयो दण्ड्याः, तद्दाप्यायेति परिगणनफलम् ।

याज्ञवल्क्यः ।

अग्नौ सुवर्णमचीणं द्विपलं रजते शतम् ।

---

* तद्द्विगुणमिति पाठान्तरम् ।

† विक्रीततावद्द्रव्यमूल्यापेचयेति पाठान्तरम् ।

‡ नानात्वादनियम इति पाठान्तरम् ।

अष्टौ तु त्रपुसीसेषु ताम्रे पञ्च दशायसि ॥

दशायसि शुद्धे ।

मनुः ।

तन्तुवायो दशपलं दद्यादेकपलाधिकम् ।

अतोऽन्यथा वर्त्तमानो दाप्यो द्वादशकं दमम् ॥

तन्तुवायः पटादिनिर्म्माता, स दशसूत्रपलानि गृहीत्वा वयन* वस्त्रमेकादशपलं तोलयित्वा दद्यात् । अतोऽन्यथा द्वादशपलं† गृहीत्वा दशपलपरिमितमेव वस्त्रं प्रयच्छन्दण्डं दद्यात् । स्थूलसूत्रविषयमेतदग्रिमानुसारात् ।

याज्ञवल्क्यः ।

शते दशपला वृद्धिरौर्णे कार्पासिके तथा ।

मध्ये पञ्चपला तौले‡ सूक्ष्मे तु द्विपला§ स्मृता ॥

स्थूलमध्यमयोर्विशेषोपादानेन शते दशपला वृद्धिरित्यत्र तदतिरिक्तं स्थूलं सूत्रं लगति ।

नारदः ।

तान्तवस्य च संस्कारे क्षयवृद्धी उदाहृते ।

सूत्र कार्पासिकौर्णानां वृद्धिर्दशपला शते ॥

---

* वयनवस्त्रमिति पाठःकिन्तु पुस्तकेषु दृश्यते, परं वयन् वस्त्रमिति पाठो युज्यते इति ध्येयम् ।

† किन्तु पुस्तकेषु चयमेव पाठो दृश्यते, परं दशपलमिति साधुतया प्रतिभासते, अथवा दशपलपरिमितमेवेति पदद्वयस्य वैयर्थ्यापत्तिरिति ध्येयम् ।

‡ दृष्टे इति पाठान्तरम् ।

§ त्रिपलेति पाठान्तरम् ।

स्थूलसूत्रवतामेषां मध्यानां पञ्चविंशतिः।
त्रिपलन्तु सुसूक्ष्माणामतः क्षय उदाहृतः॥

अतोऽन्यस्य रोमबद्धादेः। तथाच। त्रिंशांशो रोमबद्धस्य क्षयः कर्म्मकृतस्य च। रोमबद्धः कम्बलादिः। कर्म्मकृतः कृतकर्म्मनिष्पन्न एव कृतचित्रादिः।

याज्ञवल्क्यः।

कार्म्मिके* रोमबद्धे च त्रिंशद्भागः क्षयो मतः।
न क्षयो न च वृद्धिः स्यात्कौशेये वल्कलेषु च॥

मनुः।

शाल्मले फलके श्लक्ष्णे निर्णिज्यान्नेजकः शनैः।
न च वासांसि वासोभिर्निर्हरेन्न च वासयेत्†॥

शाल्मले शाल्मलिदारुमये, श्लक्ष्णे मसृणे, निर्णिज्यात्प्रक्षालयेत्, नेजको रजकः। न च वासांसि वासोभिर्निर्हरेत् वस्त्रे बद्ध्वा वस्त्रान्तरं न निर्णेजनस्थानं नयेत्। न च वासयेत् न परवस्त्रेण परविनियोगं कारयेत्। एवञ्च वैपरीत्याचरणे दण्डभाग्भवतीति तात्पर्य्यम्।

याज्ञवल्क्यः।

*पणानस्त्रीन् पणान्दाप्यो नेजकस्तु परांशुकम्।
विक्रयावक्रयाधानयाचितेषु पणान्दश॥

---

* रोमके इति पाठान्तरम्।

† न विवासयेदिति पाठान्तरम्।

अवक्रयोऽत्र भाटकम्। आधानं बन्धकम्। याचितं सुहृदे याचितस्य दानम्।

तथा।

देशं कालञ्च भोगञ्च ज्ञात्वा नष्टे बलाबलम्।
द्रव्याणां कुशला ब्रूयुर्यत्तद्दाप्यमसंशयम्॥

नारदः।

मूल्याष्टभागो हीयेत सकृद्धौतस्य वाससः।
द्विः पादस्त्रिस्त्रिभागस्तु चतुःकृत्वोऽर्द्धमेव तु॥
अर्द्धक्षयात्तु परतः पादांशापचयः क्रमात्।
यावत् क्षीणदशं वस्त्रं जीर्णस्यानियमः क्षये॥

सकृद्धौतस्य वाससः अष्टपणमूल्यवाससः मूल्याष्टमभागमपनीय* सप्तपणान्रजको दाप्यः। द्विःकृत्वो धौतस्य पादश्चतुर्थो भागः, त्रिःकृत्वो धौतस्य तृतीयो भागः, चतुःकृत्वो धौतस्यार्द्धम्। अर्द्धक्षयात्तु परतः यावत् क्षीणदशं वस्त्रं, तावत् क्रमेण पादस्यांशस्यापचयः†। जीर्णे त्वनियमः, तत्र मध्यस्थैरुक्तानुसारेणोहः कर्त्तव्य इत्यर्थः।

वृहस्पतिः।

मध्यस्था वञ्चयन्त्येकं स्नेहलोभादिना यदा।
साक्षिणश्चान्यथा ब्रूयुर्दाप्यास्ते द्विगुणं दमम्॥

---

* मूल्यादष्टमभागमपनीयेति पाठान्तरम्।

† पादस्यपादांशस्यापचय इति पाठान्तरम्।

तथा ।

मन्त्रौषधिबलाकिञ्चियावन्ति वञ्चयन्ति यैः* ।

मूलकर्म्म च कुर्व्वन्ति निर्वास्यास्ते महीभुजा ॥

यावन्ति वञ्चयन्ति तद्विगुणं† मूलकर्म्म वशीकरणमन्त्र ।

मनुः ।

कितवान् कुशीलवान् कैरान् पाषण्डस्थांश्च मानवान् ।

विकर्म्मस्थान् शौण्डिकांश्च चिप्रं निर्वासयेत्पुरात् ॥

एते राष्ट्रे वर्त्तमाना राज्ञः प्रच्छन्नतस्कराः ।

विकर्म्मक्रियया नित्यं बाधन्ते भद्रिकाः प्रजाः ।

कितवा वञ्चकाः द्यूतकाराः । कुशीलवाः स्वकौशलबलेनानिच्छतोऽपि पुरुषान्वै वञ्चयन्ति ते मताः । कैराः परस्त्रीपुरुषसङ्केतकारिणः । पाषण्डस्थाः चपणकादिपाषण्डाश्रिताः । विकर्म्मस्था अत्यन्तविरुद्धकर्म्मशीलाः । शौण्डिका अत्यन्तमद्यपानप्रसक्ताः । प्रच्छन्नतस्करास्तत्तुल्याः ।

व्यासः ।

नैगमाद्या भूरिधना दण्ड्या दोषानुरूपतः ।

यथा ते नातिवर्त्तन्ते तिष्ठन्ति समये यथा ॥

---

* सभ्यान्निं दर्शयन्ति ये इति पाठान्तरम् ।

† दाप्या इति पूर्व्वेण योजनीयम् ।

मनुः ।

उपधाभिश्च यः* कश्चित्परद्रव्यं हरेन्नरः ।
ससहायः स हन्तव्यः प्रकाशं विविधैर्वधैः ।

इति महासन्धिविग्रहिक मन्त्रिवर श्रीवीरेश्वरात्मज महासन्धिविग्रहिक
ठक्कुर श्रीचण्डेश्वरविरचिते विवादरत्नाकरे
प्रकाशतस्करदण्डतरङ्गः ।

---

## अथाप्रकाशतस्करदण्डाः ।

तत्र मनुः ।

सन्धिं छित्वा तु ये चौर्य्यं रात्रौ कुर्व्वन्ति तस्कराः ।
तेषां छित्त्वा नृपो हस्तौ तीक्ष्णे शूले* निवेशयेत् ॥

तानिति विभक्तिव्यत्ययेनानुषङ्गः ।

व्यासः ।

सन्धिच्छेत्तानेकविधं धनं प्राप्नोति वै गृहात् ।
प्रदाप्यः स्वामिने सर्व्वं हृतं शूले निवेशयेत् ॥

अत्रापि सन्धिच्छेत्तारमिति तथैव ।

---

* उपधाभिः स्त्रियमिति पाठान्तरम् ।

---

* तीक्ष्णशूले इति पाठान्तरम् ।

बृहस्पतिः।

सन्धिच्छिदो हृतं त्याज्याः शूलमारोहयेत्ततः।

तथा पान्थमुषो वृक्षे गले बद्धावलम्बयेत्॥

अत्रापि तथैवान्वयः।

नारदकात्यायनौ*।

स्वदेशघातिनो ये स्युस्तथा मार्गनिरोधकाः।

तेषां सर्व्वस्वमादाय राजा शूले निवेशयेत्॥

यस्य राज्ञो देशे चौरा वसन्ति, तद्राजदेश. तेषां चौराणां स्वदेशः, तद्घातिनः स्वदेशघातिनः, एतेन परदेशघातिभिः† चौरैः क्रियमाणे तेषां सर्व्वस्वग्रहण न कर्त्तव्यं तद्राजानुकूलत्वात्, परेण तु करणीयमेव सामर्थ्ये सतीति भावः।

अत्र मनु।

पुरुषाणां कुलीनानां नारीणाञ्च विशेषतः।

मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति॥

कुलीनानां सत्कुलजानां, मुख्यानां रत्नानां मरकतादीनाम्।

बृहस्पतिः।

मनुष्यहारिणो राज्ञा दग्धव्यास्तु कटाग्निना।

कटेन वेष्टयित्वा तत्प्रभवेणाग्निना दाह्या इत्यर्थः।

व्यासः।

स्त्रीहर्त्ता लौहशयने दग्धव्यो वै कटाग्निना।

---

* तथा पान्थचौरे विशेषयतो नारदकात्यायनाविति पाठान्तरम्।

† परदेशघातने इति पाठान्तरम्।

नरहर्त्ता हस्तपादौ छित्त्वा स्थाप्यश्चतुष्पथे ॥

पुरुषं हरतः प्रोक्तो* दण्ड उत्तमसाहसः ।

सर्व्वस्वं हरतो नारीं कन्यान्तु हरतो वधः ॥

अत्र चैकवस्तुहरणे परस्परविरुद्धशारीरार्थदण्डानां हारकोत्कृष्टापकृष्टजातीयत्वधनवत्त्वाधनवत्त्वकार्य्योत्कर्षापकर्षैर्व्यवस्था कार्य्या ।

तथा ।

वाजिवारणबालानां चाददीत बृहस्पतिः ।

सर्व्वस्वमित्यनुषङ्गः, हरणे इत्यपि पूरणीयम् ।

शङ्खलिखितौ ।

राजपुत्रापहारेऽष्टसहस्रं शारीरो वा दण्डः तत्कुलीनेष्वर्द्धं स्त्रीपुरुषयोश्च ।

अष्टसहस्रमष्टाधिकसहस्रं तच्च कार्षापणानाम् । तत्कुलीनेषु राजकुलीनेषु राजपुत्रव्यतिरिक्तेष्वर्द्धम् अष्टाधिकसहस्रार्द्धं, स्त्रीपुरुषयोश्च राजकुलीनयोरर्द्धम् अष्टाधिकसहस्रार्द्धं, शारीरो वेति विकल्पे धनवत्त्वाधनवत्त्वाभ्यां व्यवस्था ।

तथा ।

हस्त्यश्वरथगोहयानेषु राजपुत्रापहारवद्दण्डः ।

अत्र व्यासेन वाजिवारणहरणे सर्व्वस्वग्रहणमुक्तमनेन त्वष्टसहस्रमुक्तमिति विरोधो वाजिवारणगौरवागौरवाभ्यां परिहार्य्यः ।

---

* पुरुषं हरतो हस्ताविति पाठान्तरम् ।

तथा।

अजाविकेष्वर्द्धतयोदशपणा नकुलविड़ालापहरणे कार्षापणाः* ।

मनुः।

असन्धितानां सन्धाता सन्धितानां विमोचकः† ।
दासाश्वरथहर्त्ता च प्राप्तः स्याच्चौरकिल्बिषम् ॥

सन्धाता हरणहेतुबन्धनकारी, मोचकोऽपि हरणहेतुमोचणकारी विवक्षितः। चौरकिल्बिषं चौरदण्डं शारीरमार्थं वा‡ ।

नारदः।

गोषु ब्राह्मणसंस्थासु क्षुरायाश्छेदनं§ भवेत्।
दासीषु हरतो मध्यस्तथा पादस्य छेदनम् ॥

ब्राह्मणसंस्थासु ब्राह्मणस्वामिकासु। क्षुरा पार्ष्णिरुपरिभागः।

मनुः।

गोषु ब्राह्मणसंस्थासु क्षुरिकायाश्च भेदने।
पशूनाञ्चैव हरणे सद्यः कार्य्योऽर्द्धपादिकः ॥
महापशूनां हरणे शस्त्राणामौषधस्य च।
कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत् ॥

---

* त्रय कार्षापणा इति पाठान्तरम्।

† विमोचक इति पाठान्तरम्।

‡ शारीरमार्थञ्चेति पाठान्तरम्।

§ क्षुरिकाच्छेदनमिति पाठान्तरम्।

स्फुरिका बन्ध्या*, भेदनमिह वाहनार्थं नासाभेदनम्। पशवश्चात्राविविडालनकुलव्यतिरिक्तक्षुद्रपशवः†। महापशूनां हस्त्यादीनां, कालं गृहीपभोगार्थोपयोगसमयम्। कार्य्यमुपभोगस्य भूयस्त्वमल्पत्वञ्च। दण्डं बहुतरमल्पञ्च।

याज्ञवल्क्यः।

वन्दिग्राहांस्तथा वाजिकुञ्जराणाञ्च हारिणः।
प्रसह्य घातिनश्चैव शूलमारोपयेन्नरान्॥

मनुः।

कोष्ठागारायुधागारदेवतागारभेदिनः।
हस्त्यश्वरथहर्त्तृंश्च हन्यादेवाविचारयन्॥

कोष्ठागारं धान्याद्यागारम्। अविचारयन् तथाविधकर्मणि‡ निश्चिते अविलम्बमानः।

विष्णुः।

गोऽश्वोष्ट्रगजापहार्य्येककरपादिकः कार्य्यः, अजाद्यपहार्य्येककरश्च।

अजाद्यपहार्य्येककरः कार्य्य इत्यन्वयः। अत्र पूर्व्वं व्यासेनाजाविहरणे अर्द्धत्रयोदशपणा इत्यभिधानादनेनाजाविहरणे एककरत्वस्योक्तेर्विरोधस्य प्रसङ्गे धनशून्यचौरत्वे यज्ञोपयुक्ताजाविहरणे वा विष्णुरिति परिहारः।

---

* रथ्येति पाठान्तरम्।

† व्यतिरिक्ता क्षुद्रपशव इति पाठान्तरम्।

‡ तथाकर्मणीति पाठान्तरम्।

व्यासः।

अश्वहर्त्ता हस्तपादौ कटिं छित्त्वा प्रमापयेत्।

एतच्च विशिष्टाश्वहरणे, सामान्याश्वहरणे विष्णुना एककरपादिकत्वप्रतिपादनात्।

तथा।

पशुहर्त्तुरर्धपादं तीक्ष्णशस्त्रेण कर्त्तयेत्।

एतदपि विरुद्धदण्डमनवरुद्धहरणे।

नारदः।

महापशून् स्तेनयतो दण्ड उत्तमसाहसः।

मध्यमो मध्यमपशौ पूर्व्वः क्षुद्रपशौ स्मृतः॥

अत्रापि महापशवो विरुद्धदण्डा अनवरुद्धा विवक्षिताः।

अथ व्यासः।

उत्क्षेपकग्रन्थिभेदौ सन्दंशेन वियोजयेत्।

याज्ञवल्क्यः।

उत्क्षेपकग्रन्थिभेदौ करसन्दंशभेदकौ।

कार्य्यौ द्वितीयेऽपराधे करपादैकहीनकौ॥

करसन्दंशः कराङ्गुष्ठप्रदेशिन्यौ, करसन्दंशस्य भेदो ययोस्तौ तथेति व्यधिकरणेऽपि बहुव्रीहिः*।

मनुः।

अङ्गुली ग्रन्थिभेदस्य छेदयेत्प्रथमे ग्रहे।

द्वितीये हस्तचरणौ तृतीये वधमर्हति॥

---

* व्यधिकरणे बहुव्रीहिरिति पाठान्तरम्।

अङ्गुली अङ्गुष्ठप्रदेशिन्यौ, ग्रह उपग्रहणम्* ।

नारदः ।

प्रथमे ग्रन्थिभेदानामङ्गुल्यङ्गुष्ठयोर्वधः† ।
द्वितीये चैव यच्छेषं तृतीये वधमर्हति ॥

अङ्गुल्यङ्गुष्ठयोर्वधश्छेदनम्‡ । शेषमत्र करचरणरूपमेव पूर्व्ववाक्यानुसारात्§ तृतीये वधं मारणमेव ।

अत्र बृहस्पतिः ।

धान्यहारी दशगुणं दाप्यास्तद्द्विगुणं¶ दमम् ।

मनुः ।

धान्यं दशभ्यः कुम्भेभ्यो हरतो ह्यधिकं‖ वधः ।
शेषेऽप्येकादशगुणं दाप्यस्तस्य च तद्धनम् ॥
चैत्रिकस्यात्यये दण्डो भागाद्दशगुणो भवेत् ।
अतोऽर्द्धदण्डो भृत्यानामज्ञानात् चैत्रिकस्य तु ॥

कुम्भो विंशतिः प्रस्थाः, शेषे दशकुम्भाधिकन्यूने । तस्य च तद्धनं स्वामिनो यदपहृतं तद्दाप्यः । चैत्रिकस्यात्यये कृषीवलभागापहरणे धान्यापहार्य्येकादशगुणं दण्ड्यः शस्यापहारी च ।

---

* ग्रहोऽपहरणमिति पाठान्तरम् ।

† ग्रन्थिभेदे च तज्जन्यङ्गुष्ठयोर्वध इति पाठान्तरम् ।

‡ तर्ज्जन्यङ्गुष्ठयोर्वधश्छेदनमिति पाठान्तरम् ।

§ पूर्व्वोक्तमिति पाठान्तरम् ।

¶ दाप्यास्ते द्विगुणमिति पाठान्तरम् ।

‖ हरतो ह्यधिकमिति पाठान्तरम् ।

मनूक्तधान्यापहारे एकादशगुणदण्डाभिधानं स्वामिने च हृत-धान्यदानञ्च प्रथमधान्यचौर्य्यविषयम्। बार्हस्पत्यन्तु स्वामिने एकादशगुणधान्यदानं राज्ञश्च तद्द्विगुणधनदानं चौर्य्याभ्यास-विषयमित्यविरोधः। हलायुधस्तु द्वितीये श्लोके क्षेत्रस्वामि-नोऽलयेन दोषेण यदा शस्यनाशो भवति, तदा राज्ञा स्वग्राह्य-भागाद्दशगुणं दण्डनीयः। एतज्ज्ञानाच्च। स्वल्पदोषेण शस्य-नाशे मूल्यएव तदर्द्धेन दण्ड इत्यर्थमाह।

काष्ठभाण्डेत्यादिश्लोकत्रयानन्तरं नारदः।

तुलाधरिममेयानां गणिमानाञ्च सर्व्वशः।
एभिस्तूत्कृष्टमूल्यानां* मूल्याद्दशगुणो दमः॥

तुलाधरिमं कर्पूरादि, मेयं व्रीह्यादि, गणिमं पूगादि। एभिः काष्ठादिभिः।

मनुः।

तथा धरिममेयानां† शतादभ्यधिके वधः‡।
सुवर्णरजतादीनामुत्तमानाञ्च वाससाम्॥
पञ्चाशतस्त्वभ्यधिके हस्तच्छेदनमिष्यते।
शेषेऽप्येकादशगुणं मूल्याद्दण्डं प्रकल्पयेत्॥

धरिमं तुलनीयम्।

हरण इत्यनुवृत्तौ नारदः।

* ऐभिरुत्कृष्टमूल्यानामिति पाठान्तरम्।

† तुलाधरिममेयानामिति पाठान्तरम्।

‡ शतादभ्यधिको दम इति पाठान्तरम्।

सुवर्णरजतादीनामुत्तमानाञ्च वाससाम् ।
रत्नानाञ्चैव सर्व्वेषां शतादभ्यधिके* वधः ॥

शारीरोऽङ्गच्छेदो वेति दण्डे शङ्खलिखितौ ।

सुवर्णरत्नापहरणे ।

शारीरो दण्डस्ताडनम् । अङ्गं कर्णादि । पञ्चाशदूनविषयं निर्द्धनविषयञ्चैतत् ।

दण्डः इत्यनुवृत्तौ विष्णुः ।

रत्नापहार्य्युत्तमसाहसम् ।

अवध्यसधनविषयमेतत् ।

मनुः ।

मुख्यानाञ्चैव रत्नानां हरणे वधमर्हति ।

अत्र शङ्खलिखितौ ।

अष्टशतं सीताद्रव्यापहरणे यथाकालम् ।

अष्टशतमष्टाधिकशतम् । सीता कृष्यमाणा भूमिः तद्द्रव्यं हलकुद्दालादि, यथाकालं कर्षणसमये ।

मनुः ।

सीताद्रव्यापहारे तु शस्त्राणामौषधस्य च ।
कालमासाद्य कार्य्यञ्च राजा दण्डं प्रकल्पयेत् ॥

तथा ।

परिपूतेषु धान्येषु शाकमूलफलेषु च ।
निरन्वये शतं दण्डः सान्वयेऽर्द्धशतं दमः ॥

* शतादभ्यधिके इति पाठान्तरम् ।

परिपूतेषु अपासितपुलाकेषु । निरन्वये ग्रहणहेतुभीत्यादिशून्ये हरणे इति शेषः । मनुनैव दशकुम्भाधिकधान्यहरणे वधाभिधानात्तन्न्यूने एकादशगुणदण्डाभिधानाद्विरोधप्रासावयं शतदण्डः खलस्थधान्यहरणे, गृहधान्यहरणे* तु पूर्व्व इत्याहुः† ।

तथा ।

पुष्पेषु हरिते धान्ये गुल्मवल्लीनगेषु च ।

अल्पेष्वपरिपूतेषु दण्डः स्यात्पञ्चकृष्णलाः ॥

हरिते धान्ये चेत्रस्थघासरूपे धान्येऽपहृते । नगो वृक्षः । अल्पेषु एकपुरुषोदाहार्य्यादपि न्यूनेषु । अपरिपूतेषु अनपहृतकल्केषु । धान्येष्विति वचनविपरिणामेनान्वयः ।

व्यासः ।

मध्यहीनद्रव्यहारी पुष्पमूलफलस्य च ।

दाप्यस्तु द्विगुणं‡ दण्डमथवा पञ्च कृष्णलान् ॥

मध्यहीनद्रव्यं लवणादि । पञ्च कृष्णलान् कृष्णलशब्देन नियतमितद्रव्यमभिप्रेतम्§ ।

गौतमः ।

फलहरितधान्यशाकादाने पञ्चकृष्णलं मन्येत¶ ।

---

* गृहस्थधान्यहरणे इति पाठान्तरम् ।

† इत्यर्थे इति पाठान्तरम् ।

‡ दाप्यस्तद्द्विगुणमिति पाठान्तरम् ।

§ नियमितद्रव्यमभिप्रेतमिति पाठान्तरम् ।

¶ पञ्चकृष्णलमेवेति पाठान्तरम् ।

आदाने हरणे दण्डमिति* शेषः ।

मनुः ।

सूत्रकार्पासकिण्वानां गोमयस्य गुड़स्य च ।
दध्नः चीरस्य तक्रस्य पानीयस्य तृणस्य च ॥
वेणुवैणवभाण्डानां लवणानां तथैव च ।
मृण्मयानाञ्च हरणे मृदो भस्मन एव च ॥
मत्स्यानां पक्षिणाञ्चैव तैलस्य च घृतस्य च ।
मांसस्य मधुनश्चैव यच्चान्यत्पशुसम्भवम् ॥
अन्येषामेवमादीनां मद्यानामोदनस्य च ।
पक्वानाञ्चैव सर्व्वेषां तन्मूल्याद्विगुणोदमः ॥
यश्चैतान्युपक्लृप्तानि† द्रव्याणि स्तेनयेन्नरः ।
तं शतं‡ दण्डयेद्राजा यश्चाग्निं चोरयेद्गृहात् ॥

अन्येषामेवमादीनां पिष्टकादीनाम्§ । अन्यत्पशुसम्भवं चर्म्म-दन्तादि । उपक्लृप्तानां¶ कार्य्यार्थं सन्निधापितानाम्‖ । अग्निरिह लौकिकः । विषये लौकिकं स्यादिति नयात्**, विषये संशये ।

---

* दण्ड इतीति पाठान्तरम् ।

† यश्चैतान्युपक्लृष्टानीति पाठान्तरम् ।

‡ दश तमिति पाठान्तरम् ।

§ पिण्याकादीनामिति पिष्टकादीनामिति च पाठान्तरम् ।

¶ उपक्लृष्टानामिति पाठान्तरम् ।

‖ उपक्लृप्तानि कार्य्यार्थे सन्निधापितानीति पाठ उपलभ्यते मूलानुसारादिति बोध्यम् ।

** न्यायादिति पाठान्तरम् ।

विष्णुः।

सूत्रकार्पासगोमयदधिक्षीरतक्रलवणगुडतृणमृद्भस्ममत्स्यपक्षितैलघृतमांसमधुवैणव*वेणुमृण्मयलोहभाण्डानामपहर्त्ता मूल्याद्द्विगुणं दण्डः पक्वान्नानाञ्च।

शङ्खलिखितौ।

कृतकाष्ठाश्मकौलालचर्म्मवेत्रदलभाण्डेषु† मूल्यात्पञ्चगुणस्त्रयो वा कार्षापणाः। एकचक्रापहरणे चत्वारिंशत्‡, शकटे त्वशीतिशतम्।

कृतकाष्ठं घटितकाष्ठं, कौलालं कुलालनिर्म्मितं मृण्मयमिति यावत्। भाण्डपदमश्मादिभिः§ सम्बध्यते। एकचक्रमेकं रथाङ्गम्। चत्वारिंशत्¶ पणा एव अशीतिशतमशीत्यधिकशतम्।

नारदः।

काष्ठभाण्डतृणादीनां मृण्मयानां तथैव च।
वेणुवैणवभाण्डानां तथा स्नाय्वस्थिचर्म्मणाम्॥
शाकानामार्द्रमूलानां हरणे फलपुष्पयोः।
गोरसेक्षुविकाराणां तथा लवणतैलयोः॥
पक्वान्नानां कृतान्नानां मद्यानामोदनस्य च।

---

* विदलेति पाठान्तरम्।

† वेत्रभाण्डेष्विति पाठान्तरम्।

‡ द्वात्रिंशदिति पाठान्तरम्।

§ भाण्डपदमश्मादिभिर्निर्म्मितमिति पाठान्तरम्।

¶ द्वात्रिंशदिति पाठान्तरम्।

सर्व्वग्रामलतमूल्यानां मूल्यात्पञ्चगुणो दमः ॥

व्यासः ।

अल्पमूल्यापहरणे चौरे तद्दिक्षतौ तथा ।
स्वामिने तत्समं दाप्यो दण्डश्च द्विगुणं नृपे ॥

अत्र पञ्चगुणदण्डावरुद्धचौरादितोऽल्पे चौरतद्दिक्षतौ ग्राह्यौ इत्यविरोधः ।

मनुः ।

यस्तु रज्जु घटं कूपाद्धरेद्भिन्द्याच्च यः प्रपाम् ।
स दण्डं प्राप्नुयान्माषं तच्च तस्मिन् समाहरेत् ॥

तच्च रज्ज्वात्मकं घटात्मकञ्च द्रव्य तस्मिन् कूपे समाहरेत् योजयेत् । पारिजाते तु तद्दित्यर्थे द्दष्टा रज्जुघटमिति पठितम् । समाहारे* द्वन्द्व उक्तः ।

दण्डश्च इत्यनुवृत्तौ विष्णुः ।

अनुक्तद्रव्याणामपहर्त्ता मूल्यसमम् ।

याज्ञवल्क्यः ।

क्षुद्रमध्यमहाद्रव्यहरणे सारतो दमः ।
देशं कालं वयः शक्तिं सञ्चिन्त्य दमकर्म्मणि ॥

सारतो मूल्यानुसारात् ।

नारदः ।

साहसेषु य एवोक्तस्त्रिषु दण्डो मनीषिभिः ।
स एव दण्डस्तेयेषु द्रव्येषु त्रिष्वनुक्रमात् ॥

---

* समाहारे चेति पाठान्तरम् ।

[ प्रथममध्यमोत्तमेषु, द्रव्येषु त्रिषु क्षुद्रमध्यमहत्सु, एष प्रथम-
मोत्तमसाहसदण्डातिदेशः क्षुद्रमध्यमहत्सु द्रव्येषु विरुद्ध-
ज्ञानवरुद्धेषु* द्रष्टव्यः ।

ात्यायनः ।

येन येन परद्रोहं करोत्यङ्गेन तस्करः ।
छिन्द्यात्तत्तु नृपस्तस्य† न करोति यथा पुनः ॥

बृहस्पतिः ।

तृणं वा यदि वा काष्ठं पुष्पं वा यदि वा फलम् ।
अनापृच्छ्य तु‡ गृह्णानो हस्तच्छेदनमर्हति ॥

शङ्खलिखितौ ।

अब्राह्मणो ब्राह्मणस्य समिदाज्यैधाग्निकाष्ठतृणोपल-
पुष्पफलमूलान्यपहरन् बलादविज्ञातो वा हस्तच्छेदन-
माप्नुयात् । कुम्भकरकाग्निहोत्रद्रव्यापहारे प्रत्यक्षतो-
ऽङ्गच्छेदः स्यात्, अप्रत्यक्षं यथाविदितोऽयं किल्बिषीति
ब्राह्मणः खरयानमवाप्नुयात् । मूत्रमौण्ड्यमितरेषां
खरयानमेव च ।

ब्राह्मणोऽत्र यागादिपरः । अग्रे ब्राह्मण एव कर्म्मवियोगविख्या-
पनविवासनाङ्ककरणानां वक्ष्यमाणत्वात् । समिदादीन्यत्र
यागार्थमानीतानि, करकः कमण्डलुः । अग्निहोत्रद्रव्याणि-

* विरुद्धज्ञानवरुद्धेष्विति पाठान्तरम् ।

† छिन्द्यात्तत्तन्नृपश्रेष्ठ इति पाठान्तरम् ।

‡ अनापृच्छ्य गृह्णीति पाठान्तरम् ।

हवनीयादीनि, किल्विषी चौरः प्रकरणात्। मूत्रमीढ्ं मूत्रेण मुण्डनम्। इतरेषां क्षत्रियादीनाम्।

चौर्य्याधिकारे गौतमः।

न शारीरो ब्राह्मणस्य दण्डः*।

कस्तर्हि दण्ड इत्यत आह।

कर्म्मवियोगविख्यापनविवासनाङ्ककरणानि, अवृत्तौ प्रायश्चित्तीयते हि† सः।

कर्म्मवियोगस्तेन सह क्रियानारम्भः, विख्यापनं खरारोहडिण्डिमादिना चौरत्वद्योतनम्, विवासनं स्वदेशान्निःसारणम्, अङ्ककरणं ललाटादौ चौरचिह्नाचरणम्। एतानि च यागादिपरब्राह्मणे। लक्ष्मीधरेण तु शङ्खलिखितवाक्ये ब्राह्मणोऽब्राह्मणस्येति पठितं, तन्मते ब्राह्मणस्याब्राह्मणेन समिदादिहरणे हस्तादिच्छेद एव, ब्राह्मणस्य ब्राह्मणेन हरणे तु न शारीरो दण्ड इत्यादिकमुन्नेयम्। अवृत्तौ प्रायश्चित्तीयते हि स इति, अन्येन प्रकारेण जीवनानुपपत्तौ चौरयन् ब्राह्मणो‡ न दण्ड्यः, किन्तु प्रायश्चित्तं कुर्य्यादित्यर्थः।

आपस्तम्बः।

पुरुषवधे स्तेये भूम्यादान§ इति स्वान्यादाय वध्यस्तेनिरोधय तेषु ब्राह्मणस्य।

---

* शारीरदण्ड इति पाठान्तरम्।

† प्रायश्चित्तीति पाठान्तरम्।

‡ चौरब्राह्मण इति पाठान्तरम्।

§ भूम्यादान इति पाठान्तरम्।

तेषु ब्राह्मणेषु*। स्वानि धनानि। वध्यस्ताद्यः। चक्षुर्निरोधो नेत्रोत्पाटनम्। ब्राह्मणस्याधनतमस्य†।

बृहस्पतिः।

हृतस्वाध्यायवान्‡ स्तेयी बन्धनात् क्लिश्यते चिरम्।
स्वामिने तद्धनं दाप्यः प्रायश्चित्तन्तु§ कारयेत्॥

याज्ञवल्क्यः।

चौरं प्रदाप्यापहृतं घातयेद्विविधैर्वधैः।
सचिह्नं ब्राह्मणं कृत्वा स्वराष्ट्राद्विप्रवासयेत्॥

विष्णुः।

स्तेनाः सर्व्व एवापहृतं धनिकस्य धनं दाप्यास्ततस्तेषा-
मभिहितदण्डप्रयोगः।

नारदः।

नवहोढ़ान्विताश्चौरा वध्या राज्ञा ह्यनागमाः।
सहोढ़ान् सोपकरणान् चिह्नं राजा प्रवासयेत्¶॥

सहोढ़ान् सलोप्त्रान्, सोपकरणान् ससन्धिभेदनादीन्‖।

---

* पुस्तकद्वये एवमेव पाठो दृश्यते, परं तेषु पुरुषवधादित्यिति पाठः समीचीनतयाः भातीति बोध्यम्।

† ब्राह्मणस्याधनतमस्येति पाठान्तरम्।

‡ यश्च स्वाध्यायवानिति पाठान्तरम्।

§ प्रायश्चित्तञ्चेति पाठान्तरम्।

¶ प्रमापयेदिति पाठान्तरम्।

‖ ससन्धिच्छेदनादीनिति पाठान्तरम्।

चौरानधिकृत्य वृद्धमनुः ।

अन्यायोपात्तवित्तत्वाद्धनं येषां* मलात्मकम् ।
हतस्तान् घातयेद्राजा नार्थदण्डेन दण्डयेत् ॥

एतद्ब्राह्मणेतरचौरविषयम् ।

कात्यायनः ।

मानवाः सद्य एवाहुः सहोढानां प्रवासनम् ।
गौतमानामनिष्टं यत्प्राणच्छेदादिगर्हितम् ॥
सहोढमसहोढं वा तत्त्वागमितसाहसम् ।
संरुध्य† चिह्नमावेद्य सर्व्वस्वैर्विनियोजयेत् ॥
वयःसन्तानगुणतः‡ मन्दभक्ता वशान्विताः ।
कुर्य्युः कर्म्माणि नृपतेरामृत्योरिति कौशिकः ॥

अत्र कात्यायनवाक्ये ब्राह्मणाध्यायवतः प्रवासनं, तत्पूर्व्वम् धनवतः सर्व्वस्वहरणं, निर्धनस्य तु तथाविधस्य बन्धनादिकमभिप्रेतं ब्राह्मणविषयञ्चैतत् । तत्त्वागमितसाहसं तत्त्वेन ज्ञापितं साहसं चौर्य्यं यस्य स तथा । पूर्व्वं वशान्विताः सन्तः वयःसन्तानगुणा मोहनिगडबद्धाः मन्दभक्ताः कर्म्मार्थोपयिकवसनअशनभोजनभाजः§ कर्म्माणि कुर्य्युरामृत्योरिति योजना ।

---

* तेषामिति पाठान्तरम् ।

† इयदिति बहुरेति च पाठान्तरम् ।

‡ वयःसन्तानगुणार्थैरिति पाठान्तरम् ।

§ कर्म्मार्थोपयिकवसनअशनभोजनभाजः इति पाठान्तरम् ।

अह्नोढ़ान्विभ्रमैश्चौरान् गृहीतपरिशङ्कया ।
तथोपधाभिश्चिराभिर्ब्रूयुस्तथ्यं यथा हि ते ॥
देशं ग्रामं दिशं नाम जातिं वासं प्रतिश्रयम् ।
हस्तकार्य्यसहायांश्च प्रष्टव्याः सुनिरुह्य ते ॥
वर्णस्वराकारभेदात्सन्दिग्धविनिवेदनात् ।
अदेशकालदृष्टत्वाद्विवासस्याविशोधनात् ॥
असद्व्ययात्पूर्व्वचौर्य्यादसत्संसर्गकारणात् ।
लेशैरप्यनुगन्तव्याः* न होढेनैव केवलम् ॥

सहोढ़ग्रहणात्सलोप्त्रग्रहणात् होढ़ेऽसत्युपयोगतः असति होढ़े लोप्त्र उपयोगतः अन्वयालभ्यकर्पूराद्युपयोगतः स्तेयं ज्ञेयम् । शङ्का तु स्तेयस्य असज्जनैकार्य्यात्, असज्जनैर्मद्यपानाद्यासक्तैः ऐकार्य्यात् एकप्रयोजनकत्वात्, अनायव्ययतस्तथा शङ्केति प्रथमश्लोकार्थः । अह्नोढ़ान् होढ़रहितान्, तथा गृहीतपरिशङ्कया उपधाभिश्चिराभिर्व्याजैर्नानाविधैः देशादिकं प्रष्टव्यास्ते यथातथ्यं ब्रूयुरित्युत्तरश्लोकार्थः । न होढ़ेनैव चौरा अन्वेष्टव्याः किन्तु वर्णस्वराकारभेदादिभ्योऽपीति तदुत्तरश्लोकद्वयार्थः ।

याज्ञवल्क्यः ।

ग्राहकैर्गृह्यते चौरो लोप्त्रेणाथ पदेन वा ।
पूर्व्वकर्म्मापराधी च तथा चाशुद्धवासकः ॥
अन्येऽपि शङ्कया ग्राह्या नामजात्यादिनिह्नवैः ।
द्यूतस्त्रीपानसक्ताश्च भिन्नशुष्कमुखस्वराः ॥

* लेशैरप्यनुगमन्या इति पाठान्तरम् ।

परद्रव्यगृहाणाञ्च प्रच्छका गूढ़चारिणः।
*निरायव्ययवन्तश्च विनष्टद्रव्यविक्रयाः॥*

ग्राहकैर्गृह्यते चौर इति ग्राहकैश्चौरोऽयमिति निर्दिष्टः सन् ग्टह्यते ध्रियते इत्यर्थः। पदेन हरणदेशादारभ्य पादविन्यासानुसारेण। अग्रुढवासकः अपरिचितदेशवासः। नामजात्यादिनिह्नवैः स्वस्य नाम्नो जात्यादेरपलापैरादिपदेन ग्रामादिग्रहणम्। विनष्टद्रव्यविक्रयाः हृतद्रव्यैकदेशभूतद्रव्यविक्रयकर्त्तारः।

नारदः।

गवादिषु प्रनष्टेषु द्रव्येष्वपहृतेषु† च।
पादेनान्वेषणं कुर्य्युरामूलात्तद्विदो जनाः॥
ग्रामे व्रजे विवीते वा यत्र तन्निपतेत्पदम्।
चोद्धव्यं‡ तद्भवेत्तेन न चेत्तोऽन्यत्र तन्नयेत्॥
पदे प्रगूढे भग्ने वा विषमत्वाज्जनान्तिके।
यस्तासन्नतरो ग्रामो व्रजो वा तत्र पातयेत्॥
सीमाध्वनि द्वयोर्येन स्तेनप्रायोऽग्रुचिर्जनः।
पूर्व्वापरावैर्दृष्टो वा संसृष्टो वा दुरात्मभिः॥
नैवान्तरीयाश्च दिवो न समुद्राश्च चान्यतः।
दस्यवः संप्रवर्त्तन्ते तस्मादेवं प्रकल्पयेत्॥

* श्च इति पाठान्तरम्।

† द्रव्येषु प्रहृतेष्विति पाठान्तरम्।

‡ चौरध्नन्निति पाठान्तरम्।

ग्रामेष्वन्वेषणं कुर्य्युश्चाण्डालवधकादयः ।

रात्रिसञ्चारिणो ये च बहिःकुर्य्युर्बहिश्चराः ॥

देषु द्रव्येषु प्रनष्टेषु स्वयमेवापभ्रष्टेषु केनापि हृतेषु वा देनान्वेषणं कार्य्यम्* । ततो यस्य ग्रामे व्रजे विषीते वा दं निपतेत्, तेन ग्रामादिमता तद्वोढ़व्यम्, अपगतं गवादि न स्वीकार्य्यम् । पदे कियद्दृष्टेऽग्रे, तथाऽपरिचिते तत्सन्नि- ग्रामे पातयेत्, सन्निहितग्रामद्वैधे यत्र ग्रामे स्तेनप्रायो तो वसति तत्र पातयेत् । अन्यकल्पनं हि तदभावे त्येवं† गवादिचौरान्वेषणकः कार्य्य इति समुदायार्थः ।

ः ।

सभाप्रपापूपशालावेशमद्यान्नविक्रयाः ।

चतुष्पथाश्चैत्यवृक्षाः समाजाः प्रेक्षणानि च ।

जीर्णोद्यानान्यरण्यानि कारुकावेशनानि च ।

शून्यानि चाप्यगाराणि वनान्युपवनानि च ।

एवं विधान्नृपो देशान् गुल्मैः स्थावरजङ्गमैः ।

तस्करप्रतिषेधार्थं चारैश्चाप्यनुचारयेत् ॥

पशाला कन्दुकशाला, वेशो वेश्यागृहम्, मद्यान्नविक्रया मद्या- क्रयस्थानानि । चैत्यवृक्षाः मौढ़पादपाः । सभायाः उपा- प्रात्तदन्यमेलके समाजपदं, कदाचित्तत्रापि चौरसम्भवात् । णानि प्रेक्षणीयनृत्यादिस्थानानि । कारुकावेशनानि शिल्पि-

---

* तस्यादेशाभावेऽन्वेषणं कार्य्यं इति तस्यादेशाभावे च कार्य्यं इति च पाठान्तरम् ।

† तदभावादित्येवमिति पाठान्तरम् ।

गृह्णाणि । गुल्मैः पदातिसमूहैः, अस्यैव विशेषणं स्थावरजङ्गमैः । तेन स्थितैः सञ्चरद्भिः पदातिसमूहैः चारैश्च तस्करप्रतिषेधार्थं सभाविचौराणि स्थानान्यनुशारयेदित्यर्थः ।

नारदः ।

विचित्रैश्चारयेच्चारैश्चौरग्रहणतत्परैः ॥
तथा चान्ये प्रणिहिताः श्रद्धेयाश्चित्रवादिनः ।
चारा ह्युत्सादयेयुस्तांस्तस्करान् पूर्व्वतस्कराः ॥
अर्थदानैर्महादानैः समाजोत्सवदर्शनैः ।
तथा चौरोपदेशैश्च* कुर्य्युस्तेषां समागमम् ॥
ये तत्र नोपसर्पन्ति चारैः प्रणिहितैरपि ।
तेऽपि स्युः संग्रहीतव्याः सपुत्रज्ञातिबान्धवाः ॥
तांस्तत्र चौरान् गृह्णीयात्तान्विभाव्य विलोभ्य च† ।
अवघुष्य च सर्व्वत्र हन्याच्चित्रवधेन तु ॥
अचौरा अपि दृश्यन्ते चौरैः सह समागताः ।
यदृच्छया नैव तु तान्नृपो दण्डेन संस्पृशेत् ॥

कात्यायनः ।

अन्यहस्तात्परिभ्रष्टमकामादुद्धृतं‡ भुवि ।
चौरेण वा परिक्षिप्तं लोप्त्रं यत्नात्§ परीक्षयेत् ॥

---

* चौर्य्योपदेशैरिति पाठान्तरम् ।

† विलभ्येति पाठान्तरम् ।

‡ परिभ्रष्ट कामादुपगतमिति पाठान्तरम् ।

§ तद्यत्नात्त्विति, प्रयत्नादिति च पाठान्तरम् ।

नारदः ।

दस्युवृत्ते यदि नरे शङ्कितेः* तस्करेऽपि वा ।
यदि स्पृशति लेशेन कार्यः स्याच्छपथस्तथा ॥

लेशेन युक्तिलेशेन मुखशोषणादिना ।

याज्ञवल्क्यः ।

गृहीतः शङ्कया चौरो यद्यात्मानं न शोधयेत्† ।
दापयित्वा हृतं दण्डं‡ चौरदण्डेन दण्डयेत् ॥

कात्यायनः ।

अचौराद्दापितं§ द्रव्यं¶ चौरान्वेषणतत्परैः ।
उपलब्धे लभेरंस्ते द्विगुणं तत्र दापयेत् ॥

इति श्रीविवादरत्नाकरे चौरान्वेषणतरङ्गः ।

—:—

* शङ्का स्यादिति पाठान्तरम् ।

† स्वात्मानं नैव शोधयेदिति पाठान्तरम् ।

‡ द्रव्यमिति पाठो युज्यते ।

§ चौरवद्दापितमिति पाठान्तरम् ।

¶ दण्डमिति पाठान्तरम् ।

# अथ स्तेनातिदेशः ।

तत्र मनुः ।

ग्रामेष्वपि च ये केचिच्चौराणां भक्तदायकाः ।
भाण्डावकाशदाश्चैव सर्वांस्तानपि ताडयेत्* ॥
अग्निदान् भक्तदांश्चैव तथा शस्त्रावकाशदान् ।
सन्निधातॄंश्च मोषस्य हन्याच्चौरानिवेश्वरः† ॥

एवं भक्तपदं सिद्धान्नपरम्, अपरं भक्तपदं तद्व्यतिरिक्ताशनीयपरम्, भाण्डं शस्त्रान्यचौर्य्योपकरणम्, अवकाशोऽवस्थानदेशः, अग्निश्चौर्य्यानुकूलः, सन्निधातॄंश्च मोषस्य, मोषणीयस्य द्रव्यस्यापहारानुकूलसन्निधानकारकान्। एतच्च भयाज्ञानविरहेण‡ ज्ञेयम् ।

याज्ञवल्क्यः ।

भक्तावकाशाग्न्युदकमन्त्रोपकरणव्ययान् ।
दत्वा चौरस्य हन्तुर्व्वा जानतो दण्ड उत्तमः ॥

अवकाशो वासस्थानम्, उदकं चौरोपष्टम्भकं, मन्त्रश्चौर्य्योपायोपदेशः, उपकरणं चौर्य्यसाधनं, व्ययः अपहर्त्तुं गच्छतः पाथेयम्।

नारदः ।

भक्तावकाशदातारः स्तेनानाञ्च प्रसर्पताम् ।
शक्ताश्च ये उपेक्षन्ते तेऽपि तद्दोषभागिनः ॥

---

* घातयेदिति पाठान्तरम् ।

† हन्याद्देवावनीश्वर इति पाठान्तरम् ।

‡ भयाऽज्ञानविरहेणेति, चौरभयाऽज्ञानविरहेणेति च पाठान्तरम् ।

ग्रहा इति चौरावग्रहं* कर्त्तुं समर्थाः, ये चौरांस्त्यजन्तीत्यर्थः।

आज्ञायकादेशकारास्तेषामन्तरदायकाः†।

समदण्डाः स्मृताः सर्व्वे ये च प्रच्छादयन्ति तान्।

आज्ञायकाश्चौराणां प्रेरकाः तेषामादेशकारिणः। अथवादेशकरास्तेषां प्रेरकाः। अन्तरदायकाश्चौरावकाशदायकाः। समदण्डाश्चौरेण। तान् चौरान्।

चौराणामित्यनुवृत्तौ कात्यायनः।

क्रेतारश्चैव भाण्डानां प्रतिग्राहिण एव च।

समदण्डाः स्मृताः सर्व्वे ये च प्रच्छादयन्ति तान्॥

भाण्डानां चौरितद्रव्याणां, प्रतिग्राहिणः तेषां मुषितधनप्रतिग्रहकर्त्तारः।

हन्यादित्यनुवृत्तौ विष्णुः।

प्रसह्य तस्कराणामवकाशभक्तप्रदांश्चान्यत्र राजाशक्तेः।

अन्यत्रेति राजा चेच्चौरनिराकरणाप्रभविष्णुः, तदा स्वरक्षणाय चौरभक्तादिदानेऽपि न दोष इत्यर्थः‡।

मनुः।

योऽदत्तादायिनो हस्ताल्लिप्सेत ब्राह्मणो धनम्।

याजनाध्यापनेनापि यथा स्तेनस्तथैव सः॥

---

* चौरान्वदहर्त्तुमिति पाठान्तरम्।

† अन्तरावान्तरदायका इति पाठान्तरम्।

‡ चौरनिराकरणापन्नतदा चौराय रक्षणार्थं भक्तादिदानेऽपि न चौर इत्यर्थ इति पाठान्तरम्।

अदत्तादायिनश्चौरस्य । अपिशब्देन प्रतिग्रहादिसंग्रहः* ।
तथा ।

राष्ट्रेषु राष्ट्राधिकृतान् सामन्तांश्चैव देशितान् ।
अभ्यागतेषु मध्यस्थान् शिष्याच्चौरानिव द्रुतम् ॥
ग्रामघाते हिताभङ्गे पथि मोषाभिदर्शने ।
शक्तितोऽनभिधावन्तो† निर्व्वास्याः सपरिच्छदाः ॥

राष्ट्राधिकृतान् ग्रामवासिनः, देशितान् ग्रामादिरक्षार्थमादिष्टान्,‡ प्रजानां चौरादिभिरुपहृतेषु क्रियमाणेषु मध्यस्थान् उपेक्षकान् चौरवद्दण्डयेदिति वाक्यार्थः । ग्रामघाते ग्रामोपद्रवे, हिताभङ्गे शस्यानुकूलजलबन्धविदारणे, मोषाभिदर्शने मुष्यमाणदर्शने, शक्तितः अनभिधावन्तो निर्व्वास्याः स्वदेशं त्याजयितव्याः, सपरिच्छदाः सपरिवाराः§ ।

इति श्रीविवादरत्नाकरे सेनातिदेशतरङ्गः ।

---

* प्रतिग्रहादीति पाठान्तरम् ।

† नहि धावन्त इति पाठान्तरम् ।

‡ रक्षार्थमादिष्टानिति पाठान्तरम् ।

§ सपरिकरा इति पाठान्तरम् ।

## अथ वर्णतस्तेयविशेषः ।

तत्र मनुः ।

> अष्टापाद्यं हि शूद्रस्य स्तेये भवति किल्बिषम् ।
> षोड़शैव तु वैश्यस्य द्वात्रिंशत् क्षत्रियस्य च ॥
> ब्राह्मणस्य चतुःषष्टिः पूर्णं वापि शतं भवेत् ।
> द्विगुणा वा चतुःषष्टिस्तद्दोषगुणविद्धि सः ॥

अष्टापाद्यं अष्टभिरापद्यते गुण्यते* इत्यष्टापाद्यमष्टगुणं किल्बिषं दण्डरूपधनम्, तेनायमर्थोऽविदुषः शूद्रस्य यो दण्डो विदुषस्तदष्टगुणः एवं वैश्यादिष्वपि† । ब्राह्मणस्य पूर्णं वा शतं द्विगुणो वा चतुःषष्टिर्दण्डो भवति । अत्र हेतुः तद्दोषगुणविद्धि सः, हि यस्मात् ब्राह्मणश्चौरदोषगुणवित् । एवञ्च चौरगुणदोषवेदिताधिक्येन दण्डाधिक्याच्छूद्रादिष्वपि न्यायसाम्येनैतन्नेयम् । येन दोषेण शूद्रस्य दण्डो भवति धर्मतः, तेन विट्क्षत्रविप्राणां द्विगुणो द्विगुणो भवेत् । अविद्वच्छूद्रापेक्षया विदुषः शूद्रस्याष्टगुणो यो दण्डः तादृशामेव विट्क्षत्रियविप्राणां तेन द्विगुणो द्विगुणः षोड़शगुण-द्वात्रिंशद्गुण-चतुःषष्टिगुणो दण्ड इत्यर्थः ।

इति श्रीविवादरत्नाकरे वर्णतस्तेयविशेषतरङ्गः ।



---

* आपद्यते इति पाठान्तरम् ।

† वैश्यादिष्वपि बोध्यमिति पाठान्तरम् ।

# अथ स्तेनालाभे हृतदानम्।

तत्रापस्तम्बः।

ग्रामेषु नगरेष्वाचार्य्यान्* शुचीन् सत्यशीलान् प्रजागुप्तये निदध्यात्। तेषां पुरुषास्तथागुणा एव स्युः सर्व्वतो योजनं नगरं तस्करेभ्यो रक्ष्यं क्रोशो ग्रामेभ्यः।

नगरग्रामयोश्च तत्पर्य्यन्तभूमौ योजनरूपायां क्रोशरूपायां वा ये रक्षकास्ते तत्र मुषितं दापयितव्या इत्यर्थः। ग्रामेभ्य इत्यवधिरपि रक्ष्यो विवक्षितः। ल्यब्लोपे पञ्चमी।

कात्यायनः।

गृहेषु मुषितं राजा चौरग्राहांस्तु दापयेत्।
आरक्षकांस्तु दिक्पालान्यदि चौरो न लभ्यते॥

चौरग्राहश्चौरान्वेषणे विशिष्य नियुक्तः। आरक्षको ग्रामरक्षा नियुक्तः। दिक्पालो दिक्षु नियुक्तो, देशपतिर्यस्य† प्रसिद्धिः। अत्र च गृहेष्विति उपलक्षणं यथासम्भवमुषितदातृत्वम्।

याज्ञवल्क्यः।

ग्रामेषु च भवेद्दोषो ग्रामभर्त्तुरवीक्षिते‡।
विवीतभर्त्तुश्च पथि चौरधर्त्तुरवीतके॥

---

* ग्रामेषु नगरेषु चाचार्य्यानिति पाठान्तरम्।

† देशपतिरिति यस्येति पाठान्तरम्।

‡ घातितेषु कृतो दोषो ग्रामभर्त्तुर्न सिद्ध्यतीति, घातितेषु कृतो दोषो ग्रामभर्त्तुरनिर्गते इति च पाठान्तरम्।

ससीम्नि दद्याद्ग्रामस्तु पदं वा यत्र गच्छति ।
पञ्चग्रामी वहिःक्रोशा दशग्राम्यथवा पुनः ॥

ग्रामः ग्रामाध्यक्षः । ग्रामग्रामवहिःसीमाभ्यन्तरतद्वहिःसीमाभ्यन्तरतद्वहिर्भूतदेशेषु* चोरितं राज्ञा† ग्रामरक्षकवहिःसीमारक्षकेभ्यो‡ दापयितव्यम् । यदि पदं वा गच्छति, यदि तु पदमेव गच्छति, तदा तत्स्वामिभ्य एव, यदा तु वहिःसीमायां चौरोद्धर्त्ता न ज्ञातः, समन्ततश्च तस्यां वधश्चोरणं वा ज्ञातं, तदा तत्सन्निहितग्रामे§ समाधेयन्तत्, तत्र पञ्चत्वदशत्वयोः प्रायिकतयानुवादः¶ ।

तथाच नारदः ।

गोचरे यस्य दृश्येत तेन चौरः प्रयत्नतः‖ ।
ग्राह्यो वाप्यथ वा भाव्यं पदं यदि न निर्गतम् ॥
निर्गते तु पदे तस्मात् चेदन्यत्र पातितम् ।
सामन्तान्मार्गपालांश्च** दिक्पालांश्चैव दापयेत् ॥

गोचरे विषये । तस्मान्निर्गते तु पदे ,तत्र पदं याति, तत्स दद्यात्, न चेद्गतिर्दृश्यते, तदा सामन्तादयो दद्युरित्यर्थः ।

---

* तद्वहिर्भूतेषु देशेष्विति पाठान्तरम् ।

† वधश्चेति पाठान्तरम् ।

‡ रक्षिभ्य इति पाठान्तरम् ।

§ सन्निहितग्रामे इति, तस्मिन् सन्निहितग्रामे इति च पाठान्तरम् ।

¶ प्रायिकतयार्थवाद इति प्रायिकत्वमिति च पाठान्तरम् ।

‖ दृश्येत न चौरः प्रतियत्नत इति पाठान्तरम् ।

** मार्गमार्गाश्चेति पाठान्तरम् ।

कात्यायनः ।

ग्रामान्तेषु हृतं द्रव्यं ग्रामाध्यक्षं प्रदापयेत् ।
विवीते स्वामिना देयं चौरोद्धर्त्ता लवीतके ॥

विष्णुः ।

चौरापहृतं द्रव्यं सर्व्वमेव सर्व्ववर्णेभ्यो* दद्यात् । अनवाप्य स्वकोषादेव दद्यात् ।

कात्यायनः ।

स्वदेशे यस्य वा किञ्चिद्धृतं देयं नृपेण तत् ।
गृह्णीयात्तत्स्वयं नष्टं प्राप्तमन्विष्य पार्थिवः ॥
चौरैर्हृतं प्रयत्नेन स्वरूपं प्रतिपादयेत् ।
तदभावेऽपि मूल्यं स्यादन्यथा किल्विषी नरः† ॥
लब्धे च चौरे यदि च मोषस्तस्मान्न लभ्यते ।
दद्यात्तमथवा चैरं दापयेद्वा यथेच्छतः ॥

चौरं वा धनं चेति विकल्पः ।

वृद्धमनुः ।

तस्मिंश्चेद्दाप्यमानानां‡ भवेन्मोषे§ तु संशयः ।
मुषितः¶ शपथैः शाप्यो बन्धुभिर्वा विशोधयेत् ॥

---

* सवर्णेभ्य इति पाठान्तरम् ।

† भवेदिति पाठान्तरम् ।

‡ यस्मिंश्चेद्दाप्यमानानामिति पाठान्तरम् ।

§ भवेद्द्व्ये इति पाठान्तरम् ।

¶ मुषिते इति पाठान्तरम् ।

यस्मादपहृतालब्धं द्रव्यात्स्वल्पन्तु स्वामिना ।
तच्छेषमाप्नुयात्तस्मात्प्रत्यये स्वामिना कृते ।

इयन्मुषितमियदेति* मुषितः शपथं कारयितव्यो निर्णयार्थं बन्धुभिर्वा विशोधयेत्। इयन्मुषित मयेति मुषितेन प्रत्यये कृते, तदेकदेशे चौरालब्धे, तस्मादेव शेषो ग्राह्य।† यद्यसौ बलवत्तमाणं स्वकर्तृकशेषानपहारे दर्शयतीत्यर्थः‡।

याज्ञवल्क्यः ।

शौल्किकैः स्थानपालैर्वा नष्टापहृतमाहृतम् ।
अर्वाक् संवत्सरात्स्वामी हरेत परतो नृपः ॥
पणानेकशफे दद्याच्चतुरः पञ्च मानुषे§ ।
महिषोष्ट्रगवां द्वौ द्वौ पादं पादमजाविके ॥

शौल्किकैः शुल्काधिकृतैः, स्थानपालैः स्थानरक्षाधिकृतैर्वा, नष्टमपहृतं द्रव्यं तत्, आहृतं प्राप्त तत्, यदा संवत्सराभ्यन्तरे स्वाम्यागत्य मिलति, तदा राज्ञा स्वामिने दापयितव्यम्¶। संवत्सरादनन्तरञ्च शौल्किकादिभ्यो गौतमोक्तमंशं दत्त्वा राजा स्वयमेव गृह्णीयात्। संवत्सराभ्यन्तरे च राज्ञो याज्ञवल्क्य एव पणानित्यादिना भागमाह, एकशफे एकखुरे अश्वादाविति

* इयन्मुषित मयैतीति पाठान्तरम् ।
† शेषं ग्राह्यमिति पाठान्तरम् ।
‡ न दर्शयसीति पाठो युज्यते इति बोध्यम् ।
§ मानुषे इति पाठान्तरम् ।
¶ दापयितव्यमिति पाठान्तरम् ।

यावत्, पणान् चतुर इत्यन्वयः। पादं चतुष्पणपादं पणमिति यावत्।

अथ गौतमः।

प्रनष्टमस्वामिकमधिगम्य राज्ञे तु ब्रूयुर्विख्याप्य संवत्सरं
राज्ञा रक्ष्यमूर्द्धमधिगन्तुश्चतुर्थं राज्ञः शेषम्।

चतुर्थं खण्डं भवतीति शेषः।

मनुः।

ममेदमिति यो ब्रूयात्सोऽनुयोज्यो यथाविधि।
संवाद्य रूपं संख्यादीन् स्वामी तद्द्रव्यमर्हति॥
अवेदयंस्तु नष्टस्य देशं कालञ्च तत्त्वतः।
वर्णं रूपं प्रमाणञ्च तत्समं दण्डमर्हति॥
आददीताथ षड्भागं प्रनष्टाधिगतान्नृपः।
दशमं द्वादशं वापि सतां धर्ममनुस्मरन्॥
प्रनष्टाधिगतं द्रव्यं तिष्ठेद्युक्तैरधिष्ठितम्।
यांस्तत्र चौरान् गृह्णीयात्तान्राजेभेन ताड़येत्॥

अनुयोज्यः प्रष्टव्यः। रूपं मुक्तादिरूपं, संख्या चतुष्कादिका, आदिपदग्रहणादपहृतजात्यादिकं, प्रनष्टाधिगतात्प्रनष्टाधिगतरक्षितात्, विकल्पस्तु रक्षणक्लेशस्याल्पत्वमध्यत्वमहत्त्वैर्नेतव्यः। याज्ञवल्क्योक्तैकपक्षादन्यविषयश्चैतत्। प्रनष्टाधिगतं, पूर्वं प्रनष्टं पश्चादधिगतं, युक्तैश्चैतद्रक्षणपरैः, इभेन गजेन।

आपस्तम्बः।

प्रमादादरण्ये पशून्सृष्टान् ग्राममानीय स्वामिभ्यो-

स्वसृजित्पुनः प्रमादे सकृदवरुध्य तत ऊर्द्ध्वं न सज्येत* अरण्यरक्षक इति शेषः न सज्येत† न वादं‡ कुर्य्यादित्यर्थः ।

इति श्रीविवादरत्नाकरे क्षेत्रादिविवादतरङ्गः ।



## अथ साहसम् ।

तत्र नारदः ।

मनुष्यमारणं चौर्य्यं परदाराभिमर्षणम् ।
पारुष्यमुभयञ्चेति साहसं पञ्चधा स्मृतम् ॥

एतत्* केषाञ्चित्पक्षेण† साहसानुकीर्त्तनम् ।

प्रकृतं स्वाभिमतमाह ।

सहसा क्रियते कर्म्म यत्किञ्चिद्बलदर्पितैः । *
तत्साहसमिति प्रोक्तं सहो बलमिहोच्यते ॥

अत्र च साहसे बलदर्पितानां प्राणमारणं, चौर्य्ये तु तस्य प्राणमारणमिति विशेषः । तदपि नारद एव वक्ष्यति‡ ।

---

* ऊर्द्ध्वमध्येतीति पाठान्तरम् ।

† सज्जेतेति पाठान्तरम् ।

‡ वादमर्हमिति पाठान्तरम् ।

* इतीति पाठान्तरम् ।

† परेणेति पाठान्तरम् ।

‡ नारदो वक्ष्यतीति पाठान्तरम् ।

तथा ।

तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमं तथा ।
उत्तमञ्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
फलमूलोदकादीनां क्षेत्रोपकरणस्य च ।
भङ्गाक्षेपापमर्दाद्यैः* प्रथमं साहसं स्मृतम् ॥
वासःपश्वन्नपानानां गृहोपकरणस्य च ।
एतेनैव प्रकारेण मध्यमं साहसं स्मृतम् ॥
व्यापादो विषशस्त्राद्यैः परदारप्रधर्षणम् ।
प्राणोपरोधि यच्चान्यदुक्तमुत्तमसाहसम् ॥

आदिशब्दार्थोऽग्रे कथ्यन्तराक्षसात्†। क्षेत्रोपकरणं हलादि, गृहोपकरणमुदूखलादि‡ ।

तथा ।

तस्यैव भेदः स्तेयं स्याद्विशेषस्तत्र कीर्त्यते ।
आधिः साहसमाक्रम्य स्तेयमाधिश्छलेन तु ॥
आक्रम्य रक्षितुर्न्नाने सत्त्वेन वा बलेन च§ ।

आधिः पीड़नं साहसं, छलेन तु रक्षितुर्ग्रामवारणेन स्तेयमित्यर्थः¶ ।

---

* भङ्गाक्षेपावमर्द्दाद्यैरिति पाठान्तरम् ।

† सुथन्तराक्षसाते इति मुथन्तरवचनादेवोऽव्य इति च पाठान्तरम् ।

‡ गृहोपकरणं दृषदुपलादीति पाठान्तरम् ।

§ रक्षेन चेति पाठान्तरम् ।

¶ मित्यन्वय इति पाठान्तरम् ।

मनुः ।

स्यात्साहसन्त्वन्वयवत्प्रसभं कर्म यत्कृतम् ।
निरन्वयं भवेत्स्तेयं हृत्वापव्ययते च यत् ॥

अयमर्थः, यत्र रक्षकसमक्षमेव क्रियते, असौ सान्वयोऽपहारः साहसम् । यत्र तु रक्षकासमक्षे परद्रव्यं गृहीत्वापलापः क्रियते, तत्स्तेयम् । मनुरपि नारदेन सहैकार्थ एव ।

वृहस्पतिः ।

हीनमध्योत्तमत्वेन त्रिविधं तत्प्रकीर्त्तितम्* ।
द्रव्यापेक्षो दमस्तत्र प्रथमो मध्यमोत्तमः ॥
क्षेत्रोपकरणं सेतुं पुष्पमूलफलानि च ।
विनाशयन् हरन्दण्ड्यः शताद्यमनुरूपतः ॥
पशुवस्त्रान्नपानानि गृहोपकरणन्तथा ।
हिंसयंश्चोरयद्दाप्यो द्विशताद्यं दमं तथा ।
स्त्रीपुंसौ हेमरत्नानि देवविप्रधनं तथा ।
कौशेयञ्चोत्तमद्रव्यमेषां मूल्यसमो दमः ॥
द्विगुणः कल्पनीयश्च पुरुषापेक्षया नृपैः ।
हर्त्ता च घातनीयः† स्यात्प्रसङ्गविनिवृत्तये ॥

शताद्यं शतावरं द्विशतान्तः । अनुरूपतः विनाशितापहृतमूल्यानुसारेण । पुरुषापेक्षया आढ्यदरिद्रपुरुषापेक्षया । अत्र यस्य मूल्यमात्रं सम्भवति, तस्य तन्मात्रं, यस्य त्वधिकं, तस्य

* परिकीर्त्तितमिति पाठान्तरम् ।
† हर्त्तावघातनीय इति पाठान्तरम् ।

द्विगुणो दण्ड.। यस्य तु न मूल्यमात्रमपि, अतिप्रसङ्गिचौर्य्ये* तस्य† वध इति व्यवस्था।

साहसानुवृत्तौ नारदः।

तस्य दण्डः क्रियापेक्षः प्रथमस्य शतावरः।
मध्यमस्य तु शास्त्रज्ञैर्दृष्टः पञ्चशतावरः॥
वधः सर्व्वस्वहरणं पुरान्निर्वासनाङ्कने।
तदङ्गच्छेद इत्युक्तो दण्ड उत्तमसाहसे॥
स्यातां संव्यवहार्य्यौ द्वौ धृतदण्डौ तु पूर्व्वयोः।
धृतदण्डोऽप्यसंभाष्यो ज्ञेय उत्तमसाहसे॥

शतावरः शतमवधिर्यत्र तच्छतावरं शताधिकमित्यर्थः। एवञ्च पञ्चशतावरोऽपि। अत्रापि सत्पुरुषाद्यपेक्षया व्यवस्था। तदङ्गच्छेदः साहसकरणीभूताङ्गच्छेदः‡। पूर्व्वयोः प्रथममध्यम-साहसयोः।

याज्ञवल्क्यः।

सामान्यद्रव्यप्रसभहरणात्साहसं स्मृतम्।
तन्मूल्याद्द्विगुणो दण्डो निह्नवे च चतुर्गुणः॥
अभिघाते तथा भेदे च्छेदे कुड्यावघातने।
पशून्द्राप्यः पञ्चदश विंशतिं तद्द्वयं तथा॥

---

* अतिप्रसङ्गाच्चौर्य्ये इति, अतिप्रसङ्गचौर्य्ये इति च पाठान्तरम्।
† वधस्येति पाठान्तरम्।
‡ साहसकरणभूताङ्गच्छेद इति साहसकर्त्तृभूताङ्गच्छेद इति च पाठान्तरम्।

सामान्यं नानास्वामिकं, हर्त्तुरन्यस्वामिकत्वविवक्षा, तेन पर-द्रव्यहरणे साहसे हृतद्रव्यमूल्याद्द्विगुणः। तन्नैवार्थे निह्नवे चतुर्गुण इति पूर्व्वश्लोकार्थः। कुड्यावघातादिरूपे साहसे द्वितीय-पादम्*। अभिघातो बन्धशिथिलीकरणहेतुः† भेदः क्वापि बन्धादिविघटनं, छेदो द्वैधीकरणम्, एभ्यो बलवान्विमर्द्दोऽभि-घातनम्‡ एषु कुड्याभिघातादिषु यथाक्रमं पञ्चदशविंशति-चत्वारिंशत्पणा दण्डाः। अभिघातादौ तु यावत्कुड्यं मन्दीभूतं, तावदपेक्षयापि§ साहसकर्त्तृपार्श्वे।

मनुः।

द्रव्याणि हिंस्याद्¶ यो यस्य ज्ञानतोऽज्ञानतोऽपि वा।
स तस्योत्पादयेत्तुष्टिं राज्ञे दद्याच्च तत्समम्॥

अत्रापि विरोधपरिहारे विषयादिवैशिष्ट्यमुन्नेयम्।

तथा।

चर्म्मचार्म्मिकभाण्डेषु काष्ठलोष्ट्रमयेषु च।
मूल्यात्पञ्चगुणो दण्डः पुष्पमूलफलेषु च॥

चार्म्मिकं चर्म्ममयमुपानहादि। चर्म्मचार्म्मिकेति प्रथमचर्म्म-पदं स्फुटार्थं वदन्ति। काष्ठमयं मञ्चादि, लोष्ट्रमयं घटादि।

---

* द्वितीयपादमिति पाठान्तरम्।

† अभिघातोऽत्र शिथिलीकरणहेतुरिति पाठान्तरम्।

‡ विमर्द्दस्त्वभिघातनमिति पाठान्तरम्।

§ तावदपेक्षणमिति पाठान्तरम्।

¶ द्रव्यं हिंस्यादिति पाठान्तरम्।

अत्र पुष्पादौ मूल्यपञ्चगुणो दण्डः पूर्व्वमुक्तो वृहस्पतिना, मनुना पुष्पादावेव शताद्यदण्डवर्णनं पुष्पादिवेशिष्ठ्येन व्यवस्थाप्यम्, अत्र पुष्पादिस्वामितोपश्चोत्याद्यो* न्यायसाम्यात्।

कात्यायनः।

क्षतं भङ्गोपमर्द्दौ वा कुर्य्याद्द्रव्येषु यो नरः।
प्राप्नुयात्साहसं पूर्व्वं द्रव्यभाक् स्वाम्युदाहृतः॥

क्षतं किञ्चिन्नाशः, भङ्गोऽर्द्धनाशः, उपमर्द्दः सर्व्वनाशः। द्रव्यमिह कुड्यातिरिक्तम्†। महामूल्यमल्पाभिघातेनाऽप्यनुपयुक्ततां यद्याति स्फटिकादि, तदभिप्रेतं, तेन नाभिघाते तथा भेदे इत्यादि याज्ञवल्क्येन विरोधः। नापि परस्पर‡लघुगुरूणां क्षतादीनां समानदण्डप्रयोजकत्वमिति।

याज्ञवल्क्यः।

दुःखोत्पादि गृहे द्रव्यं क्षिपन् प्राणहरन्तथा।
षोड़शाद्यः पणान्दण्ड्यो द्वितीयो मध्यमं दमम्॥

गृहे परगृहे। दुःखोत्पादि कण्टकादि। प्राणहरं सर्पादि। षोड़शपणानाद्यो दुःखोत्पादिद्रव्यप्रक्षेपी दण्ड्यः। मध्यमं पणपञ्चशतम्§।

---

* तोषोऽप्युत्पाद्य इति पाठान्तरम्।

† कुड्याद्यतिरिक्तमिति पाठान्तरम्।

‡ परस्परमिति पाठान्तरम्।

§ पञ्चशतपञ्चकमिति पाठान्तरम्।

दण्ड इत्यनुवृत्तौ विष्णुः ।

गृहकुड्याद्युपघ्नी* मध्यमसाहसं तच्च योजयेत् ।

तत् गृहकुड्यादिभेत्ता योजयेत्प्रतिसंस्कुर्यात् । पूर्व्वं याज्ञवल्क्येन कुड्यमात्रसम्बन्धिनि भेदमात्रे दशपणात्मको† दण्ड उक्तः, इह च गृहसहितकुड्यादिगते प्रौढ़विदारणे मध्यमसाहसमित्यविरोधः‡ ।

तथा ।

गृहपीड़ाकरं द्रव्यं क्षिपन्दण्ड्यः पणशतम्§ ।

अत्र पीड़ाकरद्रव्यस्य गृहे क्षेपं कुर्व्वतः षोड़शपणदण्डाभिधानं याज्ञवल्क्यस्य, विष्णोश्च तत्रैव पणशतदण्डाभिधानम् । तद्‌त्र¶ पीड़ातिशयहेतुत्वाहेतुत्वाभ्यां व्यवस्था ।

तथा ।

साधारणापलापी च प्रेषितस्याप्रदाता च पितृपुत्राचार्य्ययाज्यर्त्विजामन्योन्यमपतितत्यागी च‖, नच तान् यज्याच्छूद्रप्रव्रजितानां** दैवे पित्रे भोजकश्चायोग्य-

* गृहकुड्याद्युपभेत्तेति पाठान्तरम् ।

† विंशतिपणात्मक इति पाठान्तरम् ।

‡ मध्यमसाहसमुक्तमित्यविरोध इति पाठान्तरम् ।

§ पण शतमिति पाठान्तरम् ।

¶ तत्रेति पाठान्तरम् ।

‖ मन्येषामपतितानां त्यागी चेति पाठान्तरम् ।

** शूद्रस्य प्रव्रजितानामिति पाठान्तरम् ।

कर्म्मकारी च समुद्रगृहभेदकश्चानियुक्तशपथकारी* च
पशूनां पुंस्त्वाभिघातकारी† च।

प्रव्रजितशब्दोऽत्र बौद्धादिशब्दपरः‡। समुद्रगृहभेदकः मुद्रितगृहमुद्रामोचकः। अग्रे वर्त्तमानमनियुक्तमिति पदमत्रापि योज्यम्।

पुनर्विष्णुः।

अस्पृश्यः कामचारेण स्पृशन्नस्पृश्यान् वध्यः§ रजस्वलां
शिफाभिस्ताड़येत्।

कामचारेण स्वेच्छया, रजस्वलां स्पृशन्तीमिति शेषः। शिफाभिर्वृक्षनेत्रैः¶।

याज्ञवल्क्यः।

अर्घ्याक्रोशातिक्रमकृद्भ्रातृभार्य्याप्रहारकः।
सन्दिष्टस्याप्रदाता च समुद्रगृहभेदकः॥
सामन्तकुलिकादीनामपकारस्य कारकः।
पञ्चाशत्पणिको दण्ड एषामिति विनिश्चयः॥
स्वच्छन्दविधवागामी विक्रुष्टेऽनभिधावकः।
अकारणे च विक्रोष्टा चाण्डालश्चोत्तमान् स्पृशन्॥

---

* अनियुक्तश्च शपथकारीति पाठान्तरम्।

† पुंस्त्वोपघातकारीति पाठान्तरम्।

‡ बौद्धादिपर इति पाठान्तरम्।

§ स्पृशन् वध्य इति पाठान्तरम्।

¶ वृक्षनवैरिति पाठान्तरम्।

शूद्रप्रव्रजितानाञ्च दैवे पित्र्ये च भोजकः ।
अयुक्तं शपथं कुर्व्वन्नयोग्योऽयोग्यकर्मकृत् ॥
वृषक्षुद्रपशूनाञ्च पुंस्त्वस्य प्रतिघातकृत् ।
साधारणस्यापलापी दासीगर्भविनाशकः ॥
पितापुत्रस्वसृभ्रातृदम्पत्याचार्य्यशिष्यकाः ।
एषामपतितान्योन्यत्यागी च शतदण्डभाक् ॥

अर्घ्योऽर्घ्यार्हः आचार्य्यादिः । अतिक्रमः आज्ञालङ्घनं, प्रहारस्ताड़नम् । सन्दिष्टस्य प्रेषितस्य । सामन्ताः स्वगृहचेचादिस्थायिनः । कुलिकाः स्वकुलजाताः* । आदिशब्दादन्येऽपि स्वग्रामोद्भूताः स्वदेशोद्भूताश्च गृह्यन्ते । स्वच्छन्दविधवागामी नियोगाभावेऽपि तद्गामी । विक्रुष्टे चौराद्याक्रान्तैराहूते† अनभिधायकः शक्तः सन्निति शेषः । अयुक्तं शपथं स्वमातरं गच्छामीत्याद्याशयम्‡ । अयोग्यः शूद्रादिः, अयोग्यं कर्म्म प्रतिग्रहादि, तेन प्रतिग्रहाद्ययोग्यः सन् प्रतिग्रहादिकारीत्यर्थः । वृषक्षुद्रपशूनाञ्च पुंस्त्वस्येति, वृषाणामौषधादिना पुंस्त्वस्य फलप्रसवशक्तेः प्रतिघातकः, एवं क्षुद्रपशूनां हस्त्याद्यपेक्षया । साधारणापलापी अन्यसाधारणं द्रव्यं स्वासाधारणीकृत्य वञ्चकः§ ।

---

* कुलजाता इति पाठान्तरम् ।

† राज्ञामि कृते इति पाठान्तरम् ।

‡ ग्राह्यारमिति पाठान्तरम् ।

§ अपरसाधारणं द्रव्यं निकम्परवञ्चक इति पाठान्तरम् ।

द्वयेति पाठे द्वयो बलीवर्द इति नेयम्* ।

मनुः ।

न माता न पिता न स्त्री न पुत्रस्त्यागमर्हति ।
त्यजन्नपतितानेताद्राज्ञा दण्ड्यः शतानि षट् ॥

त्यागो विहितसत्कारायनाचरणं, स्त्रीशब्दोऽत्र पत्नीपरः ।

शङ्खलिखितौ ।

न मातापित्रोरन्तरमिच्छेत्पुत्रः† कामं मातुरेव यत् सा हि साधारणी पोषणीया च‡, न पुत्रः§ प्रतिमुच्येतान्यत्र सौत्रामणीयागाज्जीवमृणान्मातुरेवमत्याज्या माता तथा पिता सपिण्डा गुणवन्तः सर्व्वे एवात्याज्याः, यस्त्यजेत्कामादपतितान्,¶ स दण्डं प्राप्नुयाद्विशतम् ।

अत्र विष्णुयाज्ञवल्क्ययोः शतदण्डो विदुषोरन्योन्यत्यागे, मनूक्तस्तु षट्शतदण्डो विदुषा कामादेकतरत्यागे, शङ्खलिखितयोर्द्विशतदण्डस्तु कामादविद्वत्तया एकतरेण त्यागे, एवञ्च विदुषोरन्योन्यत्यागेऽप्यनयैव दिशा दण्ड ऊह्यः ।

तथा ।

---

* पोष्यमिति पाठान्तरम् ।

† अन्तरं विच्छेदं न इच्छेत् कामं विभिन्नं द्रव्यं मातुरेव अन्तरं न इच्छेत् । नच्छेत् पुत्र इति पाठान्तरम् ।

‡ पोषणी चेति पाठान्तरम् ।

§ न पुनः प्रतिमुच्येत मुक्तो न भवेदित्यर्थः ।

¶ यस्त्यजेदपि तान् कामादपतितानिति पाठान्तरम् ।

न मातापितरावतिक्रामेन्न गुरूंस्त्रयाणामतिक्रमेऽङ्गच्छेदः। अतिक्रमोऽत्र पदाभिघातः, अभिघातकरणस्यैवाङ्गस्य च्छेदनम्।

विष्णुः।

> येषां देयः पन्थास्तेषामपथदायी कार्षापणानाञ्च विंशतिं* दण्डः। आसनार्हस्यासनमदद†त् पूजार्हमपूजयंश्च प्रातिवेश्यब्राह्मणनिमन्त्रणातिक्रामी च निमन्त्रयित्वा भोजनादायी च निमन्त्रितस्तथेत्युक्त्वा अभुञ्जानः स्वर्णमाषकं‡ निकेतयितुश्च द्विगुणम्§।

येषामिति येषां पन्था देयो भवति, तेषामपथदायी पथिदायी न भवतीत्यर्थः¶। निकेतयितुर्निमन्त्रयितुः। प्रातिवेश्यब्राह्मणनिमन्त्रणातिक्रामी असत्यपि दोषे प्राप्ते निमन्त्रणावसरे निरन्तरगृहवासिब्राह्मणनिमन्त्रणास्वीकारी।

मनुः।

> प्रातिवेश्यानुवेश्यौ च कल्याणे विंशतिद्विजे।
> अर्हावभोजयन्विप्रो दण्डमर्हति माषकम्॥

कल्याणे विंशतिद्विजे, विंशतिर्द्विजा भोज्या यत्र तत्र। तेन तत्र कल्याणे प्रातिवेश्यानुवेश्यौ निरन्तरैकान्तरगृहवासिनौ

---

* कार्षापणपञ्चविंशतिमिति पाठान्तरम्।

† स्थानमर्हस्यार्हंच कुर्व्वन्निति पाठान्तरम्।

‡ सुवर्णमधिकमिति पाठान्तरम्।

§ त्रिगुणमितीति पाठान्तरम्।

¶ तेषामपथदायी न भवेदित्यर्थ इति पाठान्तरम्।

विप्रो भोजनार्हांविभोजयन्मापकं दण्डमर्हति। मापकयात्र रौप्यो बोद्धव्यः। उत्तरश्लोके मानवेन अधिके भूतितुल्यात्मके प्रातिवेश्यश्रोत्रियाभोजनरूपेऽपराधे विशिष्य हिरण्यमापक-दण्डाभिधानादिति हलायुधः।

मत्स्यपुराणे।

आमन्त्रितो द्विजो यस्तु वर्त्तमानः प्रतिग्रहे।

निष्कारणं न गच्छेत्तु स दाप्योऽष्टशतं दमम्॥

प्रतिग्रहार्थेनिमन्त्रितो विना कारणेन यो न गच्छति, तस्याष्टोत्तरशतं पणा दण्ड इत्यर्थः।

तरिकः स्थलजं शुल्कं गृह्णन्दाप्यः पणान्दश।

तरिको* नद्यादिसन्तरणशुल्कग्रहणनियुक्तः†।

ब्राह्मणप्रातिवेश्यांस्तु तद्देवानिमन्त्रयन्॥

ब्राह्मणाश्च ते प्रातिवेश्याश्चेति ब्राह्मणप्रातिवेश्याः।

मनुः।

श्रोत्रियः श्रोत्रियं साधुं भूतिकृत्येष्वभोजयन्।

तदन्नं द्विगुणं दाप्यो हैरण्यञ्चैव‡ मापकम्॥

तदन्नं तद्भोज्यमन्नं द्विगुणं दाप्योऽभोजिताय, हैरण्यञ्चैव मापकं राज्ञे।

---

* तरिज इति पाठान्तरम्।

† नद्यादिगन्तु शुल्कग्रहणनियुक्त इति पाठान्तरम्।

‡ हिरण्यञ्चैवेति पाठान्तरम्।

वैश्यं दूषयितुस्तदर्द्धं, शूद्रं दूषयितुः प्रथमसाहसम्* ।
अभक्ष्यं विण्मूत्रादि । जात्यपहारि सुराव्यतिरिक्तं लशुनादि, सुरायाः पृथगुक्तत्वात् । शूद्रस्याभक्ष्यं कपिलादुग्धादि, निषिद्धं पञ्चनखमांसादि, तदर्द्धं तदर्द्धमित्यत्राव्यवहितस्तत्पदार्थः ।

याज्ञवल्क्यः ।

द्विजं प्रदूष्याभक्ष्येण दण्ड उत्तमसाहसम् ।
क्षत्रियं मध्यमं वैश्यं प्रथमं शूद्रमर्द्धिकम् ॥

मनुः ।

अभक्ष्यमथवा मेयं वैश्यादीन् प्राशयन्† द्विजान् ।
जघन्यमध्यमोत्कृष्टान् दण्डानर्हेद्यथाक्रमम् ॥
पणाः शूद्रे भवेद्दण्डशतु.पञ्चाशदेव तु ।

अत्र विष्णूक्तो दण्डो ब्राह्मणादिषु उत्तमेषु दूषितेषु, मन्वाद्युक्तस्त्वनुत्तमेष्वित्यविरोधः ।

तथा ।

शासितारः‡ स्वयं कार्य्या राज्ञा निर्विषयास्तु§ ते ।
अनेन स्वयमेव जात्यपहारिणो ये अभक्ष्यभक्षणं कुर्वते, ते स्वदेशाद्राज्ञापसारणीया इत्युक्तम् ।

अत्रैव विष्णुः ।

---

* प्रथम साहसमिति पाठान्तरम् ।

† प्राशयन्निति पाठान्तरम् ।

‡ पायितार इति पाठान्तरम् ।

§ निर्वासनाल्विति पाठान्तरम् ।

जातिभ्रंशकरस्याभक्ष्यस्य भक्षयिता विवास्यः ।

याज्ञवल्क्यः ।

जारं चौरेत्यभिवदन्दाप्यः पञ्चशतं दमम् ।
उपजीव्य धनं मुञ्चंस्तदेवाष्टगुणीकृतम् ॥

यो जारं कुलभ्रंशादिभयाच्चौर इति अपह्नुते* स पञ्चशतं पणानि† दण्ड्यः । यदि तु तस्मादेवोत्कोचरूपं धनं गृहीत्वा जारं मुञ्चति, तदा तदुत्कोचधनादष्टगुणं दाप्य इत्यर्थः ।

तथा ।

मृताङ्गलग्नविक्रेतुर्गुरोस्ताडयितुस्तथा ।
राजयानासनारोढुर्दण्डो मध्यमसाहसः ॥

मृताङ्गलग्नं वस्त्रादि, येन धृतेन म्रियते, मृतो वा येन दृश्यते तत् । तद्रूपमप्रकाश्य विक्रेतुर्मध्यमसाहसो दण्ड इत्यर्थः । गुरोस्ताडयितुस्ताडनहेतावनुपस्थिते इति शेषः । राजयानासनारोढु, राजाज्ञां विनेति‡ शेषः ।

मनुः ।

अभिचारेषु सर्वेषु कर्त्तव्यो द्विशतो दमः ।
मूलकर्म्मणि चानाप्तेः कृत्यासु विविधासु च ॥
अदूषितानां द्रव्याणां दूषणे भेदने तथा ।

---

* वदतीति पाठान्तरम् ।

† पञ्चशतपणानीति पाठान्तरम् ।

‡ राज्ञा विनेति पाठान्तरम् ।

मणीनामपवेधे तु दण्डः प्रथमसाहसः ॥

यो लोभादधमो जात्या जीवेदुत्कृष्टजातिभिः।

तं राजा निर्धनं कृत्वा क्षिप्रमेव प्रवासयेत् ॥

अभिचारेषु सर्व्वेषु श्येनादिरूपेषु* अनपराधिनं प्रति क्रियमाणेषु, मूलकर्म्मणि च भेषजादिप्रयोगे अनाप्तैरहितैषिभिः क्रियमाणे, कृत्यासु उच्चाटनादिरूपासु असदृशीषु कर्त्तुर्द्विशतो दम इति पूर्व्वश्लोकार्थः। अदूषितानां द्रव्याणां दूषणे असद्द्रव्यसंसर्गेण दुष्टत्वापादने, येषां भेदनमात्रेणैव विघटनं, तेषां भेदे, मणीनां मुक्तादीनां अपवेधने, प्रथमसाहसो दण्ड इति द्वितीयश्लोकार्थः। वैश्यादिरुत्कृष्टस्य क्षत्रियादेः कर्म्मणा जीवेत्, तं धनहीनं कृत्वा स्वराष्ट्रान्निःसारयेदिति तृतीयश्लोकार्थः।

याज्ञवल्क्यः।

विप्रत्वेन तु शूद्रस्य जीवतोऽष्टशतो दमः।

विप्रत्वेन ब्राह्मणलिङ्गधारणेन।

मनुः।

संक्रमध्वजयष्टीनां प्रतिमानाञ्च भेदकः।

प्रतिकुर्य्याच्च तत्सर्व्वं दद्यात्पञ्चशतानि च ॥

संक्रमो जलोपरि गमनोचितः काष्ठादिबन्धः, साँकम इति† यस्य प्रसिद्धिः, ध्वजो देवतायतनादिचिह्नम्। यष्टिर्हट्टतड़ागादिल-

---

* श्येनयागादिष्विति पाठान्तरम्।

† साँक इति पाठान्तरम्।

नादियष्टि.* । प्रतिमा देवतादिप्रतिकृतिः । प्रतिकुर्य्यात्पूर्व्ववत्कुर्य्यात् ।

कात्यायनः ।

> हरेद्भिन्द्याद्दहेद्वापि देवानां प्रतिमां यदि ।
> तद्दहच्चैव यो भिन्द्यात्प्राप्नुयात्पूर्व्वसाहसम् ॥

विष्णुः ।

> अभक्ष्यस्य चाविक्रेयस्य विक्रयी देवप्रतिमाभेदकश्च
> उत्तमसाहसं दण्ड्य. ।

अत्र प्रथमादिसाहसानां विकल्प. प्रतिमापकर्षोत्कर्षाभ्यां परिस्थाप्यः ।

नारदः ।

> अविक्रेयाणि विक्रीणन् ब्राह्मणः प्रच्युतः पथः† ।
> मार्गे पुनरवस्थाप्यो राज्ञा दण्डेन भूयसा ॥

शङ्खलिखितौ ।

> प्रतिमारामकूपसंक्रमध्वजसेतुनिपानभङ्गेषु तत्समुत्थापनं प्रतिसंस्कारोऽष्टशतश्च ।

दण्ड इति शेषः। निपानं गवादिजलपानार्थं कूपसमीपकृतजलाधार., प्रतिसंस्कारः पुनः सज्जीकरणम् । उत्कृष्टप्रतिमादिभङ्गेष्वयं‡ दण्डः । अनुत्कृष्टप्रतिमादिभङ्गे तु मानव इत्यविरोध. ।

---

* यष्टिदण्डमार्गप्रतिमादिप्रहारैरिति पाठान्तरम् ।

† प्रच्युतव्रत इति पाठान्तरम् ।

‡ उत्कृष्टप्रतिमाभङ्गेऽयमिति पाठान्तरम् ।

मनुः।

यस्तु पूर्व्वनिविष्टस्य तड़ागस्योदकं हरेत्।
आगमञ्चाप्यपां भिन्द्यात्स दाप्यः पूर्व्वसाहसम्॥
तड़ागभेदकं हन्यादप्सु शुद्धवधेन वा।
तद्वापि प्रतिसंस्कुर्य्याद्दाप्योत्तमसाहसम्॥

पूर्व्वनिविष्टस्य पूर्व्वस्थितस्य स्नानपानादावुपयुक्तस्येति यावत्। आगमो येन कर्म्मणा* तड़ागः पयसा पूर्य्यते, तं यो भिन्द्यात् निरुन्ध्यात्, तस्य पूर्व्वसाहसो दण्डः। अप्सु मज्जनेनेति शेषः, शुद्धवधेन वा, जलादन्यत्र गलनाडीबन्धादिना। प्रतिसंस्कारोत्तमसाहसयोः समुच्चयः। अत्र च द्वितीयश्लोकेन तड़ागभेदके उत्तमसाहसाभिधानं पूर्व्वोक्ततड़ागापेक्षया उत्कर्षमादायेत्यविरोधः। तोयाधारविशेषादेव विकल्प इत्यन्ये।

हन्यादित्यनुवृत्तौ विष्णुः।

सेतुभेदकञ्च।

शङ्खलिखितवाक्यस्थसेतुभङ्गापेक्षयातिशयितसेतुभङ्गोऽत्र विवक्षित इति दण्डविकल्पोपपत्तिः।

शारीरोऽङ्गच्छेदो वेत्यनुवृत्तौ शङ्खलिखितौ।

वापीतड़ागोदपाभेदमार्गरसद्रव्यदूषणेऽदासीदाससम्प्रदानकरणे।

तीक्ष्णशलाकादिना मार्गदूषणे विषादिना† रसद्रव्यदूषणे अदा-

* वर्त्मनेति वर्त्मनागत्येति च पाठान्तरम्।

† विषमादिनेति पाठान्तरम्।

स्याय दासाय दाने शारीरो बधात्मको दण्डः, स्वल्पे तस्मिन् अङ्गच्छेदमात्रं वा।

याज्ञवल्क्यः।

विषाग्निदां स्त्रियञ्चैव पुरुषघ्नीमगर्भिणीम्।
सेतुभेदकरीञ्चाप्सु शिला बद्ध्वा प्रवेशयेत्॥
विषाग्निदां पतिगुरुनिजापत्यप्रमापणीम्।
विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेत्॥

विषाग्निदां पुरुषघ्नीं सेतुभेदकरीञ्च स्त्रियं यदा तस्या गर्भो न भवति, तदा अप्सु शिलां बद्ध्वा प्रवेशयेत्। विषाग्निदां* विषाग्निदानेन पतिगुरुनिजापत्यप्रमापणीं विकर्णकरनासौष्ठीं कृत्वा गोभिः प्रमापयेन्मारयेत्। मिताक्षरायान्तु प्रथमविषाग्निदामिति स्थाने विप्रदुष्टामिति पठितं, व्याख्यातञ्च विशेषतः प्रदुष्टामिति।

यमः।

उल्काग्निदायकाश्चोरा घातकाश्चोपघातकाः।
स्वशरीरेण दण्ड्याः स्युर्मनुराह प्रजापतिः॥

निषिद्धशरीरेतरदण्डविषयमेतत्। स्वशरीरदण्डोऽप्यत्रापराधानुरूपो विवेचितः।

याज्ञवल्क्यः।

क्षेत्रवेश्मग्रामवनविवीतखलदाहकाः।
राजपत्न्यभिगामी च दग्धव्यास्तु कटाग्निना॥

---

* विषाग्निदांश्चेति पाठान्तरम्।

कटी वीरणमयः ।

कात्यायनः ।

प्राकारं भेदयेयस्तु पातयेच्छातयेत्तथा* ।
बध्नीयाद्भसौ मार्गं प्राप्नुयात्पूर्व्वसाहसम् ॥

मनुः ।

प्राकारस्यानुभेत्तारं परिखानाञ्च पूरकम् ।
द्वाराणाञ्चैव भेत्तारं क्षिप्रमेव प्रवासयेत् ॥
राज्ञः कोषापहर्त्तॄंश्च प्रतिकूलेष्ववस्थितान्† ।
घातयेद्विविधैर्दण्डैररीणाञ्चोपजापकान्‡ ॥
राष्ट्रेषु रक्षाधिकृताः परस्वादायिनः शठाः ।
भृत्या भवन्ति प्रायेण तेभ्यो रक्षेदिमाः प्रजाः ॥
ये कार्य्यिभ्योऽर्थमेवं हि गृह्णीयुः पापचेतसः ।
तेषां सर्व्वस्वमादाय राजा कुर्य्यात्प्रवासनम् ॥
विनियुक्तास्तु कार्य्येषु हन्युः कर्म्माणि कार्य्यिणाम् ।
धनोष्मणा पच्यमानान्निस्वांस्तान् कारयेन्नृपः ॥

कोषो राज्ञामर्थसञ्चयः । उपजापकान्राष्ट्रभेदकान्§ कार्य्यिभ्यः व्यवहारज्ञः कार्य्यिणामर्थिप्रत्यर्थिनाम् ।

याज्ञवल्क्यः ।

---

* तथा न पातयेत् वेति, पातयेच्छातयेत वेति च, पाठान्तरम् ।

† प्रतिकूलेषु च स्थितानिति पाठान्तरम् ।

‡ वीराणाञ्चोपजापकानिति पाठान्तरम् ।

§ मन्त्रभेदकानिति पाठान्तरम् ।

ये राष्ट्राधिकृतास्तेषां* चारैर्ज्ञात्वा विचेष्टितम् ।
साधून् सम्मानयेद्राजा विपरीतांस्तु घातयेत् ॥
उत्कोचजीविनो द्रव्यहीनान् कृत्वा प्रवासयेत् ।
सदानमानसत्कारान् श्रोत्रियान्वासयेत्सदा ॥

सदानमानसत्कारान् कृतदानमानपूजासनादिप्रतिपत्तीन् ।

तथा ।

अवध्यं यश्च बध्नाति वध्यं यश्च प्रमुञ्चति ।
अप्राप्तव्यवहारश्च स दाप्यो दममुत्तमम् ॥

अवध्यमनपराधिनं अप्राप्तव्यवहारं व्यवहारार्थमानीतमनिर्व्वाहितव्यवहारं† तच्च न बध्नीयान्न वा मुञ्चेदित्यर्थः।‡

विष्णुः ।

दण्ड्यमुन्मोचयन्दण्डाद्विगुणं दण्डमावहेत् ।
नियुक्तश्चाप्यदण्ड्यानां दण्डकारी नराधमः ॥

कात्यायनः ।

राजक्रीड़ासु ये सक्ता राजस्त्र्युपजीविनः ।
अप्रियस्य तु वक्तारो वधं तेषां§ प्रकल्पयेत् ॥

राजक्रीड़ासु राजासाधारणक्रीड़ासु ये सक्ताः सदनुमतिं विनेति शेषः । एवं राज्ञः प्रजापालनरूपां वृत्तिं सदनुमतिं विना

* राष्ट्राधिकृतस्तेषामिति पाठान्तरम् ।

† अनिर्व्वाहितव्यवहारमिति पाठान्तरम् ।

‡ तच्च बध्नीयान्न मुञ्चेदित्यर्थ इति पाठान्तरम् ।

§ यो वक्ता वधं तस्येति पाठान्तरम् ।

श्रालम्बन्ते ये ते, ये च राज्ञ एवाप्रियवादशीलाः* ।

तथा ।

प्रतिरूपस्य कर्त्तारः प्रेषणाः† प्रकराश्च ये ।
राजार्थमोषकाश्चैव प्राप्नुयुर्विविधं वधम् ॥

प्रतिरूपस्य राजवेशस्य राजानुमतिं विना कारकाः, प्रेषणाः राजकार्य्यबाधे नृत्यादिप्रेषकाः । प्रकरा ये दण्डाख्यं करं प्रकृष्टं गृह्णन्ति ।

इत्यादिव्यनुवृत्तौ विष्णुः ।

ये चाकुलीना राज्यमभिकामयेयुः ।

अकुलीना राज्ञो यत्कुलं, तदप्रसूताः ।

याज्ञवल्क्यः ।

ऊनं वाप्यधिकं वापि लिखेद्यो राजशासनम् ।
पारदारिकचौरौ वा मुञ्चतो दण्ड उत्तमः ॥

राजशासनमियद्देयमियद्ग्राह्यमित्यादि राजादिष्टम्‡ ।

शङ्खलिखितौ ।

कूटशासनप्रयोगे राजशासनप्रतिषेधे कूटतुलामान-
प्रतिमानव्यवहारे शारीरोऽङ्गच्छेदो वा ।

कूटशासनप्रयोगे कूटराजाज्ञादेरनुष्ठाने, राजशासनप्रतिषेधे राजाज्ञालङ्घने, मानं प्रस्थादि, शारीरो मरणरूपः, अङ्गं येन

* राज्ञ एवाप्रियवादिन अप्रियवादशीला इति पाठान्तरम् ।

† प्रेषका इति पाठान्तरम् ।

‡ राजादिष्टमिति पाठान्तरम् ।

तत्कुरुते, विकल्पस्त्वपराधोत्कर्षापकर्षाभ्यां व्यवस्थितः* ।

कात्यायनः ।

प्रमाणेन तु कूटेन मुद्रया वापि कूटया ।
कार्य्यन्तु साधयेद्यो वै स दाप्यो दण्डमुत्तमम् ॥

प्रमाणेन लेख्येन ।

मनुः ।

कूटशासनकर्त्तृंश्च प्रकृतीनाञ्च दूषकान् ।
स्त्रीबालब्राह्मणघ्नांश्च हन्याद्द्विट्सेविनस्तथा† ॥

शासनमिह राजादेशः । प्रकृतीनाममात्यानां दूषकान् विना दोषं दोषोद्भावकान्, द्विट्सेविनः राजद्वेषिसेवकान् ।

विष्णुः ।

स्वाम्यमात्यसुहृत्कोषराष्ट्रदुर्गबलानि राज्याङ्गानि‡
प्रकृतयः तद्दूषकांश्च हन्यात् ।

अमात्यशब्देन प्रधानशिष्टोऽत्र विवचितः । स्वराष्ट्रपरराष्ट्रयो-श्चारचक्षुः स्वादुष्टांश्च हन्यात् ।

याज्ञवल्क्यः ।

शस्त्रावपाते§ गर्भस्य पातने चोत्तमो दमः ।

शस्त्रावघाते परगात्रे, गर्भस्य पातने गर्भविनाशने, पणशतदमा-

---

* व्यवस्थाप्य इति पाठान्तरम् ।

† हन्याद्द्विट्सेविनस्तथेति पाठान्तरम् ।

‡ स्वाम्यमात्यसुहृत्कोषदण्डराष्ट्रमित्राणीति पाठान्तरम् ।

§ शस्त्रावपाते इति पाठान्तरम् ।

यवोधाद्ब्राह्मणीगर्भवधे सर्व्वस्वहरणाद्यवबोधात्तदन्यगर्भपातोऽत्र विवक्षितः । यथागतोत्कर्षापेक्षया दण्डानां विकल्पः । हलायुधस्तु पुरुषवधे उत्तमः स्त्रीवधे त्वधमः । विकल्पव्यवस्थामाह उशनाः ।

परिक्लेशेन पूर्व्वः स्याद्भैषज्येन तु मध्यमः ।
प्रहारेण तु गर्भस्य पातने दण्ड उत्तमः ॥

परिक्लेशेनायासेन गर्भस्येत्यन्वयः । भैषज्येन गर्भस्य पातने इति सम्बन्धः ।

कात्यायनः ।

व्यापादनेन* तत्कारी वधं चित्रमवाप्नुयात् ।

तत्कारी साक्षाद्वधकारी ।

अत्रैव बृहस्पतिः† ।

साहसं पञ्चधा प्रोक्तं वधस्तत्राधिकः स्मृतः ।
तत्कारिणो नार्थदण्डैः शास्याः‡ वध्याः प्रयत्नतः ॥
प्रकाशवधका ये च तथा चोपांशुघातकाः ।
राज्ञा सम्यग्धनं§ हित्वा हन्तव्या विविधैर्वधैः ॥
मित्रप्रार्थ्यर्थलोभैर्वा राज्ञा लोकहितैषिणा ।
न मोक्तव्याः साहसिकाः सर्व्वभूतभयावहाः ॥

---

* व्यापादने विति व्यापारेण विति च पाठान्तरम् ।

† स्मृतिरिति पाठान्तरम् ।

‡ शास्या इति पाठान्तरम् ।

§ वधमिति पाठान्तरम् ।

लोभाद्भयाद्वा यो राजा न हन्यात्पापकारिणः ।
तस्य प्रक्षुभ्यते राष्ट्रं राज्याच्च परिहीयते ॥

मित्रप्राप्त्यर्थलोभैर्न मोक्तव्या इत्यन्वयः । किन्तु राज्ञा लोकहितैषिणा हन्तव्या इति सम्बन्धः ।

तथा ।

वन्ध्याग्निविषशस्त्रेषु* परान्यस्तु प्रमापयेत् ।
क्रोधादिना निमित्तेन नरः साहसिकस्तु सः ॥

बौधायनः ।

क्षत्रियादीनां ब्राह्मणवधे वधः सर्वस्वहरणञ्च । तेषामेव तुल्यावकृष्टवधे यथाबलमनुरूपञ्च दण्डं कल्पयेत् । क्षत्रियवधे गोसहस्रमृषभाधिकं† राज्ञ उत्सृजेद्वैरनिर्यातनार्थं शतं वैश्ये दश शूद्रे ऋषभश्चाधिकः । शूद्रवधेन गोवधः स्त्रीवधश्च व्याख्यातः । अन्यत्रात्रेय्याः‡ धेन्वनडुहोरन्ते चान्द्रायणं चरेदात्रेय्या वधः§ क्षत्रियवधेन व्याख्यातः । हंसभासवर्हिणचक्रवाकबलाकाकाकोलूकमूषिकभेकतैलीक¶बभ्रुनकुलादीनां वधः शूद्रवत्‖ ।

---

* वन्ध्याग्निविषयन्त्रैश्चेति पाठान्तरम् ।

† ऋषभाधिक वेति पाठान्तरम् ।

‡ अन्यत्रापत्रियवधवदिति पाठान्तरम् ।

§ उदक्यावध इति पाठान्तरम् ।

¶ तैलीकेति पाठान्तरम् ।

‖ शूद्रवधवदिति पाठान्तरम् ।

यदा क्षत्रिया वैश्याः शूद्रा ब्राह्मणं घ्नन्ति, तदा तेषां सर्व्वस्वं गृहीत्वा वधः कार्य्यः। यदा तु तेषामेव क्षत्रियादीनां मध्ये तुल्यावकृष्टजातीयवधो भवति, क्षत्रियः क्षत्रियवैश्यशूद्रान् हन्ति, वैश्यो वैश्यशूद्रौ, शूद्रः शूद्रं, तदा यथाबलं यथासामर्थ्यमनुरूपं दण्डमुत्तमसाहसादिरूपं शारीरं वा दण्डं कल्पयेत्। यदा तु ब्राह्मणः क्षत्रियवैश्यशूद्रान् हन्ति, तदा क्रमेणैवैतान्दण्डान् गृह्णीयात्। क्षत्रियवधे गोसहस्रं वृषभाधिकं, वैश्यवधे गोशतं, शूद्रवधे वृषभाधिकगोदशकम्। शूद्रवच्चात्रेयीव्यतिरिक्तस्त्रीवधे धेन्वनडुहातिरिक्तगोवधे च दण्डः। आत्रेयीवधे धेन्वनडुद्वधे च क्षत्रियवधदण्डः*। हंसभासादीनां वधे शूद्रवद्दण्ड इति वाक्यार्थः। आत्रेयी ऋतुमती, तैलिकः† छुच्छुन्दरिः, बभ्रुर्नकुलः, एवञ्च‡ पूर्व्वनकुलपदं जलनकुलपरम्। आदिशब्देनान्येऽपि तिर्य्यञ्चो विवक्षिताः। विहितवधव्यतिरिक्तवधविषयञ्चैतत्।

बृहस्पतिः।

एकस्य बहवो यत्र प्रहरन्ति रुषान्विताः।
मर्म्मप्रहारदोषस्तु§ घातकस्य उदाहृतः॥
मर्म्मघाती तु यस्तेषां यथोक्तं दापयेद्धनम्¶।

---

* क्षत्रियवद्दण्ड इति पाठान्तरम्।

† तैलीक इति पाठान्तरम्।

‡ चतएवेति पाठान्तरम्।

§ मर्म्मप्रहारदोषस्त्विति पाठान्तरम्।

¶ दापयेद्दमनिति पाठान्तरम्।

आरम्भकृत्सहायश्च दोषभाजस्तदर्हतः ॥
घतस्यालमहत्त्वञ्च मर्म्मस्थानञ्च यत्नतः ।
सामर्थ्यञ्चानुबन्धञ्च ज्ञात्वा चिह्नैः प्रसाधयेत् ॥

एकस्य मर्म्मघातितद्घातिरूपा बहवो यत्र प्रहारं कुर्व्वन्ति, तत्र मर्म्मघातिनमेव यथोक्तं दण्डं दापयेदित्यर्थः । यथोक्तश्च यज्जातीयस्य प्राणिनो घातकानधिकृत्य य उक्तः, सः तद्घातिनस्तु दण्ड आरम्भकृदित्यादिनोक्तः, मर्म्मघातित्व-तद्घातित्वानिश्चयार्थं घतस्येत्यादि ।

नारदः ।

अविशेषेण सर्व्वेषामेष दण्डविधिः स्मृतः ।
वधादृते ब्राह्मणस्य न वधं ब्राह्मणोऽर्हति* ॥
शिरसो मुण्डनं दण्डस्तस्य निर्व्वासनं पुरात् ।
ललाटे चाभिशस्ताङ्कः प्रयाणं गर्द्दभेन तु ॥

साहसचौर्य्ययोर्यमः ।

न शारीरो ब्राह्मणस्य दण्डो भवति कर्हिचित् ।
गुप्ते तु बन्धने बद्धा राजा भक्तं प्रदापयेत् ॥
अथवा बन्धनं रज्ज्वा कर्म्म वा कारयेन्नृपः ।
मासार्द्धमासं कुर्व्वीत कार्य्यं विज्ञाय तत्त्वतः ॥
यथापराधं विप्रन्तु विकर्म्मण्यपि कारयेत् ।
राजदुष्टानि यो भाषेद्दण्डो निर्विषयः स्मृतः ॥
अवध्या ब्राह्मणा गावो लोकेऽग्निर्वैदिकी श्रुतिः ।

* दण्डो भवति कर्हिचिदिति पाठान्तरम् ।

गुप्ते रक्षिते यतः पलायनं न भवति, विकर्म्माणि उच्छिष्ट-मार्जनादीनि। यो राजदुष्टानि भाषते, तस्य दण्डो निर्व्विषयः, निर्व्विषयत्वं देशान्निःसारणमिति* यावत्।

अथ याज्ञवल्क्यः।

यः साहसं कारयति स दाप्यो द्विगुणं दमम्।
यश्चैवमुक्ताहं दाता कारयेत्स चतुर्गुणम्॥

कारयेत्साहसमिति† शेषः। यथाह ददामीत्येवमुक्ता‡ कारयति तस्य चतुर्गुणो दण्डोऽनुबन्धोत्कर्षादित्यर्थः।

कात्यायनः।

आरम्भकृत्सहायश्च तथा मार्गानुदेशकः।
आश्रयः शस्त्रदाता च भक्तदाता विकर्म्मिणाम्॥
युद्धोपदेशकश्चैव तद्विनाशप्रवर्त्तकः।
उपेक्षाकार्य्ययुक्तश्च दोषवक्तानुमोदकः॥
अनिषेद्धा क्षमो यः स्यात्सर्व्वे ते कार्य्यकारिणः।
यथाशक्त्यनुरूपञ्च दण्डमेषां प्रकल्पयेत्॥

तद्विनाशप्रवर्त्तकः युद्धोपदेशं विनैव विषादिना नाशप्रवर्त्तकः। उपेक्षाकारी निषेधे साक्षात्क्षमोऽपि परादिनापि§ निषेधासु-

---

* देशान्निराकरणमिति पाठान्तरम्।

† साहसवचनमिति, वधकेति च, पाठान्तरम्।

‡ ददामीति उक्ता तदिति पाठान्तरम्।

§ वाक्यादिनादीति पाठान्तरम्।

कूलकारी*। अयुक्तो राज्ञाऽनियुक्तः, घातनीयदोषवता, अयुक्तो घातकासम्बन्धि† इत्येके।

नारदः।

> अयुक्तं साहसं कृत्वा प्रत्यासत्तिं भजेत यः।
> ब्रूयात्स्वयं वा सदसि तस्यार्द्धविनयः स्मृतः॥
> गूहमानस्तु दौःशील्याद्यदि पापः स जीवति।
> सभ्यायास्य न तुष्यन्ति तीव्रो दण्डश्च पात्यते॥

प्रत्यासत्तिर्विनयकर्तृसान्निध्यं, ब्रूयाद्वा सदसि साहसं कृतं, तेन‡ अवगूहमानत्वमुक्तम्। तेन साहसमगूहमाने तत्कर्त्तरि अनधिकदण्डः, गूहमाने तु अधिक इति पूर्वोत्तरश्लोकार्थः। हलायुधस्तु साहसकार्य्येऽप्यन्यायसाहसं कृत्वा यदि प्रत्यासत्तिं प्रायश्चित्तं भजते, स्वयमेव वा साहसकर्त्तृत्वं निवेद्य दण्डो मे क्रियतामिति वदेत्, तस्य यथोक्तदण्डादर्द्धदण्डः। यस्तु दौःशील्यं गूहमानः तथाप्येव जीवति, तस्य लिङ्गितादिभिः साहसकारित्वं निश्चित्य§ स्वल्पेऽपि साहसे तीव्रो दण्ड इत्यर्थमाह।

इति विवादरत्नाकरे साहसतरङ्गः।

---

* निबेधानुकूलकारीति मिषु पुस्तकेषु दृश्यते, परं निवेधानुकूलकारीति पाठ स्यादिति प्रतिभाति।

† घातकासम्बन्धि इति पाठान्तरम्।

‡ वदेदिति पाठान्तरम्।

§ निश्चित्य इति पाठान्तरम्।

## अथ घातकान्वेषणम् ।

तत्र याज्ञवल्क्यः ।

अविज्ञातहतस्याशु कलहं सुतबान्धवाः* ।
प्रष्टव्या योषितश्चास्य परपुंसि रताः पृथक् ॥
स्त्रीद्रव्यवृत्तिकामो वा केन वा सहसं गतः ।
तत्प्रदेशसमासन्नं पृच्छेद्वापि शनैः शनैः ॥

तत्प्रदेशसमासन्नं हननदेशसमीपस्थम् ।

बृहस्पतिः ।

हतः संदृश्यते यत्र घातकस्तु न दृश्यते ।
पूर्ववैरानुमानेन ज्ञातव्यः स महीभुजा ॥
प्रातिवेश्यानुवेश्यौ च तस्य मित्रारिबान्धवाः ।
प्रष्टव्या राजपुरुषैः सामादिभिरुपक्रमैः ॥
विज्ञेयोऽसाधुसंसर्गाच्चिह्नहोढेन मानवैः† ।
एषोदिता घातकानां‡ तस्कराणाञ्च भावना ॥
गृहीतः शङ्कया§ यस्तु न तत्कार्यं प्रपद्यते ।
शपथेन विशोद्धव्यः सर्व्ववादेष्वयं विधिः ॥

तत्कार्यं हननरूपं, न प्रतिपद्यते पृष्टः सन्नानुमन्यते ।

---

* कलहस्य सबान्धवा इति, कलहेषु सबान्धवा इति च, पाठान्तरम् ।

† चिह्नहोढेन वा नरैरिति पाठान्तरम् ।

‡ एषा हि घातकानामेति पाठान्तरम् ।

§ प्रहित इति पाठान्तरम् ।

व्यासः ।

ज्ञात्वा तु घातकं सम्यक् ससहायं सबान्धवम् ।
हन्याच्चित्रैर्वधोपायैरुद्वेगजनकैर्नृपः ॥

आरम्भकत्सहायश्चेति द्रव्यसहितसहायो विवक्षितः । इह त्वत्यन्तसन्निहितसहाय इति न तेन सह विरोधः । बान्धवाश्च ये साहसकर्त्तारं सुहृदपि न तं परित्यजन्ति* ।

बृहस्पतिः ।

दिव्यैर्विशुद्धो मोच्यः स्यादशुद्धो वधमर्हति ।
निग्रहानुग्रहाद्राज्ञः कीर्त्तिर्धर्मश्च वर्द्धते ॥

इति विवादरत्नाकरे घातकान्वेषणतरङ्गः ।

# अथ संग्रहणम् ।

तत्र बृहस्पतिः ।

पारुष्यं द्विविधं प्रोक्तं साहसञ्च त्रिलक्षणम्* ।
पापमूलं संग्रहणं त्रिप्रकारं† निबोधत ॥

---

* ससहायमारम्भकत्सहायं घातकं साहसकर्तारं सुहृदपि न तं परित्यजन्तीति पाठान्तरम् ।

---

* त्रिलक्षणमिति पाठान्तरम् ।
† त्रिप्रकारमिति पाठान्तरम् ।

बलोपाधिकृते द्वे तु तृतीयमनुरागजम् ।
तत्पुनस्त्रिविधं प्रोक्तं प्रथमं मध्यमुत्तमम् ॥
अनिच्छन्त्या यत्क्रियते सुप्तोन्मत्तप्रमत्तया ।
प्रलपन्त्या वा रहसि बलात्कारकृतन्तु तत् ॥
छद्मना गृहमानीय गत्वा वा तत्स्वसद्मनि* ।
संयोगः क्रियते यस्यास्तदुपाधिकृतं† विदुः ॥
अन्योन्यचक्षूरागेण दूतीसम्प्रेषणेन च ।
कृतं रूपावलोकेन ज्ञेयं तदनुरागजम् ॥

व्यासः ।

संग्रहस्त्रिविधो ज्ञेयः प्रथमो मध्यमस्तथा ।
उत्तमश्चेति शास्त्रेषु तस्योक्तं लक्षणं पृथक् ॥
अदेशकाले सम्भाष्य अरण्ये‡ च परस्त्रियाः ।
अपाङ्गप्रेक्षणं हास्यं प्रथमः संग्रहः स्मृतः§ ॥

एतच्च विरंसया विशेषणीयम् ।

बृहस्पतिः ।

अपाङ्गप्रेक्षणं हास्यं दूतीसम्प्रेषणं तथा ।
स्पर्शो भूषणवस्त्राणां प्रथमः संग्रहः स्मृतः ॥

नारदः ।

---

* वा यत्र कर्षतीति पाठान्तरम् ।

† य स्यात्तदुपाधिकृतमिति पाठान्तरम् ।

‡ अदेशकालसम्भाष्यमरण्ये इति पाठान्तरम् ।

§ पूर्व्वं साहसं स्मृतमिति पाठान्तरम् ।

परस्त्रिया सहाकाले अदेशे पुरुषस्य तु ।
स्थानसम्भाषणामोदास्तयः संग्रहणक्रमाः ॥
नदीनां सङ्गमे तीर्थेष्वारामेषु वनेषु च ।
स्त्रीपुंसौ यत्समेयातां तच्च संग्रहणं स्मृतम् ॥
दूतीसम्प्रेषणैर्वापि लेखसम्प्रेषणैरपि ।
अन्यैर्वापि व्यभिचारैराद्यं* संग्रहणं स्मृतम् ॥

अकाले रात्र्यादौ, अदेशे निर्जनादौ, स्थानमेकत्र स्थितिः, आमोदः परिहासः ।

बृहस्पतिः ।

प्रेषणं गन्धमाल्यानां फलमद्यान्नवाससाम् ।
सम्भाषणञ्च रहसि मध्यमं संग्रहं विदुः ॥

व्यासः ।

प्रेषणं गन्धमाल्यानां धूपभूषणवाससाम् ।
प्रलोभनञ्चान्नपानैर्मध्यमः संग्रहः स्मृतः ॥

बृहस्पतिः ।

एकशय्यासनं क्रीडा चुम्बनालिङ्गने तथा ।
एतत्संग्रहणं प्रोक्तमुत्तमं शास्त्रवेदिभिः ॥

व्यासः ।

शय्यासने विविक्ते तु परस्परमपाश्रयः† ।

---

* व्यभिचारैर्वाद्यमिति पाठान्तरम् ।

† परस्परसमाश्रय इति पाठान्तरम् ।

केशाकेशिग्रहश्चैव ज्ञेय उत्तमसंग्रहः॥

मनुः।

उपकारक्रिया केलिः स्पर्शोभूषणवाससाम्।
सहशय्यासनञ्चैव सर्व्वं संग्रहणं स्मृतम्॥

उपकारक्रिया हिताचरणं, केलिर्नर्म्म, उत्तममिति शेषः।

नारदः।

दर्पाद्वा यदि वा मोहाच्छ्लाघया वा स्वयं वदेत्।
पूर्व्वं मयेयं भुक्तेति तच्च संग्रहणं स्मृतम्॥
पाणौ यथापि गृह्णीयाद्*वेश्यां वस्त्राञ्चलेऽपि वा।
तिष्ठ तिष्ठेति वा ब्रूयात्सर्व्वं संग्रहणं स्मृतम्॥

याज्ञवल्क्यः।

पुमान् संग्रहणे ग्राह्यः केशाकेशि परस्त्रिया।
सद्यो वा कामजैश्चिह्नैः प्रतिपत्तौ द्वयोस्तथा॥

संग्रहणप्रवृत्तः पुमान् कामजया केशाकेशिकर्षणक्रियया अन्यैश्च कामजैश्चिह्नैः कार्य्यैर्वार्द्रनखक्षतादिभिः† संग्रहणवानिति निश्चेतव्य इति तात्पर्य्यार्थः। अव्ययत्वात्तृतीयाविभक्त्यर्थे केशाकेशिशब्दः।

तथा।

नीविस्तनप्रावरणमूरुकेशावदर्शनम्‡।

---

* यच्च निगृह्णीयादिति पाठान्तरम्।

† कामजैराभरणनखक्षतादिभिरिति पाठान्तरम्।

‡ कर्षणमिति पाठान्तरम्।

अदेशकालसम्भाषं* सहायस्थानमेव च ॥

कुर्व्वीत इति शेषः। प्राज्ञ इत्यन्वयः।

कात्यायनः।

यानि कर्म्माण्यभिलषन् पुमान्स्त्रै कुरुते क्वचित्।
आरम्भास्ते तु निर्द्दिष्टा गर्हिताः कामसाधकाः ॥

परस्त्रियमभिलषन् यावन्तं कर्म्मकलापं पुमान् करोति, सर्व्वोऽसौ संग्रहणारम्भः।

तमेव प्रपञ्चयति।

भूतोपचारयुक्तैर्वेलास्थानसङ्गतः†।
कण्ठकेशाम्बरग्राहीः‡ कर्णनासाकरादिषु ॥
एकस्थानासनाहारः संग्रहो मुनिभिः§ स्मृतः।
न साक्षी ह्यन्यथाकारी यादृशो दण्डमर्हति ॥
गर्भपातो नखानाञ्च दर्शनं¶ गर्भधारणम्।
धारणं परवस्त्राणामलङ्कारायुधस्य च ॥
एभिर्लिङ्गैः सदा ज्ञेया व्यभिचाररताः स्त्रियः ॥

अत्र करादिष्वित्यादिशब्देन कण्ठकेशकर्णनासातिरिक्तमङ्ग

---

* अदेशकालसम्भाष्यमिति, अदेशकालसम्भाषणमिति च, पाठान्तरम्।

† भूतोपचारयुक्तैर्वेलास्थानसङ्गत इति भूतोपचारयुक्तैश्चापरमाप सङ्गत इति च पाठान्तरम्।

‡ कण्ठकेशग्रहणादीनि पाठान्तरम्।

§ मनर्षेति पाठान्तरम्।

¶ दंशनमिति पाठान्तरम्।

ग्राह्यम् । तेन भूलोपचारयुक्त*स्ताम्बूलाद्युपकरणयुक्तः । केशे कर्णेऽम्बरे कर्णे नासायां करादाविति षट्सु स्पृशति, एकस्थान-एकासन एकाहारश्च† भवति, स नवप्रकारः संग्रहो ग्राहकै-र्निश्चेतव्य इत्यर्थः । न ग्राह्य इत्यादिनार्द्धेन एतैरेव चिह्नैर्भावा-न्तरप्रयुक्तै‡र्न संग्रहो निश्चेतव्यः । यस्तु तेनैव तथात्वनिश्चय§ कुरुते, स एव दण्ड्यः । गर्भपात इत्यादिना, एभिर्गर्भपाता-दिभिर्निमित्तैर्व्यभिचाररता¶ इति ज्ञेयमित्युक्तम् ।

तथा ।

गन्धमाल्याम्बरैश्चैव लेख्यसम्प्रेषणैरपि ॥
ग्राहकं सर्व्वमेव स्यादारम्भकरणं हि तत् ॥
असत्कुकार्य्यसंसर्गाद्ग्रहं संग्रहणं विदुः‖ ।
कामी तु संस्थितो यत्र आरम्भकामसाधके** ।
तत्तस्माद्ग्रहणं तस्य प्रासङ्गग्रहणं स्मृतः†† ॥

---

* दूलीपचारयुक्त इति पाठान्तरम् ।

† एकस्थानासनाहारश्चेति पाठान्तरम् ।

‡ भावान्तरप्रयुक्तैश्चेति पाठान्तरम् ।

§ यथार्थनिश्चयमिति, तथात्वमिति च, पाठान्तरम् ।

¶ व्यभिचारिता इति पाठान्तरम् ।

‖ यस्मात् कार्य्यसंसर्गाद्ग्रहणं तद्ग्रहं विदुरिति, यस्मादकार्य्यसम्बन्धाद्ग्रहणं ग्रहणं विदुरिति च, पाठान्तरम् ।

** आरम्भे कामसाधक इति, आर्त्ते वा कामसाधक इति च, पाठान्तरम् ।

†† प्राह संग्रहणं स्मृत इति, प्रासङ्ग संग्रह स्मृत इति च, पाठान्तरम् ।

याहकं ग्रहणस्यावरोधस्य निमित्तमिति* हलायुधः ।

बृहस्पतिः ।

त्रयाणामपि चैतेषां प्रथमो मध्य उत्तमः ।

विनयः कल्पनीयः स्यादधिको द्रविणाधिके ॥

त्रयाणामप्येतेषां प्रथममध्यमोत्तमसाहसकारिणाम्† । यथाक्रमं प्रथममध्यमोत्तमदण्डाः, अधिकधनस्य तु प्रथमादिभ्योऽधिकोऽपि दण्ड इत्यर्थः ।

मनुः ।

परस्य पत्न्या पुरुषः संभाषं योजयेन्नहः‡ ।

पूर्व्वमाचारितो दोषैः प्राप्नुयात्पूर्व्वसाहसम् ॥

पूर्व्वमाचारितः पूर्व्वमेव तत्स्त्रीप्रार्थनादिभिरभिशस्तः । रिरंसाविरोधकारणं विना सम्भाषणे चैव§ दण्डः । यस्त्वनाचारितः कारणान्तरात्सम्भाषणं कुरुते, न स दोषं प्राप्नुयादिति ।

मनुरेवाह ।

यस्त्वनाचारितः पूर्व्वमभिभाषेत कारणात् ।

न दोषं प्राप्नुयात्किञ्चिन्नहि तस्य व्यतिक्रमः ॥

आपस्तम्बः ।

---

* निमित्तमित्यवेति पाठान्तरम् ।

† प्रथममध्यमोत्तमसेयहकारिणामिति पाठो युक्तः ।

‡ सम्भाषं योजयन्नह इति पाठान्तरम् ।

§ चैवामिमि पाठान्तरम् ।

अबुद्धिपूर्व्वमलङ्कृतो वा* परदारेषु प्रविशन् कुमारीं
वाचा बाध्यः,† बुद्धिपूर्व्वन्तु दण्ड्यः।

वाचा बाध्यः यश्चदुष्टाशयएवाज्ञानादलङ्कृतः परस्त्रियाः परकन्यायाश्च समीपमुपसर्पति, स वाचा बाध्यः भर्त्सनीयः। यदि तु दुष्टभावएव तथा कुरुते, तदा वित्तानुसारेण दण्डनीय इत्यर्थः।

मत्स्यपुराणम्।

भिक्षुकोऽप्यथवा नारी योऽपि स्यात्तु कुशीलवः।
प्रविशेत्प्रतिषिद्धस्तु प्राप्नुयात्पूर्व्वसाहसम्॥
यस्तु सञ्चारकस्तत्र पुरुषः स तथा भवेत्।
पारदारिकवद्दण्ड्यो यश्च स्यादवकाशदः॥

भिक्षुकादयः प्रतिषिद्धा अपि स्त्र्यगारं प्रविशन्तो दोषसंशयेन निरूपणीयाः, दुष्टतायां पूर्व्वसाहसं दण्ड्याः। यस्तु सञ्चारकः स्त्रियं पुरुषं वाभिसारस्थानं प्रापयति, यो वा स्त्रीपुरुषयोरभिसारस्थानदाता, तौ पारदारिकवद्दण्ड्यावित्यर्थः।

नारदः।

नाथवत्या परगृहे संयुक्तस्य स्त्रिया सह।
दृष्टं संग्रहणं तज्ज्ञैर्नागतायाः स्वयं गृहे॥

अभिगमानुवृत्तौ‡ विष्णुः।

---

* पुरेति पाठान्तरम्।

† बध्य इति पाठान्तरम्।

‡ अभिगमनानुवृत्ताविति पाठान्तरम्।

अतोऽन्येन प्रकारेण प्रवृत्तो ग्रहणं भवेत्।
स्वयमेवागतायान्तु स्वगृहे न तु दोषभाक्॥
अदुष्टत्यक्तदारस्य क्लीवस्याधमकस्य च।
स्वेच्छानुपेयुषो दाराव दोषः साहसे भवेत्॥

दुष्टं संग्रहणं पुरुषदण्डार्हताप्रयोजकं, तेन क्लीवस्याधमस्य वा स्वेच्छान् स्वच्छन्दान्दारांस्तथादुष्टत्यक्तान् स्वच्छन्दान्दारानुपगच्छतः पुरुषस्य न दण्ड इत्यर्थः। स्वेच्छान्दारानुपेयुष इत्यन्वयः*।

मनुः।

भिक्षुका वन्दिनश्चैव दीक्षिताः कारवस्तथा।
सम्भाषणं गृहे स्त्रीभिः कुर्य्युरप्रतिवारिताः॥
न सम्भाषं सह स्त्रीभिः प्रतिषिद्धः समाचरेत्।
निषिद्धो भाषमाणस्तु सुवर्णं दण्डमर्हति॥

वन्दिनस्तावकाः, दीक्षिताः यज्ञार्थं कृतदीक्षाः, कारवः भृत्यर्थशिल्पिनः†। अनिषिद्धा भाषमाणाः सम्भाषणं कुर्व्वाणाः।

याज्ञवल्क्यः।

स्त्री निषेधे शतं दण्ड्या द्विशतन्तु दमं पुमान्।
प्रतिषेधे तयोर्दण्डो यथा संग्रहणे तथा॥

स्त्री परपुरुषेण सह सम्भाषणादौ निषिद्धापि यदि तत्कुरुते, तदासौ शतं दण्ड्या; पुरुषस्त्वेवं कुर्व्वाणो द्विशतं दण्ड्यः।

---

* इत्युपेय इति पाठान्तरम्।

† भृत्या शिल्पिन इति पाठान्तरम्।

स्त्रीपुंसौ च निषिद्धौ परस्परसम्भाषणाद्दौ यदि प्रसक्तौ भवतस्तदा तौ अभिगमवद्दण्ड्याविलर्थः ।

मनुः ।

नैष चारणदारेषु विधिर्नात्मोपजीविषु ।
सज्जयन्ति हि ते नारीर्निगूढ़ाचारयन्ति च ॥

चारणादीनां*मात्मोपजीविनां वेश्योपजीविनाञ्च दारेषु नैषः पूर्व्वोक्तोऽभिभाषणनिषेधविधिस्तद्धीनदण्डविधिश्च, यस्मादेते स्वभार्य्यां पुरुषान्तरैर्योजयन्ति प्रच्छन्नीकृत्य चारयन्ति च ।

यदि तु ताभिरपि निगूढं† सम्भाषणं कुरुते, तदा दण्डलेशं दाप्यएवेत्याह ।

किञ्चिदेव तु दाप्यः स्यात्सम्भाषां‡ ताभिराचरन् ।
प्रैष्यासु चैकभक्तासु रहः प्रव्रजितासु च ॥

प्रैष्यासु दासीषु, एकभक्तासु एकपुरुषमात्रावरुद्धासु§ प्रव्रजितासु बौद्धादिब्रह्मचारिणीषु¶ । किञ्चिन्मनुनैव दर्शितसुवर्णापेक्षया अल्पम् ।

शङ्खलिखितौ ।

सर्व्वेषां स्वदारनियमः स्वकर्म्मप्रतिपत्तिश्च, येन येनाङ्गे-

---

* चारणानां नटादीनामिति पाठान्तरम् ।

† निगूढ इति पाठान्तरम् ।

‡ सम्भाषमिति पाठान्तरम् ।

§ एकपुरुषमात्रानुरुद्धास्विति पाठान्तरम् ।

¶ बौद्धादिव्रतचारिणीष्विति पाठान्तरम् ।

नापराधं कुर्य्यात्, तत्तस्य छेत्तव्यमष्टसहस्रं वा दण्डो-
ऽन्यत्र ब्राह्मणाद्दण्ड्यो हि ब्राह्मणः ।

येन येनाङ्गेन हस्तादिना, ब्राह्मणवर्ज्जमयं दण्डः सर्व्वेषां, ब्राह्मणवर्ज्जमित्यन्वयात् ।

मनुः ।

परदाराभिमर्षे तु प्रवृत्तान्नृन्महीपतिः ।
उद्वेगजनकैः*र्दण्डैश्चिह्नयित्वा प्रवासयेत् ॥
तत्समुत्थो हि लोकस्य जायते वर्णसङ्करः ।
येन मूलहरोऽधर्म्मः सर्व्वनाशाय कल्पते ॥
अब्राह्मणः सग्रहणे प्राणान्तं दण्डमर्हति ।
चतुर्णामपि वर्णानां दारा रक्ष्यतमाः स्मृताः ॥

अब्राह्मणः सग्रहणे प्रातिलोम्येनेति शेषः ।

इति विवादरत्नाकरे सग्रहणतरङ्गः ।

---

## अथाभिगमदण्डः ।

तत्र बृहस्पतिः ।

सहसा कामयेद्यस्तु धनं तस्याखिलं हरेत् ।
उत्कृत्य लिङ्गवृषणौ भ्रामयेद्गर्दभेन तु ॥

---

* उद्वेगजनकैरिति पाठान्तरम् ।

छद्मना कामयेद्यस्तु तस्य सर्व्वहरोदमः ।
अङ्कयित्वा भगाङ्केन पुरान्निर्वासयेत्ततः* ॥
दमोऽन्तिमः समायान्तु हीनायामर्द्धिकस्ततः ।
पुंसः कार्य्योऽधिकायान्तु गमने सम्प्रमापणम् ॥

यः सहसा बलेन परस्त्रियमनिच्छन्तीमेवाभिगच्छति, तस्य सर्व्वस्वं गृहीत्वा लिङ्गवृषणौ छित्वा गर्द्दभेन पुरपरिभ्रामणं† दण्डः । यस्तु छद्मना छलेन परस्त्रियमनिच्छन्तीमेवाभिगच्छति, तस्य सर्वस्वमादाय भगाङ्केनाङ्कयित्वा पुरान्निर्वासनं दण्डः । यस्तु बलच्छले विहाय दूतादिप्रेषणद्वारा समानजातीयां परस्त्रियं गच्छति, तस्यान्तिमः उत्तमोदण्डः, हीनायान्तु बलच्छले विहाय गच्छतो मध्यमो दण्डः । उत्कृष्टजातीयान्तु दूतादिप्रेषणद्वारा बलच्छलाभ्यां वा गच्छतो मारणमेवेत्यर्थः‡ ।

आपस्तम्बः ।

सन्निपाते वृत्ते शिश्नस्य छेदनं सवृषणस्य ।

सन्निपाते अभिगमे ।

कात्यायनः ।

स्त्रीषु वृत्तोपयोगः स्यात्प्रसह्य पुरुषो यदा ।
वधस्तत्र प्रवर्त्तेत कार्य्यातिक्रमणं हि तत् ॥

---

* पुनर्निर्वासयेत्तत इति पाठान्तरम् ।

† खरपरिभ्रामणमिति पाठान्तरम् ।

‡ मारणपरमवत्यर्थं इति पाठान्तरम् ।

स्त्रीषु उत्कृष्टजातीयासु वृत्तोपयोगः जाताभिगमः, प्रसह्य हठेन ।

याज्ञवल्क्यः ।

सजातावुत्तमो दण्ड आनुलोम्ये तु मध्यमः ।
प्रतिलोम्ये वधः पुंसो नार्य्याः कर्णादिकर्त्तनम् ॥

कर्णादीत्यादिशब्दः केशादिपरः । एवञ्च पुंसः कार्य्योऽधिकायामिति बृहस्पतिवाक्येऽपि स्त्रीकर्णादिसहितमेव प्रमापणं द्रष्टव्यम् ।

विष्णुः ।

पारजायी सवर्णागमने तूत्तमसाहसं दण्ड्यः हीनवर्णागमने मध्यमं गोगमने चान्त्यागमने च वधः उत्तमागमने* च ।

अन्त्यागमने अस्पृश्याभिगमने, पारजायी पारदारिकः ।

शङ्खलिखितौ ।

अनिवेदितप्रवेशे तत्रोत्तममुत्तमायां, विपर्य्यये मध्यमसाहसं, प्रतिलोमैकान्तरावस्कन्दने सर्व्वस्वं वधो वा, विपर्य्यये सन्निरोधः सर्व्वस्वं वा ।

अनिवेद्य स्त्रीगृहं प्रविश्य उत्तमां ब्राह्मणस्त्रियमभिगच्छतो ब्राह्मणस्योत्तमसाहसो दण्डः । विपर्य्यये ब्राह्मणस्य क्षत्रियादिगमने मध्यमसाहसो दण्डः । प्रतिलोमैकान्तरावस्कन्दने प्रतिलोमस्य शूद्रादेरेकान्तरितद्विजातिस्त्रीगमने वधः सर्व्व-

* पशुमात्राभिगमने इति पाठान्तरम् ।

स्वापहारसहितो दण्डः। वाशब्दः समुच्चये। आर्य्यस्त्रीगमने लिङ्गोद्धारः* सर्व्वस्वहरणञ्च, गुप्ता चेदधोऽधिक इति गौतमवचनात्। विपर्य्यये सन्निरोधः, ब्राह्मण्यामगुप्तस्त्रीगमने वैश्यस्य संवत्सरं बन्धनागारे तिरोहितस्य सर्व्वस्वापहारो दण्डः। वैश्ये सर्व्वस्वदण्डः स्यात्संवत्सरनिरोधतः† इति मनुवचनादिति लक्ष्मीधरेण व्याख्यातम्। हलायुधस्तु यो हीनजातिरुत्तमजातीयस्त्रीगृहमनिवेद्य प्रविशति, तदासौ दुष्टत्वमुपनीय‡ उत्तमसाहसं दण्ड्यः। यदि तूत्तमजातीय एव हीनजातीयायाः पूर्व्ववद्गृहं प्रविशति, तदासौ मध्यमसाहसं दण्ड्यः। यदि तु प्रतिलोमो हीनः एकान्तरितामुत्तमजातीयां स्त्रियमभिगच्छति, यथा ब्राह्मणीं वैश्यः क्षत्रियः शूद्रां§, तदा तस्य सन्निरोधो बन्धनं सर्व्वस्वहरणं वा अपराधमहत्त्वामहत्त्वाभ्यां व्यवस्थाकार्य्यम्। संवत्सरनिरोधितस्य सर्व्वस्वापहरणं दण्डो वैश्ये। वैश्ये सर्व्वस्वदण्डः स्यादिति मनुवचनात्।

पुंसां सन्दाहयेत्पापं शयने तप्तआयसे।

इति गमनाधिकारे मनुः।

---

* लिङ्गच्छेद इति पाठान्तरम्।

† निरोधित इति पाठान्तरम्।

‡ सर्व्वस्वमुपनीयेति पाठान्तरम्।

§ विभेद पुस्तकेषु पाठ, यथा ब्राह्मणी वैश्यं, क्षत्रिया शूद्र इति पाठ सङ्गच्छते इति द्रष्टव्यम्।

अभ्यादध्युश्च काष्ठानि यत्र दह्येत पापकृत् ॥

अभ्यादध्युः परितः क्षिपेयुः । वध्यघातिन इत्यर्थः* ।

नारदः ।

माता मातृष्वसा श्वश्रूर्मातुलानी पितृष्वसा ।
पितृव्यसखिशिष्यस्त्री भगिनी तत्सखी स्नुषा ॥
दुहिताचार्य्यभार्य्या च सगोत्रा शरणागता ।
राज्ञी प्रव्रजिता साध्वी धात्री वर्णोत्तमा च या ॥
आसामन्यतमां गत्वा गुरुतल्पग उच्यते ।
शिश्नस्योत्कर्त्तनात्तत्र नान्यो दण्डो विधीयते ॥

मातात्र जननीव्यतिरिक्ता पितृपत्नी, गुप्ताविषयमेतत् ।

याज्ञवल्क्यः ।

पितुः स्वसारं मातुश्च मातुलानीं स्नुषामपि ।
आचार्य्यपत्नीं स्वसुतां गच्छंस्तु गुरुतल्पगः ॥
छित्त्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा ।

सकामाया इति उक्तानां मध्ये या स्त्री यथोक्तं प्रतियोगिनं कामयते, तस्या अपि लिङ्गच्छेदपूर्व्वको वधो दण्डः ।

व्यासः ।

गुप्तायाः संग्रहे दण्डो यथोक्तः परिकीर्त्तितः ।
इच्छन्त्यामागतायान्तु गच्छतोऽर्द्धदमः स्मृतः ।

यथोक्त उत्तमसाहसरूपः । एष त्वर्द्धदण्डः क्लीवादिभार्य्याव्यतिरिक्तासु, क्लीवादिभार्य्यासु दण्डाभावोक्तेः ।

---

* इति शेष इति पाठः चण्डेश्वरे ।

मनुः।

सहस्रं ब्राह्मणो दण्ड्यो गुप्तां विप्रां बलाद्व्रजन्।
शतानि पञ्च दण्ड्यः स्यादिच्छन्त्या सह सङ्गतः॥
मौण्ड्यं प्राणान्तिको दण्डो ब्राह्मणस्य विधीयते।
इतरेषान्तु वर्णानां दण्डः प्राणान्तिको भवेत्॥
वैश्यश्चेत्क्षत्रियां गुप्तां वैश्यां या क्षत्रियो व्रजन्।
यो ब्राह्मणामगुप्तायां तावमं दण्डमर्हतः॥
सहस्रं ब्राह्मणो दण्डं दाप्यो गुप्ते तु ते व्रजन्।
शूद्रायां क्षत्रियविशोः साहस्रो* वै भवेद्दमः॥

मौण्ड्यमिति यत्राभिगमने प्राणान्तिको दण्ड उक्तः, तत्र ब्राह्मणस्य शिरोमुण्डनमेव† दण्डः, दण्डमर्हत इत्यत्र दण्डोमध्यमसाहसः।

आपस्तम्बः।

नाश्य आर्य्यः‡ शूद्रायाम्।

आर्य्यो ब्राह्मणादि, नाश्यो निर्व्वासः। बृहस्पतेर्हीनाया-मर्द्धिकस्तत इति वाक्ये अन्यपूर्व्वा शूद्रा विवक्षिता, इह त्वनन्यपूर्व्वा, तेन न निर्व्वासदण्डविधिविरोध इति, शूद्राया-मनन्यपूर्व्वायामिति विशेषयतः कल्पतरुकारस्याभिप्रायः। शूद्राव्यतिरिक्तहीनविषयमेव बृहस्पतिवाक्यमित्यन्ये।

* साहस इति पाठान्तरम्।

† मुण्डनमेवेति पाठान्तरम्।

‡ आर्य्यवति पाठान्तरम्।

मनुः ।

अगुप्ते चत्रियावैश्ये शूद्रां वा ब्राह्मणो व्रजन् ।
शतानि पञ्च दण्ड्यः स्यात्सहस्रन्त्वन्त्यजस्त्रियम् ॥
संवत्सराभिशस्तस्य दुष्टस्य द्विगुणो दमः ।
व्रात्यया सह संवासे चाण्डाल्या तावदेव तु ॥

चत्रियावैश्ये इति द्वितीयाद्विवचनम्, अन्त्यजस्त्री रजकादिस्त्री । एवञ्चान्त्यागमने वधोक्तिर्ब्राह्मणव्यतिरिक्तविषया, संवत्सराभिशस्तस्येति यत्राभिगमे यो दण्ड उक्तः, संवत्सरव्यापकर्यत् तन्मूलो* दण्डो द्विगुणो ग्राह्यः । एवञ्च समयाधिक्यमादायैव तदनुसारेणेति† परमार्थः । तथा व्रात्यया सह संवासे चाण्डाल्या तावदेव तु । व्रात्या धर्मभ्रष्टाचारा अवसन्नकर्म्मधर्म्मा‡ च व्रात्येति हारीतोक्तिः । हलायुधस्तु व्रात्यातिक्रान्तविवाहकाला कन्येत्याह ।

याज्ञवल्क्यः ।

अन्त्याभिगमने लङ्ककबन्धेन प्रवासयेत् ।
शूद्रस्तथाङ्क्य एव स्यादन्त्यस्यार्य्यागमे वधः ॥

अङ्ककबन्धः अशिरस्कपुरुषाकारपुरुषाङ्कः§ तेनाङ्कयित्वा त्रैवर्णिकं निर्व्वासयेत् । तथा शूद्रोऽङ्क्य एव स्यात्, एवकारेण प्रवासन-

---

* तदुक्त इति पाठान्तरम् ।

† तदनुसारेण दण्ड इति पाठान्तरम् ।

‡ अवसन्नकर्म्मधर्म्माचारेति पाठान्तरम् ।

§ भङ्ग कबन्धय अशिरस्कपुरुषाकारपुंसोऽङ्क इति पाठान्तरम् ।

मात्रनिषेधः। तेनान्त्याभिगमे वधोक्तेरविरोधः। अन्त्यस्यार्य्यागमे वधः। आर्य्या त्रैवर्णिकस्त्री, तदभिगमे, अन्त्यश्चाण्डालो वध्य इत्यर्थः। पारिजाते तु शूद्रस्तथान्त्य एव स्यादिति पठितं व्याख्यातञ्च अन्त्य एव स्यान्न पुनः शूद्रेषु प्रवेश्य इति। अत्राविरोधो व्यक्त एव।

बौधायनः।

शूद्रं कटाग्निना दहेत्।

द्विजस्त्रीगमन इति शेषः, कटो वीरणः*।

शूद्रस्येत्यनुवृत्तौ गौतमः।

आर्य्यस्त्रीगमने लिङ्गोद्धारः सर्व्वस्वहरणञ्च, गुप्ता चेद्वधोऽधिकः।

आर्य्यस्त्री त्रैवर्णिकस्त्री।

आपस्तम्बः।

वध्यः शूद्र आर्य्यायां दारांश्चास्य चाकर्षयेत्†।

ब्राह्मणीगन्तारमित्यनुवृत्तौ‡ यमः।

शूद्रन्तु घातयेद्राजा शयने तत्रशायने।

दहेत्पापकृतं तत्र काष्ठैः पर्णैस्तृणैस्तथा॥

मनुः।

शूद्रो गुप्तमगुप्तं वा द्वैजातं वर्णमावसन्।

---

* वीरणमूलमिति पाठान्तरम्।

† वध्य शूद्र आर्य्यायां दारांश्चेन्नकर्षेदिति पाठान्तरम्।

‡ ब्राह्मणी वृषल सेवत इत्यनुवृत्ताविति पाठस्तु प्रामादिक इति ध्येयम्।

अगुप्तैकाङ्गसर्व्वस्वी गुप्ते सर्व्वेण हीयते ॥
वैश्यः सर्व्वस्वदण्डः स्यात्संवत्सरनिरोधितः ।
सहस्रं चत्रियो दण्ड्यो मौण्ड्यं मूत्रेण चार्हति ॥
ब्राह्मणीं यद्यगुप्तान्तु सेवेयातामिति स्थितिः ।
गुप्तां चेच्छूद्रवद्दण्ड्यौ दग्धव्यौ वा कटाग्निना ॥

द्वैजातं वर्ण्यं द्विजस्त्रियमावसन्नभिगच्छन्नगुप्तैकाङ्गसर्व्वस्वी अगुप्तायामेकाङ्गेन* सर्व्वस्वेन च हीयते। सर्व्वेण अङ्गेन सर्व्वस्वेन च। अगुप्तब्राह्मणीगमने वैश्यः संवत्सरं बद्धा सर्व्वस्वेन† दण्ड्यः, चत्रियस्तु सहस्रं दण्ड्यो मूत्रेण शिरोऽभिषिच्य मुण्डनीयश्च। गुप्ताचेदिति, रचितां ब्राह्मणीं गच्छतो वैश्यचत्रिययोः शूद्रवद्दण्डो दाहो वा कटाग्निना।

तथा।

चत्रियायामगुप्तायां वैश्ये पञ्चशतो दमः।
मूत्रेण मौण्ड्यमिच्छेत्तु चत्रियो दण्डमेव वा ॥

यदि चत्रियः परचत्रियामगुप्तां सङ्गच्छेत्तदा मूत्रेण मौण्ड्यं, यद्वा वैश्यवत्पञ्चशतं पणान्दण्ड्य एव। लक्ष्मीधरेण तु दण्डमेवेति स्थाने मौण्ड्यमेवेति पठितम्।

हारीतः।

श्रेयसः शयनशायिनं राजा बद्धा श्वभिः खादयेत्, काष्ठैर्वेनां दहेत्।

---

* एकमाङ्गेनेति पाठान्तरम्।

† संवत्सरनिरोधेन सर्व्वस्वेन चेति पाठान्तरम्।

न्येयस उत्कृष्टवर्णस्य शयनशायिनं स्त्रीगामिनम्। एनामुत्कृष्टवर्णस्त्रियम्*।

गौतमः।

श्वभिः खादयेद्राजा हीनवर्णगमने स्त्रियं प्रकाशं पुमांसं घातयेद्यथोक्तं वा।

यथोक्तमिति, पुंसोऽपि वा श्वभिः खादनम्। यथोक्तं लिङ्गोद्धारः सर्व्वस्वहरणञ्चेति पारिजातः।

वशिष्ठः।

शूद्रश्चेद्ब्राह्मणीं गच्छेद्वीरणैर्वेष्टयित्वा† शूद्रमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कृत्वा‡ सर्पिषाभ्युक्ष्य§ नग्नां खरमारोप्य महापथं व्राजयेत्¶। पूता भवतीति विज्ञायते। वैश्यश्चेद्ब्राह्मणीं गच्छेल्लोहितदर्भैर्वेष्टयित्वा‖ वैश्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्यज्य** नग्नां खरमारोप्य महापथमनुव्राजयेत्††। पूता भवतीति विज्ञायते।

---

* उत्कृष्टवर्णां स्त्रियमिति पाठान्तरम्।

† वीरणदलैर्वेष्टयित्वेति पाठान्तरम्।

‡ कारयित्वेति पाठान्तरम्।

§ सर्पिषाभ्युक्षणमिति सर्पिषाभ्यज्येति च पाठान्तरम्।

¶ अनुव्राजयेदिति पाठान्तरम्।

‖ लोहितदलैर्वेष्टयित्वेति लोहितदर्भैर्वेष्टयित्वेति च पाठान्तरम्।

** सर्पिषाभ्युक्ष्येति पाठान्तरम्।

†† प्रव्राजयेदिति व्राजयेदिति च पाठान्तरम्।

राजन्यश्चेद्ब्राह्मणीमभिगच्छेच्छरपत्रैर्वेष्टयित्वा राजन्यमग्नौ प्रास्येद्ब्राह्मण्याः शिरसि वापनं कृत्वा सर्पिषाभ्यज्य नग्नां खरमारोप्य महापथमनुव्राजयेत्। पूता भवतीति विज्ञायते। एवं वैश्यो राजन्यायां मैथुनमाचरन्। शूद्रस्तु राजन्यावैश्ययोः।

यमः।

वृषलं सेवते या तु ब्राह्मणी मदमोहिता।
तां श्वभिः खादयेद्राजा संस्थाने वध्यघातिनाम्॥
वैश्यं वा क्षत्रियं वापि ब्राह्मणी सेवते तु या।
शिरसो मुण्डनं तस्याः प्रयाणं* गर्द्दभेन तु॥

वध्यघातिनां संस्थाने, वध्यान्ये घातयन्ति चाण्डालादयः, तैरधिष्ठिते देशे।

गृहमागत्य या नारी प्रलोभ्य स्पर्शनादिना।
कामयेत्तत्र सा दण्ड्या† नरस्यार्द्धदमः स्मृतः॥
छिन्ननासौष्ठकर्णान्तां परिभ्राम्याप्सु‡ मज्जयेत्§।
खादयेत्सारमेयैर्वा संस्थाने बहुसंस्थिते॥

तत्र सा दण्ड्या¶ यः स्त्रियं प्रलोभ्य सङ्गच्छेत, पुरुषस्य दण्डः,

---

* प्रापणमिति पाठान्तरम्।

† स दण्ड इति पाठान्तरम्।

‡ परिभ्राम्यामुिति पाठान्तरम्।

§ मर्षयेदिति पाठान्तरम्।

¶ स दण्ड इति पाठान्तरम्।

तेन दण्ड्यः* तद्दण्डार्द्धः पुरुषस्य। छित्वेत्यादिना तस्या एवाधिको† वैकल्पिक उक्तः। बहुसंस्थिते बहुभिराकीर्णे‡।

मनुः।

भर्त्तारं लङ्घयेद्या तु ज्ञातिस्त्रीगुणदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥

लङ्घयेत्पतिमवज्ञाय पुरुषान्तरं गच्छेत्, ज्ञातिस्त्रीगुणदर्पिता ज्ञातिभिः स्त्रीगुणेन सौन्दर्य्यादिना तुच्छीकृता§।

हन्यादित्यनुवृत्तौ विष्णुः।

स्त्रियमवशक्तभर्त्तृकाञ्च तदतिक्रामणीञ्च।

अवशक्तभर्त्तृकामनुपयुक्तभर्त्तृकां तदतिक्रामणीं अन्यपुरुषगामिनीं, मिलितमिदं हननिमित्तम्।

याज्ञवल्क्यः।

छित्वा लिङ्गं वधस्तस्य सकामायाः स्त्रियास्तथा‖।

---

* दण्ड इति पाठान्तरम्।

† तस्यामेवाधिक इति पाठान्तरम्।

‡ बह्वाकीर्णे इति पाठान्तरम्।

§ कृभीकृतेति पाठान्तरम्।

"भर्त्तारं लङ्घयेद्या तु स्त्री ज्ञातिगुणदर्पिता।
तां श्वभिः खादयेद्राजा संस्थाने बहुसंस्थिते॥"

या स्त्री प्रबलधनिकपित्रादिबान्धवदर्पेण सौन्दर्य्यादिगुणदर्पेण वा पतिं पुरुषान्तरोपगमनाल्लङ्घयेत्तां राजा बहुजनाकीर्णे देशे श्वभिर्भक्षयदिति कुल्लूकभट्टः।

¶ अनुपयुक्तकर्त्तृकामिति अवशक्तभर्त्तृकामिति अनुपयुक्तभर्त्तृकामिति च पाठान्तरम्।

‖ स्त्रिया अपीति पाठान्तरम्।

बृहस्पतिः ।

अनिच्छन्ती तु या भुक्ता गुप्तां तां वासयेद्गृहे* ।
मलिनाङ्गीमधःशय्यां पिण्डमात्रोपजीविनीम् ॥
कारयेन्निष्कृतिं कृच्छ्रं पराकं वा समे गताम् ।
हीनवर्णोपभुक्ता या त्याज्या वध्या च सा भवेत् ॥

समे गतां समवर्णे पुरुषे सङ्गताम् ।

कात्यायनः ।

न सतन्त्राः स्त्रियो ग्राह्याः पुमांस्तत्रापराध्यति ।
प्रभुणा शासनीयास्ता राजा तु पुरुषं नयेत् ॥

सतन्त्राः सस्वामिकाः स्त्रियो राज्ञा न ग्राह्या न कर्षणीयाः, राजा तु पुरुषं नयेत्स्त्रीस्वामिनं पुरुषं प्रापयेत् । स्वामिद्वारेव तद्दण्डो ग्राह्य इति तात्पर्य्यम् ।

तथा ।

प्रोषितस्वामिका नारी प्रापिता यद्यभिग्रहे ।
तावत्सा बन्धने स्थाप्या यावत्स्यादागतः प्रभुः ॥

अभिग्रहे अभिसारनिमित्तग्रहे सति राजपुरुषैर्यदि राजगृहं नीता ।

मत्स्यपुराणे ।

बलात्सन्दूषयेद्यस्तु परभार्य्यां नरः† क्वचित् ।
वधदण्डो भवेत्तस्य नापराधो भवेत्स्त्रियाः ॥

---

* गृहेति पाठान्तरम् ।

† पुनरिति पाठान्तरम् ।

अद्रव्यां मृतपत्नीन्तु* संग्टह्नन्नापराध्नुयात् ।
बलात् परिग्टह्णंस्तु सर्व्वस्वं दण्डमर्हति ॥

इति विवादरत्नाकरे अभिगमदण्डतरङ्गः ।



## अथ कन्यादूषणम् ।

तत्र मनुः ।

योऽकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामां दूषयंस्तुल्यो न वधं प्राप्नुयान्नरः ॥

अकामामनिच्छन्तीं, तुल्योऽभिगम्यजातीयः* ।

मत्स्यपुराणे ।

अकामां दूषयेत्कन्यां स सद्यो वधमर्हति ।
सकामां दूषमाणस्तु† प्राप्तः प्रथमसाहसम् ॥

अत्रापि तुल्यत्वमेव विवचितम् । उत्तमजातीयायां सकामायामपि हीनस्य वधविधानात् ।

सन्निपाते वृत्ते द्व्यनुवृत्ती आपस्तम्बः ।

---

* मृतपत्नीरिति पाठान्तरम् ।

---

* अभिगम्यजातीय इति पाठान्तरम् ।

† दूषयाणस्त्विति पाठान्तरम् ।

कुमार्य्यान्तु स्वान्यादाय नाश्यः ।

स्वानि धनानि आदाय नाश्यो निर्व्वास्यः। एतच्च हीनायामकामायाम् ।

मनुः ।

उत्तमां सेवमानस्तु जघन्यो वधमर्हति ।
शुल्कं दद्यात्सेवमानः समामिच्छेत्समामपि* ॥

उत्तमामिच्छन्तीं, समां सजातीयाम् । शुल्कं उभयसम्मतियम-द्रव्यमासुरविवाहवत् ।

नारदः ।

कन्यायामसकामायां द्व्यङ्गुलस्यावकर्त्तनम् ।
उत्तमायां वधस्त्वेवं सर्व्वस्वहरणं तथा ॥
सकामायान्तु कन्यायां सवर्णेनात्यतिक्रमः ।
किन्त्वलङ्कृत्य सत्कृत्य स एवैनां समुद्वहेत् ॥

द्व्यङ्गुलस्य अङ्गुलिद्वयस्य, अङ्गुलीसाध्यमैथुनविषयमेतत् । येन येनाङ्गेनापराध्नुयात्तत्तदेवास्य छिन्द्यादिति सामान्यप्राप्तत्वादिति पारिजातः ।

शङ्खलिखितौ ।

कन्यायामसकामायां द्व्यङ्गुलच्छेदो दण्डः । उत्तमायां वधो जघन्यस्य । समायां शुल्कमाभरणञ्च द्विगुणं स्त्रीधनं† दत्त्वा प्रतिपादयेत ।

---

* समामिच्छेत्पिता यदीति कुल्लूकभट्टसम्मत पाठः ।

† धनमिति पाठान्तरम् ।

सकामायां दण्डः षट्शतरूपो मनूक्तो ह्यङ्गुलच्छेदसहकारी आसुरविवाहोक्तदानश्च, द्विगुणं स्त्रीधनं शुल्कञ्च कन्यायै तद्बन्धुभ्यश्च दत्त्वा तां गृह्णीयात्, समायामिच्छन्त्यामिति शेषः। इदमप्यङ्गुलिसाध्यमैथुनविषयम्। हरिहरस्तु ह्यङ्गुल-परिमाणलिङ्गच्छेद इत्याह।

मनुः।

अभिषह्य तु यः कन्यां कुर्य्याद्दर्पेण मानवः।
तस्याशु कर्त्त्ये अङ्गुल्यौ दण्डञ्चार्हति* षट्शतम्॥

अभिषह्य अभिभूय, कुर्य्याद्दूषयेत्, कर्त्त्ये छेद्ये।

तथा।

सकामां दूषमाणस्तु† नाङ्गुलिच्छेदमाप्नुयात्।
द्विशतन्तु दमं दाप्यः प्रसङ्गविनिवृत्तये॥

हीनकन्याविषयमेतत्।

तथा।‡

कन्यैव कन्यां या कुर्य्यात्स्यात्तस्या द्विशतो दमः।§
शुल्कञ्च द्विगुणं दद्याच्छिफाश्चैवाप्नुयाद्दश॥
या कन्यां विप्रकुर्य्यात्स्त्री सद्योऽसौ मौण्ड्यमर्हति।

---

* दमञ्चार्हतीति पाठान्तरम्।

† दूषयाणस्त्विति पाठान्तरम्।

‡ यथेति पाठान्तरम्।

§ कन्यैव कन्यया कुर्य्यात्तस्याः स्याद्विशतो दम इति पाठान्तरम्।

अङ्गुल्योरेव च च्छेदं खरेणोद्वहनं तथा॥

कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्।

जघन्यं सेवमानान्तु संयतां वासयेद्गृहे*॥

द्विगुणं द्विशतापेक्षया, शिफा अत्र जटारज्ज्वादिप्रहाराः। स्त्री कन्यातिरिक्तायोषित्।

याज्ञवल्क्यः।

अलङ्कृतां हरन् कन्यामुत्तमं ह्यन्यथाधमम्।

दण्डं दद्यात्सवर्णासु प्रातिलोम्ये वधः स्मृतः॥

सकामास्वनुलोमासु न दोषस्त्वन्यथा दमः।

दूषणे तु करच्छेद उत्तमायां वधस्तथा॥

अलङ्कृतामन्यस्मै दातुं प्रसाधिताम्। उत्तममुत्तमसाहसम्। अन्यथा अनलङ्कृताम्। अधमं प्रथमसाहसम्। वधो हीनवर्णस्य।

मनुः।

कन्यां भजन्तीमुत्कृष्टं न किञ्चिदपि दापयेत्।

जघन्यं सेवमानान्तु संयतां वासयेद्गृहे॥

सेवमानां मैथुनार्थमनुकूलयन्तीं†, संयतां निरुद्धाम्।

इति विवादरत्नाकरे कन्यादूषणतरङ्गः।

---

* इदं वचनमुपरेव उल्लिखितं व्याख्यातञ्चेत्यत्र प्रमादपतितमिति चिन्त्यम्।

† मादयन्तीमिति पाठान्तरम्।

## अथ बन्धक्याद्यभिगमदण्डः ।

तत्र बन्धक्यधिकारे यमः ।

परदारे सवर्णासु दण्ड्याः स्युः पञ्च कृष्णलान्* ।
असवर्णास्वानुलोम्ये दण्डो द्वादशकः स्मृतः† ॥

परदारे परदारगमने । यवत्रयं कृष्णलः । द्वादशको द्वादशपणः ।

व्यासः ।

बहुभिर्भुक्तपूर्व्वां या गच्छेद्यस्तां नराधमः ।
तस्य वेश्यावदिच्छन्ति दण्डनं न तु दारवत् ॥

कात्यायनः ।

कामार्त्ता स्वैरिणी या तु स्वयमेव प्रकाशयेत्‡ ।
राजादेशेन भोक्तव्या विख्याप्य जनसन्निधौ ॥

नारदः ।

स्वैरिण्यब्राह्मणी वेश्या दासी निष्कामिनी च या ।
गम्याः स्युरानुलोम्येन स्त्रियो न प्रतिलोमतः ॥
आस्वेव तु भुजिष्यासु दोषः स्यात्परदारवत् ।
गम्या अपि हि नोपेया यतस्ताः सपरिग्रहाः ॥

---

* दण्ड्या स्तु पञ्च कृष्णला इति पाठान्तरम् ।

† द्वादशको दम इति पाठान्तरम् ।

‡ प्रकाशयेदिति पाठान्तरम् ।

स्वैरिणी स्ववशा पुंश्चली। अब्राह्मणीति विशेषणेन* क्षत्रिया- घेति यावत्, दासी स्वीया कर्म्मकरी,† निष्कामिनी कुटुम्बि- निर्गता‡ पुंश्चली। गम्याः स्युरिति निषेधमात्रं न तु पाप- निषेधः। भुजिष्यासु अन्येनावरुध्य भुज्यमानासु। सपरिग्रहाः परेणावरुद्धाः।

याज्ञवल्क्यः।

अवरुद्धासु दासीषु भुजिष्यासु तथैव च।
गम्यास्वपि पुमान्दाप्यः पञ्चाशत्पणिकं दमम्॥

अवरुद्धासु दासीषु अन्येनावरुध्य धृता या दास्यः§ तासु अनु- लोमजास्वपि¶।

व्यासः।

परावरुद्धागमने पञ्चाशत्पणिको दमः।
प्रसह्य वेश्यागमने दण्डो दशपणः स्मृतः॥

याज्ञवल्क्यः।

प्रसह्य दास्या गमने दण्डो दशपणः स्मृतः।
बहूनां यद्यकामासौ चतुर्विंशतिकं पृथक्॥
अयोनौ गच्छतो योगामृषभं वापि मेहतः।

---

* तस्या विशेषणमब्राह्मणीति पाठान्तरम्।

† स्वीयकर्म्मकरीति पाठान्तरम्।

‡ कुटुम्बिणीकृतेति पाठान्तरम्।

§ दासी भार्य्यं इति पाठान्तरम्।

¶ अनुलोमजातास्वपीति पाठान्तरम्।

चत्वारिंशत्पणो दण्डस्तथा प्रव्रजितागमे ॥

यदा कामासौ बहुभिर्गम्यते तदा पृथक् पृथक् चतुर्विंशतिपणो दण्डः । अयोनौ पुरुषं सेहतः अतिरागेण पुरुषमभिगच्छतः । प्रव्रजिता शाक्यादिस्त्री तस्या गमे अभिगमे ।

तथा ।

पशून् गच्छञ्छतं दण्ड्यो हीनाङ्गीञ्चैव मध्यमम् ।

हीनाङ्गीं छिन्ननासादिकाम्* ।

विष्णुः ।

पशुगमने कार्षापणशतं दण्डः ।

मत्स्यपुराणे ।

तिर्य्यग्योनौ तु गोवर्जं मैथुनं यो निषेवते ।

स पणं प्राप्नुयाद्दण्डं तस्याथ यवसोदकम् ॥

पणं शतसंख्यम् ।

नारदः ।

पशुयोनावतिक्रामन्विनेयः सदशं शतम् ।

मध्यमं साहसं गोषु तदेवान्त्यावसायिषु ॥

सदशं शतं दशाधिकपणशतम् । सदमं शतमिति लक्ष्मीधरः । तत्र स गन्ता† पणशतं दमं दद्यादिति स्फुट एवार्थः । पूर्व्वं गोगमने वध उक्तः शूद्रस्य, अयन्तु मध्यमसाहसः क्षत्रियवैश्ययोरिति पूर्व्वेण सममविरोधः ।

---

* हीनाङ्गी छिन्ननासादिरिति पाठान्तरम् ।

† तत्र स इति पाठान्तरम् ।

ब्राह्मणं प्रत्याह ।

सुवर्णन्तु भवेद्दण्ड्यो गां व्रजन्ननुजोत्तमः ।
वेश्यागामी द्विजो दण्ड्यो वेश्याशुल्कसमं दमम् ॥

नारदः ।

अगम्यागामिनः शास्तिर्दण्डो राज्ञा* प्रकीर्त्तितः ।
प्रायश्चित्तविधानन्तु पापानां स्याद्विशोधनम् ॥

मनुः ।

यस्य स्तेन पुरे नास्ति नान्यस्त्रीगो न दुष्टवाक् ।
न साहसिकदण्डघ्नौ स राजा शक्रलोकभाक् ॥
एतेषां निग्रहोराज्ञः पञ्चानां विषये स्वके ।
साम्राज्यकृत्सजात्येषु लोके चैव यशस्करः ॥

दुष्टवाक् वाक्पारुष्यकृत्, दण्डघ्नो दण्डेन हन्ता, दण्डपारुष्यकृदिति यावत्, सजात्येषु सजातीयेषु ।

यमः ।

दुष्टाः साहसिकाश्चण्डाः कितवा बाधकास्तथा ।
यस्य राष्ट्रे न सन्तीह स राजा शक्रलोकभाक् ॥

इति विवादरत्नाकरे अभक्ष्यादिगमनदण्डतरङ्गः ।



* राज्ञे इति पाठान्तरम् ।

# अथ स्त्रीपुंधर्म्मः।

यद्यपि स्त्रीपुंसयोरन्योन्यमर्थिप्रत्यर्थिभावेन राजसभायां व्यवहारो निषिद्धः, तथापि प्रत्यक्षेण कर्णाकर्णिकयापि ज्ञाते परस्परविहितवृत्तिव्यतिक्रमे दण्डादिना जायापती निजधर्म्म-मात्रे राज्ञा स्थापनीयौ, अन्यथा दण्डनीयाविति विबोध-यितुं व्यवहाराधिकरणे स्त्रीपुंधर्म्माः प्रदर्श्यन्ते।

तत्र बृहस्पतिः।

एतत्संग्रहणस्योक्तं विधानं संग्रहस्तथा* ।
स्त्रीपुंसवर्त्तनोपायः श्रूयतां गदतो मम ॥

तत्र पुरुषस्य स्त्रियां वृत्तिः। तत्र मनुः।

पुरुषस्य स्त्रियाश्चैव धर्म्मे वर्त्मनि तिष्ठतोः।
संयोगे† विप्रयोगे च धर्म्मान्वक्ष्यामि शाश्वतान् ॥

शाश्वतानवश्यकार्य्यान्।

तथा।

अस्वतन्त्राः स्त्रियः कार्य्याः पुरुषैः स्वैर्दिवानिशम्।
विषयेषु च सज्जन्त्यः संस्थाप्या आत्मनो‡ वशे ॥

सज्जन्त्यः प्रसक्ता भवन्त्यः।

---

* विनयस्तथेति पाठान्तरम्।

† सम्भोगे इति पाठान्तरम्।

‡ ध्यात्मन इति पाठान्तरम्।

नारदः।

स्वातन्त्र्यादि प्रणश्यन्ति कुले जाता अपि स्त्रियः।

अस्वातन्त्र्यमतस्तासां प्रजापतिरकल्पयत्॥

कुले जाताः सत्कुले जाताः*।

मनुः।

पिता रक्षति कौमारे भर्त्ता रक्षति यौवने।

पुत्रास्तु स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥

याज्ञवल्क्यः।

रक्षेत्कन्यां पिता विन्नां पतिः पुत्रास्तु वार्द्धके।

अभावे ज्ञातयस्तेषां न स्वातन्त्र्यं क्वचित्स्त्रियाः॥

विन्नां विवाहिताम्।

हारीतः।

एकव्रतस्त्वस्वभावात् परेन्द्रियोपहतत्वाच्च दुष्टाः कुलसङ्करकारिण्यो भवन्ति, जीवति† जारजः कुण्डो मृते भर्त्तरि गोलकः। तस्माद्रेतोपघाताज्जायां रक्षेत्, जायानाशे कुलनाशः, कुलनाशे तन्तुनाशः, तन्तुनाशे देवपितृयज्ञनाशः, यज्ञनाशे धर्मनाशः, धर्मनाशे आत्मनाशः, आत्मनाशे सर्व्वनाशः।

एकव्रतस्त्वस्वभावादिति एक एव पतिरिति यदयं व्रतनियमः

---

* कुले सत्कुले इति पाठान्तरम्।

† जीवित इति पाठान्तरम्।

तस्य स्त्रतभावात्प्रचलनात्, कुलं गृहं, तन्तुः पुत्रपौत्रादि-सन्ततिः।

मनुः।

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यः स्त्रियो रक्ष्याः प्रयत्नतः।
द्वयोर्हि कुलयोः शोकमावहेयुररक्षिताः॥
इमं हि सर्व्ववर्णानां पश्यन्तो धर्म्ममुत्तमम्।
यतन्ते रक्षितुं भार्य्यां भर्त्तारो दुर्बला अपि॥
स्वां प्रसूतिञ्चरित्रञ्च कुलमात्मानमेव च।
स्वधर्म्मं हि प्रयत्नेन जायां रक्षन् हि रक्षति॥

वर्णसङ्करानन्तरं पैठीनसिः।

तस्माद्रक्षेत भार्य्यां माम्म वर्णसङ्कराभिभवोऽस्त्विन्ताह।
अप्रमत्तो रक्ष तन्तुमेव न वादर्थे क्षेत्रे परवीजानवाप्सुः*
भार्य्यां रक्षन्ति कौमारीं परक्षेतसः।

वृहस्पतिः।

सूक्ष्मेभ्योऽपि प्रसङ्गेभ्यो निवार्य्या स्त्री स्वबन्धुभिः†।
श्वश्र्वादिभिर्गुरुस्त्रीभिः पालनीया दिवानिशम्॥

नारदः।

मृते भर्त्तर्य्यपुत्रायाः पतिपक्षः प्रभुः स्त्रियाः।
विनियोगात्मरक्षासु भरणे च स ईश्वरः॥
परिक्षीणे पतिकुले निर्म्मनुष्ये निराश्रये।

---

* एव मानव क्षेत्रे परवीजानवाप्सुरिति पाठान्तरम्।

† प्रयत्नत इति पाठान्तरम्।

वंशपिण्डेषु चासत्सु पितृपक्षः प्रभुः स्त्रियाः ॥
पक्षद्वयावसाने च राजा भर्त्ता स्मृतः स्त्रियाः ।
स तस्या रक्षणं कुर्य्यान्निगृह्णीयात्पथच्युताम् ॥

मनुः ।

कालेऽदाता पिता वाच्यो वाच्यश्चानुपयन्पतिः ।
मृते भर्त्तरि पुत्रस्तु वाच्यो मातुररक्षिता ॥

बृहस्पतिः ।

अप्रयच्छन् पिता काले पतिश्चानुपयन्नृतौ ।
पुत्रश्चाभक्तदो मातुर्गर्ह्या दण्ड्याश्च धर्म्मतः ॥

मनुः ।

नैता रूपं परीक्षन्ते* नासां वयसि संस्थितिः ।
विरूपं रूपवन्तं वा पुमानित्येव भुञ्जते ॥
पौंश्चल्याच्चलचित्ताच्च नैस्नेह्याच्च स्वभावतः ।
रक्षिता यत्नतोऽपीह भर्तृष्वेता विकुर्व्वते ॥
शय्यासनमलङ्कारं कामं क्रोधमनार्ज्जवम् ।
द्रोहभावं कुचर्य्यां च स्त्रीभ्यो मनुरकल्पयत् ॥
नास्ति स्त्रीणां क्रिया मन्त्रैरिति धर्म्मे व्यवस्थितः ।
निरिन्द्रिया ह्यमन्त्राश्च स्त्रियोऽनृतमिति स्थितिः ॥
तथाहि श्रुतयो बह्व्यो निगीता निगमेष्वपि ।
स्वालक्षण्यपरीक्षार्थं तासां शृणुत निष्कृतिम् ॥
यन्मे माता प्रलुलुभे विचरन्त्यपतिव्रता ।

---

* परीक्षन्ते इति पाठान्तरम् ।

तस्मै रेतः पिता हृत्तामित्यस्यैतन्निदर्शनम् ॥
ध्यायत्यनिष्टं यत्किञ्चित्पाणिग्राहस्य चेतसा ।
तस्येष व्यवहारस्य निह्नवः सम्यगुच्यते ॥
एवं स्वभावं ज्ञात्वासां प्रजापतिनिसर्गजम् ।
परमं यत्नमातिष्ठेत्पुरुषो रक्षणं प्रति ॥

निरिन्द्रिया धैर्य्यप्रतिज्ञादिप्रयोजकेन्द्रियशून्याः । स्त्रियोऽनृतमिति अनृतवाक्यमयत्नेनोपचारः । श्रुतयः श्रुतिवाक्यानि, निगमेषु वेदेषु, स्वालक्षण्यं स्वरूपम् । तासामित्यादि, तासां श्रुतीनां मध्ये या निष्कृतिरूपा मानसव्यभिचारप्रायश्चित्तभूता श्रुतिः, तां शृणुत स्त्रीस्वभावज्ञानार्थमिति शेषः। तामाह, यन्मे मातेति तत्पुरुषलोभजनितपापं, तेनायमर्थः, यन्मे माता प्रलुलुभे परपुरुषलोभवती हृत्ता, तेन जनितं पापं पितुः रेतो हृत्तामपनुदतु । पितेति षष्ठ्यर्थे प्रथमा। प्रजापतिनिसर्गजं प्रजापतिर्ब्रह्मा तदीयनिसर्गे सृष्टिकाले जातम् ।
दक्षः ।

जलौकेव स्त्रियः सर्व्वा भूषणाच्छादनाशनैः ।
संभृतात्याहृता नित्यमाकर्षन्ति हितं नरम्* ॥
जलौका रक्तमादत्ते केवलं सा तपस्विनी ।
इतरा तु धनं वित्तं मांसं वीर्य्यं बलं सुखम् ॥
साशङ्का बालभावे तु यौवनेऽतिसुखी† भवेत् ।

* पुरुष मापकर्षतीति पाठान्तरम् ।
† ऽभिमुखीति पाठान्तरम् ।

तृणवन्मन्यते नारी वृद्धभावे स्वकं पतिम् ॥
स्वकाम्ये* वर्त्तमाना सा स्नेहान्न च निवारिता ।
अपथ्याभिभवेत्पश्चाद्यथा व्याधिरुपेक्षितः ॥

स्वकाम्ये स्वेच्छायाम् । अपथ्या अत्यन्ताहितहेतुः ।

मनुः ।

याद्दृशं भजते हि स्त्री सुतं सूते तथाविधम्† ।
तस्मात्प्रजाविशुद्ध्यर्थं स्त्रियो रक्षेत्प्रयत्नतः ॥

शङ्खलिखितौ ।

यस्मिन् भावोऽर्पितः स्त्रीणामार्त्तवे तच्छीलं पुत्रं जनयन्ति, यथा नीलरूपेण नीलरूपवत्सप्रभवः, श्वेतेन श्वेत एव जायते, एवं योनिरेव बलवती यस्माद्वर्णाः सङ्कीर्य्यन्ते ।

तत इति शेषः ।

रामायणे ।

नैवाङ्गनानां दयितो नापि द्वेष्योऽस्ति कश्चन ।
सर्व्वमेवावलम्बन्ते लता गहनजा इव ॥

महाभारते ।

कुलीना रूपवत्यश्च नाथवत्यश्च योषितः ।
मर्य्यादासु न तिष्ठन्ति दोषश्च स्त्रीषु नारद ॥
अनर्थित्वान्मनुष्याणां भयात्परिजनस्य च ।

---

* स्वकाम्ये इति पाठान्तरम् ।

† सूते पुत्रं तथाविधमिति पाठान्तरम् ।

मर्य्यादायाममर्य्यादाः स्त्रियस्तिष्ठन्ति भर्त्तृषु ॥
यौवने वर्त्तमानानामिष्टाभरणवाससाम्।
नारीणां स्वैरवृत्तीनां स्पृहयन्ति कुलस्त्रियः ॥
यदि पुंसां गतिर्ब्रह्मन्* कथञ्चिन्नोपपद्यते।
अप्यन्योन्यं प्रवर्त्तन्ते न च तिष्ठन्ति भर्त्तृषु ॥
अलाभात्पुरुषाणाञ्च भयात्परिजनस्य च।
वधबन्धभयाच्चैव स्वयं गुप्ता भवन्ति ताः ॥
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।
नान्तकः सर्व्वभूतानां न पुंसां वामलोचना ॥
कामानामपि दातारं दातारं मानसान्त्वयोः।
रक्षितारं न मृष्यन्ति भर्त्तारं यत्नतः स्त्रियः ॥

तस्मात्सर्व्वप्रकारेण रक्ष्याः स्त्रियो न खलु विश्वासः करणीय इति तात्पर्य्यम्।

इति विवादरत्नाकरे स्त्रीपुंधर्म्मतरङ्गः।

---

## अथ स्त्रीरक्षा।

अथ यदि रक्षितारं न मृष्यन्ति कथं ता रक्षणीया इत्याकाङ्क्षायामाह मनुः*।

---

* भद्रेति पाठान्तरम्।

* इत्याकाङ्क्षायां रक्षिणो विधिः। तत्र मनुरिति पाठान्तरम्।

न कश्चिद्योषितः शक्तः प्रसह्य परिरक्षितुम् ।
एतैरुपाययोगैस्तु शक्यास्ताः परिरक्षितुम् ॥
अर्थस्य सङ्ग्रहे चैनां व्यये चैव नियोजयेत् ।
शौचधर्म्मे* च पक्त्याञ्च पारिणाह्यस्य† चेक्षणे ॥
अरक्षिता गृहे रुद्धाः पुरुषैराप्तकारिभिः ।
आत्मानमात्मना यास्तु रक्षेयुस्ताः सुरक्षिताः ॥

पारिणाह्यं कुण्डलकटकादि । आप्ताश्च ते कारिणश्चेति आप्तकारिणः ।

बृहस्पतिः ।

आयव्ययेऽन्नसंस्कारे गृहोपस्कररक्षणे ।
शौचाग्निकार्य्ये संयोज्या रक्षा स्त्रीणामियं स्मृता ॥

मनुः ।

यादृग्गुणेन भर्त्रा स्त्री संयुज्येत यथाविधि ।
तादृग्गुणा सा भवति समुद्रेणेव निम्नगा ॥
अक्षमाला वशिष्ठेन संयुक्ताधमयोनिजा ।
शार्ङ्गी च‡ मन्दपालेन जगामाभ्यर्हणीयताम् ॥
एताश्चान्याश्च लोकेऽस्मिन्नवकृष्टप्रसूतयः ।
उत्कर्षं योषितः प्राप्ताः स्वैः स्वैर्भर्तृगुणैः शुभैः ॥
प्रजनार्थां महाभागाः पूजार्हा गृहदीप्तयः ।

---

* शौचे धर्मे इति पाठान्तरम् ।

† पारिणाय्यस्य इति पाठान्तरम् ।

‡ शार्ङ्गी चेति पाठान्तरम् ।

स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥
उत्पादनमपत्यस्य जातस्य परिपालनम्।
प्रत्यहं लोकयात्रायाः प्रत्यक्षं स्त्रीनिबन्धनम् ॥
प्रत्यहं लोकयात्रायाः निबन्धनं स्त्र्यन्वयः। तस्या एवा-
ग्रेषेण उत्पादनपदं पालनपदञ्च।

तथा।

अपत्यं धर्मकार्य्याणि शुश्रूषा रतिरुत्तमा।
दाराधीनस्तथा स्वर्गः पितॄणामात्मनश्च ह ॥
पतिर्भार्य्यां संप्रविश्य गर्भो भूत्वेह जायते।
जायायास्तद्धि जायात्वं यदस्यां* जायते पुनः ॥

महाभारते।

स्त्रिय एताः श्रियो नाम सत्कार्य्या भूतिमिच्छता।
लालिता निगृहीता स्त्री लक्ष्मीर्भवति भारत ॥

पूजार्हताहेतुमाह मनुः।

यत्र नार्य्यस्तु पूज्यन्ते रमन्ते तत्र देवताः।
यत्रैता न प्रपूज्यन्ते सर्व्वास्तत्राफलाः क्रियाः ॥
शोचन्ति जामयो यत्र प्रणश्यत्याशु तत्कुलम्।
न शोचन्ति तु यत्रैता वर्द्धते तद्धि सर्व्वदा ॥
जामयो यानि गेहानि शपन्त्यप्रपूजिताः।
तानि कृत्याहतानीव विनश्यन्ति समन्ततः ॥

---

* पुरुष इति पाठान्तरम्।

तस्मादेताः समभ्यर्च्या भूषणाच्छादनाशनैः ।
भूतिकामैर्नरैर्नित्यं सत्कारेणोत्सवेन च ॥

यामयः कुलस्त्रियः भगिनीस्नुषाद्याः ।

याज्ञवल्क्यः ।

भर्तृभ्रातृपितृज्ञातिश्वश्रूश्वशुरदेवरैः ।
बन्धुभिश्च स्त्रियः पूज्या भूषणाच्छादनाशनैः ।

तथा ।

दौहृदस्याप्रदानेन गर्भो दोषमवाप्नुयात् ।
वैरूप्यं मरणं वापि तस्मात्कार्यं प्रियं स्त्रियाः ॥

मनुः ।

विधाय वृत्तिं भार्यायाः प्रवसेत्कार्यवान्नरः ।
अवृत्तिकर्षिता हि स्त्री प्रदुष्येत्स्थितिमत्यपि ॥
देवदत्तां पतिर्भार्यां विन्दते* नेच्छयात्मनः ।
तां साध्वीं बिभृयान्नित्यं देवानां प्रियमाचरन् ॥
प्रजनार्थं स्त्रियः सृष्टाः सन्तानार्थञ्च मानवाः ।
तस्मात्साधारणोधर्म्मः श्रुतौ पत्न्या सहोदितः ॥

स्थितिमती शीलादिसम्पत्तिमती । प्रजनशब्दोऽत्र गर्भग्रहणपरः† । सन्तानशब्दो गर्भाधाने ।

तथा ।

---

* विन्देतेति पाठान्तरम् ।

† गर्भग्रहणपरेति पाठान्तरम् ।

यदि स्युः सावराश्चैव* विन्देरन्योषितो द्विजाः।
तासां वर्णक्रमेणैव† ज्यैष्ठ्यं पूजा च वेश्म च॥
भर्त्तुः शरीरशुश्रूषां धर्म्मकार्य्यञ्च नैत्यकम्‡।
सा स्वैव कुर्य्यात्सर्व्वासां नान्यजातिः कथञ्चन॥
यस्तु तत्कारयेन्मोहात्सजात्या स्थितयान्यया।
यथा ब्राह्मणचाण्डालः पूर्व्वदृष्टस्तथैव सः॥

स्वाः स्वजातीयाः, स्वावराः स्वविजातीयाः।

याज्ञवल्क्यः।

सत्यामन्यां सवर्णायां धर्म्मकर्म्म न कारयेत्।
सवर्णासु विधौ धर्म्मे ज्येष्ठया न विनेतराः॥

सत्यामन्यां सवर्णायां धर्म्मकार्य्यं न कारयेत्। यदि तु सवर्णा अनेकाः, तदा ज्येष्ठया विना इतरा न कारयेत्, तेन ज्येष्ठैव विद्यमाना कार्य्येषु पुरस्कार्य्येत्यर्थः।

विष्णुः।

सवर्णासु बह्वीषु§ भार्य्यासु विद्यमानासु ज्येष्ठयैव सह धर्म्मकार्य्यं कुर्य्यात्, मिश्रासु कनिष्ठयापि सवर्णया, अभावे त्वनन्तरयैव, नत्वेव द्विजः शूद्रया।

छन्दोगपरिशिष्टे कात्यायनः।

---

* स्याच परादैवेति पाठान्तरम्।

† वर्णक्रमेण स्यादिति पाठान्तरम्।

‡ नैत्यकमिति नैत्यकर्मेति च पाठान्तरम्।

§ बहुष्विति पाठान्तरम्।

अग्निशिष्टादिशुश्रूषां बहुभार्य्यः सवर्णया ।
कारयेत्तद्बहुत्वेचेज्ज्येष्ठया गर्हिता न चेत् ॥
या वा स्याद्वीरसूरेषामाज्ञासम्पादिनी* प्रिया ।
दक्षा प्रियंवदा शुद्धा तामत्र विनियोजयेत् ॥
दिनक्रमेण वा कर्म्म यथाज्येष्ठं स्वशक्तितः ।
विभज्य सह वा कुर्य्युर्यथाज्ञानमशाख्यवत्† ॥
स्त्रीणां सौभाग्यतो ज्येष्ठा विद्ययैव‡ द्विजन्मनाम् ।
न हि स्वल्पेन तपसा भर्त्ता तुष्यति योषिताम् ॥
भर्त्तुरादेशवर्त्तिन्या योषया§ बहुभिर्व्रतैः ।
अग्निः शुश्रूषितो यत्र¶ सा स्त्री सौभाग्यमाप्नुयात् ॥

तद्बहुत्वेचेदगर्हिता यदि ज्येष्ठा, तदा तया धर्म्मकार्य्यं कारयेत्। यदि तु ज्येष्ठा गर्हिता, तदानेकासु सवर्णासु अनध्यवसाये या स्याद्वीरसूरित्यादिनाध्यवसाय‖ कार्य्यमित्यर्थः ।

दक्षः ।

प्रथमा धर्म्मपत्नी तु द्वितीया रतिवर्द्धिनी ।

---

* वीरसूरेषामिति त्रिषु पुस्तकेषु पाठः, परं वीरसूरानामिति पाठः समीचीन भवतीति द्रष्टव्यम् ।

† यथाध्यवदिति पाठान्तरम् ।

‡ विदधतीति पाठान्तरम् ।

§ यातयति पाठान्तरम् ।

¶ यत्रेति पाठान्तरम् ।

‖ वीरसूरित्यादिनेति पाठान्तरम् ।

दृष्टमेव फलं तत्र नादृष्टमुपपद्यते ।
धर्म्मपत्नी समाख्याता निर्दोषा यदि सा भवेत् ।
दोषे सति न दोषः स्यादन्या कार्य्या गुणान्विता ॥

शूद्रा प्रक्षता मनुविष्णू ।

दैवपित्रतिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तन्न च स्वर्गञ्च गच्छति ॥

शूद्राप्रधानानि यस्य दैवपित्रतिथेयानि, तदन्नानि नाश्नन्ति पितृदेवाः, न च स्वर्गं स गच्छतीत्यर्थः ।

अथ मनुः ।

सन्तुष्टो भार्य्यया भर्त्ता भर्त्रा भार्य्या तथैव च ।
यस्मिन्नेव* कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥
यदि हि स्त्री न रोचेत पुमांसं न प्रमोदयेत् ।
अप्रमोदात्पुनः पुंसः प्रजनं न प्रवर्त्तते ॥
स्त्रियान्तु रोचमानायां सर्व्वं तद्रोचते कुलम् ।
तस्यामरोचमानायां सर्व्वमेव न रोचते ॥
अन्योन्यस्याव्यभिचारो भवेदामरणान्तिकः ।
एष धर्म्मः समासेन ज्ञेयः स्त्रीपुंसयोः परः ॥
तथा नित्यं यतेयातां स्त्रीपुंसौ च कृतक्रियौ ।
यथा नाभिचरेतां तौ विमुक्तावितरेतरम्† ॥

---

* यस्मिन्नेतन्निति पाठान्तरम् ।

† वियुक्तावितरेतरमिति पाठान्तरम् ।

याज्ञवल्क्यः ।

यत्रानुकूलं दम्पत्योस्त्रिवर्गस्तत्र वर्द्धते ।

दक्षः ।

गृहवासः सुखार्थो हि पत्नीमूलञ्च* तत्सुखम् ।
सा पत्नी या विनीता तु चित्तज्ञा वशवर्त्तिनी† ॥
अनुकूला त्ववाग्दुष्टा दक्षा साध्वी प्रजावती ।
एभिरेव गुणैर्युक्ता श्रीरेव स्त्री न संशयः ॥
प्रहृष्टमानसा‡ नित्यं स्थानमानविचक्षणा§ ।
भर्त्तुः प्रीतिकरी¶ या तु सा भार्य्या इतरा जरा ॥

व्यासः ।

पूर्व्वोत्थानपरा दक्षा जघन्यासनशायिनी ।
अवाग्दुष्टानुकूला स्त्री भवेद्वै पुण्यकर्म्मिणः‖ ॥

अथ दक्षः ।

दुःखासिका कलिर्द्वैधमच्छिद्रं** पीड़ा परस्परम् ।
प्रतिकूलकलत्रस्य द्विदारस्य न संशयः ॥

---

* पराधीनञ्चेति पत्नीसुखञ्चेति पाठान्तरम् ।

† तथाश्रवशवर्त्तिनीति पाठान्तरम् ।

‡ प्रहृष्टमानसेति पाठान्तरम् ।

§ स्थानयानविचक्षणेति पाठान्तरम् ।

¶ प्रीतिकरीति पाठान्तरम् ।

‖ पुण्यकर्मण इति पाठान्तरम् ।

** कलिर्द्वैधमच्छिद्रमिति पाठान्तरम् ।

मनुः।

संवत्सरमुदीक्षेत द्विषन्तीं* योषितं पतिः।
ऊर्द्धं संवत्सरादेनां दयां हृत्वा न संवसेत्॥
अतिक्रामेत्प्रमत्तं वा मत्तं रोगार्त्तमेव वा।
सा त्रीन्मासान्† परित्याज्या विभूषणपरिच्छदा॥
उन्मत्तं पतितं क्लीवमवीजं पापरोगिणम्।
न तं द्विषन्त्यास्त्यागोऽस्ति‡ न च दायापवर्त्तनम्॥

अथ नारदः।

अनुकूलामवाग्दुष्टां दक्षां साध्वीं प्रजावतीम्§।
त्यजन् भार्य्यामवस्थाप्यो राज्ञा दण्डेन भूयसा॥

चौरवद्दण्ड्य इत्यनुवृत्तौ विष्णुः।

निर्दोषां परित्यजन् पत्नीञ्च¶।

देवलः।

स्वदारांस्त्यजतो मोहान्नरस्यान्यायमोचिनः।
धर्म्मवंशपरित्यक्तुर्निष्कृतिर्न विधीयते॥
कुष्ठिनीं पतितां बन्ध्यामुन्मत्तां पतितातुराम्‖।

---

* द्विषतीमिति पाठान्तरम्।

† स्त्री पुंसेति पाठान्तरम्।

‡ न तत्र दोषस्त्यागेऽस्तीति पाठान्तरम्।

§ पतिव्रतामिति पाठान्तरम्।

¶ पत्नीमिति पाठान्तरम्।

‖ पतितार्त्तवामिति पाठान्तरम्।

अनिष्टां न लभेद्भार्य्यां* तीर्थात्तनीचकर्म्मणः ॥

अन्यायमोचिनोऽन्यायेन मोक्तुः । तीर्थायोनितः । कर्म्मणः तदुचितनीचव्यापारात्† ।

नारदः ।

अन्योन्यं त्यजतोरागः स्यादन्योन्यं विरक्तयोः‡ ।

स्त्रीपुंसयोर्निगूढाया व्यभिचाराहते स्त्रियाः ॥

स्त्रीधनभ्रष्टसर्व्वस्वां गर्भविस्रंसिनीं तथा ।

भर्त्तुश्च वधमिच्छन्तीं स्त्रियं निर्वासयेद्गृहात् ॥

आगः पाप, स्त्रीधनभ्रष्टसर्व्वस्वां स्त्रीधनत्वेन भ्रष्टं सर्व्वस्वं यस्याः सा तथा, स्त्रीधनत्वेन भ्रष्ट भ्रंशितं सर्व्वस्वं यया सा तथा भ्रष्टमन्तर्भावितण्यर्थमिति कल्पतरु.§ ।

तथा ।

अनर्थशीलां सततं¶ तथैवाप्रियवादिनीम् ।

पूर्व्वाशिनी च या भर्त्तुस्तां स्त्रीं निर्वासयेद्गृहात् ॥

वन्ध्यां स्त्रीजननीं नित्यप्रतिकूलाञ्च सर्व्वदा ।

कामतोनाभिनन्देत कुर्व्वन्नेवं न दोषभाक् ॥

मनुः ।

---

* अनिष्टां लभते भर्त्तुमिति पाठान्तरम् ।

† तदुचितनीचव्यापारादिति पाठान्तरम् ।

‡ विरक्तयोरिति पाठान्तरम् ।

§ कल्पद्रुम इति पाठान्तरम् ।

¶ अनर्थजननीं नित्यमिति पाठान्तरम् ।

ऋतुस्नाता तु या नारी भर्त्तारं नोपगच्छति।
तां ग्राममध्ये विख्याप्य भ्रूणघ्नीन्तु विवासयेत्॥
भर्त्तुः प्रतिनिवेशेन या वृथा गमयेदृतून्।
तान्तु विख्याप्य बन्धूनां भ्रूणघ्नीं विनिवासयेत्॥

प्रतिनिवेशेन द्वेषेण। एवञ्चैतत्पूर्व्ववाक्ये द्वेषातिरिक्तमसमञ्जसकारणं विवक्षितमित्यर्थभेदः। उत्तरवाक्यं बहुऋतुपरं वा।

बौधायनः।

अशुश्रूषाकरी बन्ध्यां बन्धकीं पतिहिंसकीम्*।
त्यजन्ति पुरुषाः प्राज्ञाः क्षिप्रमप्रियवादिनीम्॥
अप्रजां दशमे वर्षे स्त्रीप्रजां द्वादशे त्यजेत्।
प्रेतप्रजां पञ्चदशे सद्यस्त्वप्रियवादिनीम्॥

वशिष्ठः।

व्यवाये तीर्थगमने धर्म्मे या च† निवर्त्तते।
चतस्रस्तु परित्याज्याः शिष्यगा गुरुगा च या॥
पतिघ्नी तु विशेषेण जुङ्गितोपहृता च या।
व्यभिचारादृतौ शुद्धिर्गर्भे त्यागो विधीयते।
गर्भभर्त्तृवधे तासां तथा महति पातके॥

जुङ्गितो निन्दितश्चाण्डालादिः।

हारीतः।

---

* परार्थहिंसकामिति परिहिंसकामिति च पाठान्तरम्।

† धर्म्येष्वेति पाठान्तरम्।

गर्भघ्नीमधोवर्णगां शिष्यसुतगामिनीञ्च* पापव्यसना-
सक्तां धनधान्यचयकरीञ्च वर्ज्जयेत् ।

मनुः ।

स्वच्छन्दगा च या नारी तस्यास्त्यागो विधीयते ।
न चैवं स्त्रीवधं कुर्य्यान्न चैवाङ्गविकर्त्तनम् ॥
स्वच्छन्दव्यभिचारिण्या विवस्वांस्त्यागमब्रवीत् ।
न वधं न च वैरूप्यं बन्धं स्त्रीणां विवर्जयेत्† ॥

न वधं न च वैरूप्यमित्यत्राब्रवीदित्यनुषज्यते ।

अथ याज्ञवल्क्यः ।

हृताधिकारां मलिनां पिण्डमात्रोपजीविनीम् ।
परिभूतामधःशय्यां वासयेद्व्यभिचारिणीम् ॥

नारदः ।

व्यभिचारे स्त्रिया मौण्ड्यमधःशयनमेव च ।
कदन्नञ्च कुवासश्च कर्म्म चावस्करोज्झनम् ॥

अत्र च स्त्रीव्यभिचार एव त्यागादिकं गुरुलघूनां व्यभिचाराणा-
मेव तत्तद्विशेषमाश्रित्य व्यवस्थापनीयम् ।

इति विवादरत्नाकरे स्त्रीपुंसधर्मतरङ्गः ।

---

* अधोवर्णं शिष्यसुतगामिनीञ्चेति पाठान्तरम् ।

† विमर्शयेदिति पाठान्तरम् ।

## अथ स्त्रीधर्म्माः ।

तत्र मनुः ।

बालया वा युवत्या वा वृद्धया वापि योषिता ।
न स्वातन्त्र्येण कर्त्तव्यं किञ्चित्कार्य्यं गृहेष्वपि ॥
बाल्ये पितुर्वशे तिष्ठेत्पाणिग्राहस्य यौवने ।
पुत्राणां भर्त्तरि प्रेते न भजेत्स्त्री स्वतन्त्रताम् ॥
पित्रा भर्त्रा सुतैर्वापि नेच्छेद्विरहमात्मनः ।
एषां हि विरहेण स्त्री गर्ह्यं कुर्य्यात्कुले॰ कुले ॥

बृहस्पतिः ।

पित्रा भर्त्रा सुतैर्न स्त्री वियुक्तान्यगृहे वसेत् ।
असत्सङ्गे विशेषेण गर्ह्यतामेति सा ध्रुवम् ॥

याज्ञवल्क्यः ।

पितृमातृसुतभ्रातृश्वश्रूश्वशुरमातुलैः ।
हीना न स्याद्विना भर्त्रा गर्हणीयान्यथा भवेत् ॥

मनुः ।

सदाप्रहृष्टया भाव्यं गृहकार्य्येषु दक्षया ।
सुसंस्कृतोपस्करया व्यये चामुक्तहस्तया ॥

याज्ञवल्क्यः ।

संयतोपस्करा दक्षा हृष्टा व्ययपराङ्मुखी ।
कुर्य्याच्छ्वशुरयोः पादवन्दनं भर्त्तृतत्परा ॥

---

* कुर्य्यादुभे इति पाठान्तरम् ।

बृहस्पतिः।

पूर्व्वोत्थानं गुरुष्वर्चा भोजनव्यञ्जनक्रिया।

जघन्यासनशायित्वं कर्म्म स्त्रीणामुदाहृतम्॥

देवलः।

अस्वातन्त्र्यं, पतिशुश्रूषा, सहधर्म्मचर्य्या, तत्पूज्यपूजनम्, परवेश्मागमनं, तद्देष्यमाणद्वेषणं, अदुष्टा भावना, नित्यानुकूल्यं, तत्कार्य्यपरत्वमिति स्त्रीधर्म्मः।

अथ स्त्रीधर्म्मा इत्युपक्रम्य विष्णुः।

भर्त्तुः समानचारित्वं, श्वशुरगुरुदेवतातिथीनां पूजनं, सुसंस्कृतोपस्करता, अमुक्तहस्तता, सुगुप्तभाण्डता, मूलक्रियास्वनभिरतिः, मङ्गलाचारतत्परता, भर्त्तरि प्रोषिते प्रतिकर्म्मक्रिया, परगृहेष्वनभिगमनं, द्वारदेशगवाक्षेष्वनवस्थानं, सर्व्वकर्म्मास्वतन्त्रता, बाल्ययौवनवार्द्धकेषु* पितृभर्त्तृपुत्रपराधीनता।

महाभारते।

यदैव भर्त्ता जानीयान्मन्त्रमूलपरां स्त्रियम्।

उद्विजेत तदैवास्याः सर्पाद्वेश्मगतादिव॥

पृथिवीं प्रति लक्ष्मीवाक्ये विष्णुः।

नारीषु नित्यं शुचिभूषितासु

पतिव्रतासु प्रियवादिनीषु।

---

* बाल्ययौवनवार्द्धकेष्वपीति पाठान्तरम्।

अमुक्तहस्तास्तु प्रजान्वितास्तु
सुगुप्तभाण्डास्तु बलिप्रियास्तु ॥
सुश्लिष्टवेश्मास्तु जितेन्द्रियास्तु
कलिव्यपेतास्तु विलोलुपास्तु ।
धर्म्माव्यपेतास्तु* दयान्वितास्तु
स्थिता सदाहं जगतां विधात्रि ॥

शङ्खलिखितौ ।

श्वः श्वः पचनभाण्डानामुपलेपनं, सुसम्मृष्टगृहद्वारोपलेपनं† कृतशौचानुकूल्यदध्यक्षतदूर्व्वाप्रबालपुष्पक्षतबलिकर्म्म, श्वश्रूश्वशुराद्यभिवादनानन्तरं‡ गृहावश्यकानि कुर्य्यात् । न देवभूतपतिभ्योऽग्रेऽश्नीयात् । न भर्त्तुरन्यत्र प्रतिकारौषधात् ।

श्वः श्वः आगामिनि आगामिनि दिने । न भर्त्तुरग्रेऽश्नीयादित्यन्वयः । अन्यत्र प्रतिकारौषधात् रोगप्रतीकारकारणमौषधन्तु भर्त्तुरग्रेऽप्यश्नीयादित्यर्थः ।

कात्यायनः ।

गृहमेधा भवेन्नित्यं भूषणानि च पूजयेत् ।
नित्यस्नानकृतां§ वेणीमर्च्चयेत्पुष्पवाससा ॥

---

* धर्म्माव्यपेतास्त्विति पाठान्तरम् ।

† सुसम्मृष्टद्वारोपलेपनमिति पाठान्तरम् ।

‡ श्वश्रूश्वशुराभिवादनानन्तरमिति पाठान्तरम् ।

§ नित्यस्नानकृतेति पाठान्तरम् ।

पूर्व्वमेव यद्दिर्गच्छेद्*यावन्नान्यः प्रबुध्यते।
देवताराधनं कुर्य्याद्भूपपुष्पबलिं हरेत् ॥

गृहमेधा गृहकृत्यपरा। भूषणानि पूजयेन्मार्जनादिभिः संस्कुर्य्यात्। नित्यस्नानकर्तां नित्यस्नानानन्तरकृताम्।

शङ्खलिखितौ।

स्त्री परानन्तुव्यक्तवक्ता वहिर्निष्क्रामेत्, नानुत्तरीया परिधावेत्, नानुत्सवे गन्धमाल्याभरणानि विकृतानि वासांसि बिभृयात्, न परपुरुषमभिभाषेत, अन्यत्र बालकप्रव्रजितहद्वेभ्यः† न नाभिं दर्शयेत्, कुलवधूरागुल्फं‡ वासः परिदध्यात्, न स्तनौ विवृतौ कुर्य्यात्, न हसेतानावृतम्।

अनावृतं मुखमनाच्छाद्य न महाजनव्यवहितमपि हसेदित्यर्थः।

व्यासः।

द्वारोपवेशनं नित्यं गवाक्षेण निरीक्षणम्।
असत्प्रलापो हास्यञ्च दूषणं कुलयोषिताम् ॥

मनुः।

पानं दुर्जनसंसर्गः पत्या च विरहोऽटनम्।
स्वप्नोऽन्यगृहवासश्च नारीणां दूषणानि षट् ॥

सर्व्वाण्येतानि चारित्रदूषणोपयिकानि विवक्षितानि।

---

* एकोनवेदिति पाठान्तरम्।

† बालकवृद्धप्रव्रजितेभ्य इति पाठान्तरम्।

‡ कुलवधूरागुल्फाभ्यामिति पाठान्तरम्।

बृहस्पतिः।

पानाटनदिवास्वप्नमक्रिया दूषणं स्त्रियाः।

अक्रिया च गृहक्रियानाचरणम्।

शङ्खलिखितौ।

न गणिकाधूर्त्तचारिणीचणिकामायाविनीकुहकशीला-विप्लुताभिः* सहैकत्र तिष्ठेत्, संसर्गेण हि चारित्रं† दुष्येत्, न भर्त्तुः प्रतिकूलमाचरेत्, न प्रकीर्णभाण्डभोजनीयोपस्करद्रव्या, नोत्तानखट्वासनपादुका स्यात्।

गणिका वेश्या, ईक्षणिका दैवज्ञा, सा चात्र परचारित्रखण्डनानुकूलाभिसन्धिरुक्ता, मायाविनी सम्मोहिका, सापि तथा‡ धूर्त्तचारिणीतोऽस्या भेदविवक्षया उपादानम्। कुहकशीला चारित्रखण्डनोच्छेदकारिणी§ सा चोक्ताभ्योऽन्या विवक्षिता, विप्लुता¶ पातित्यादिदोषवती।

हारीतः।

अथ पत्न्याचारमनुक्रमिष्यामो गृहं पत्नी न ह्यपत्नीकं‖

---

* विप्लुतेत्यादिभिरिति विक्लृताभिरिति च पाठान्तरम्।

† विचारित्रमिति पाठान्तरम्।

‡ तथापीति पाठान्तरम्।

§ चारित्रखण्डनोद्वेदकारिणीति पाठान्तरम्।

¶ विक्लवेति पाठान्तरम्।

‖ पत्नीगृहमिति पाठान्तरम्।

विद्यात्, तस्मात्पत्नी गृहपरा* स्यात्सुसंसृष्टोत्पादितसंस्कारा† सूपलिप्तार्च्चितवेश्मानि‡ पतितानि प्रतिकुर्य्यात्§ अगुप्तं गोपयेत्, अन्यपुरुषेण सहेक्षणाभिभाषणं दुष्टप्रव्रजितसंसर्गञ्च वर्ज्जयेत्, परगृहरथ्याचत्वरवीथीप्रव्रजितालयांश्च नाभिगच्छेत्, कूपपथस्थानं सन्धिवेलासञ्चरणञ्च वर्ज्जयेत्, परशयनासनवस्त्राभरणानि मनसापि नाध्यवस्येदापुनःसंस्कारात्, तथैकपात्रं मद्यमांसानि उच्छिष्टनिर्म्माल्यञ्चान्यत्र गुरुभर्तृसुतेभ्यः। अनन्यपुरुषलोलुपानर्थान्विवर्ज्जयेत्। तथा मत्युदवदनं आलस्यवैक्लव्यतौल्यादि, नोच्छिष्टा देवागारं प्रविशेत्। नाप्रोक्ष्याविमृश्यापर्य्यग्निकृत्य श्रापयेत्। नाप्रक्षालितपाणिर्यावकौत्पवनगोरसदधि¶ गृह्णीयात्, स्थाल्यपिधानदर्व्वीः प्रक्षाल्य उपकरणानि गुप्ते निधापयेत्‖। श्वो भूते प्रतिप्रक्षाल्य पचनार्थानुपकुर्य्यात्। गोरसधान्यानि चास्य निर्द्दिष्टे गृह्णीयात्। श्वते प्रक्षाल्योपलिप्य परिमृज्य तैजसानि वेश्मावमार्ज्जनं मत्युप-

---

* गृहमपरेति पाठान्तरम्।

† सुसंसृष्टोत्पादितसंस्कारेति पाठान्तरम्।

‡ कूपपथस्थान लिप्तार्च्चितवेश्मानीति पाठान्तरम्।

§ न प्रतिकुर्य्यादिति पाठान्तरम्।

¶ यावकौत्पवनगोरसधाना इति पाठान्तरम्।

‖ निधाय वसेदिति पाठान्तरम्।

लेपनानि कृत्वा वैश्वदेवकाल इति प्रचोदनं* स्नानहेतोः स्नात्वा शुक्ले वाससी परिधाय पाणिपादं प्रक्षाल्योदकमुपस्पृश्याचम्य देवागारं प्रविश्य नमस्कृत्यायतनेऽग्निमुपसमाधाय-समिद्दर्भपुष्पबलिशान्तिपात्राण्याहृत्य भक्तमाज्येनाभिवार्य्य† यथान्यदाह्निकं कुर्य्यात्‡ हुते देवेभ्य उद्वाह्याग्नौ§ देवपत्नीभ्यो बलिं हरेद्भर्त्तृ-निर्द्देशे। कृते देवातिथ्ये यथास्वं गृहिणस्तर्पयित्वा शिष्यान् सुहृदः पतिञ्च तदनुज्ञाता शेषं पत्नी शुभे भुक्त्वा प्रतिस्वाभिरुपस्पृश्य शेषं भाण्डं निर्णिज्य प्रक्षाल्य च वहिरुत्तरपूर्व्वसमदिग्दिशि¶ वास्तुभूतपशुपतये रुद्राय नम इति निर्णीय, एवं सायं श्वतादि। यथार्थमवशिष्टेषु‖ नमो भगवते रुद्राय भस्मसदे भस्मना रक्षां करोमीति भस्मना द्वारमपिधाय स्वामिसुतादीनात्मानञ्चालभेत्। यथान्यद्रक्षा स्यात्। नाप्रक्षालितपाणिपादा संविशेत्, न नग्नोच्छिष्टा, नानमनीया, नानमस्कृभर्त्तृपादा, नाविरतोत्थाना, नानुसूर्य्योत्थायिनी

* वैश्वदेवकालप्रचोदनमिति वैश्वदेवकालप्रतिप्रचोदनमिति च पाठान्तरम्।

† चरुमभिघार्य्येति पाठान्तरम्।

‡ यथान्यदाह्निकं स्यादिति यदन्यदाह्निकं स्यादिति च पाठान्तरम्।

§ उद्धृत्याग्नाविति उद्वह्याग्नाविति च पाठान्तरम्।

¶ उत्तरपूर्व्वस्यां दिशीति पाठान्तरम्।

‖ त्रिषु पुस्तकेष्वेष पाठ, परं यथार्थमवशिष्टेष्विति पाठोयुक्त, अवशिष्टेषु समाप्तेषु कर्म्मस्विति शेष इत्यर्थो द्रष्टव्य।

अनुपस्थायोदकधाना* अनुसरणवेश्मार्च्चिनी† प्रदक्षिणा प्रयान्ता‡ सौम्याहिता भर्त्तुः प्रियवादिनी नोपरिष्टात् स्थिता आसीत। नोच्चैर्न्न वितर्कस्थाने नाभीक्ष्णमीक्षेत। परिमृज्य संवाहयित्वा उपासीत। व्यजनेनोष्णे वर्षे घर्म्माम्भांसि अस्य गात्रेभ्यः परिमृज्यात्। शिरसश्चावस्थितस्य समाधानम्। ग्रामान्तराहृतभारातिक्रान्तमायान्तमुपगच्छेतादुष्टमना अर्घ्येणार्च्चयेत्।

व्रतधारणं देवकार्य्यं स्नानमनुज्ञातया कार्य्यमिति§।

सुसंसृष्टोत्पादितसंस्कारा प्रकृष्टमार्ज्जनेनच¶ सम्पादितसंस्कारा, कूपपथस्थानं कूपानुयायिवर्त्मावस्थानम्। परेति, परशय्यासनावमवस्त्रादि पुनःसंस्कारं प्रक्षालनादि विना नाध्यवस्येत् सर्व्वथैव नोपभुञ्जीतेत्यर्थः‖। एकपात्रं सहभोजनम्। गुरवः श्वशुरादयः। लोलुपा सस्पृहा। अनर्थो निरर्थकधनव्ययः। प्रत्युद्वदनं प्रतिकूलवचनम्। तौल्यं स्वकुलाद्यनुचितवेषभाषादीति प्रियस्वामी। अविमृश्य अविचार्य्य। यावकं यज्ञोपयुक्तचमसादि, उत्पवनं चालनीस्थाल्यादि। स्थाल्यादीनि द्र-

---

* अनुपदस्थोदकधानेति पाठान्तरम्।

† अनुसरणवेश्मार्च्चिनीति पाठान्तरम्।

‡ प्रयसेति पाठान्तरम्।

§ अनुज्ञातया सति पाठान्तरम्।

¶ प्रकृष्टसम्मार्ज्जनेनेति पाठान्तरम्।

‖ नोपभुञ्जीतेति पाठान्तरम्।

व्याप्य* भाविदिनपाकार्थं† प्रक्षाल्य शुभे निधापयेत्। तत्र दिने भूते प्रतिप्रक्षाल्य पाकं कुर्य्यादित्यर्थः। अस्य निर्द्देशे भर्त्तुरनुज्ञाने स्नानहेतोः पत्युरिति शेषः। तेन वैश्वदेवकालो वृत्त इति स्नानं विधीयतामिति पत्युः कृते प्रचोदनं कुर्य्यादित्यर्थः। उत्क्रम्यान्तर्मुखस्थितश्लेष्मादिकमपास्य अन्नाद्यमभिघार्य्य भक्तमन्नाज्येनाभिघार्य्याभ्युक्ष्य। यद्यान्यदिति अन्यन्मण्डकादि‡ आह्निकमहर्भोज्य तच्चाभिघार्य्येत्यन्वयः। भर्त्तृनिर्द्देशे तिष्ठेदिति शेष.§। तदनुज्ञाता च शेषं, च भिन्नक्रमेण¶ तेन भर्त्त्रनुज्ञानेन, शेषं सशेषमपि‖ भुञ्जीत्यर्थेणान्वयः। प्रतिस्वाभिः स्वार्थोपकल्पिताभिरद्भिः। निर्णिज्यान्नमलापकर्षणं कृत्वा। एवं सायं शृतादि, सायं सन्ध्यासमयेऽपि शृतादि शृते प्रक्षाल्येत्यादि बलिपर्य्यन्तं** आलभेत् भस्मलिप्तहस्तेन स्पृशेत्। यद्यान्यद्द्रव्यं तदप्यालभेदित्यन्वयः। नानमनीया नाप्रह्वा, नानमस्यभर्त्तृपादा††।

---

* व्याप्यादिद्रव्याणीति पाठान्तरम्।

† परदिने पाकार्थमिति भाविदिने पाकार्थमिति च पाठान्तरम्।

‡ मण्डुकादीति पाठान्तरम्।

§ तिष्ठेदित्यर्थे इति पाठान्तरम्।

¶ चो भिन्नक्रम इति पाठान्तरम्।

‖ स्वल्पशेषमपीति पाठोऽयुक्त इति बोध्यम्।

** रुद्रबलिपर्य्यन्तमिति पाठान्तरम्।

†† नानमस्यभर्त्तृपादा मोदते चौमया सहेति पाठान्तरम् नानमस्यभर्त्तृपादा नामयतभर्त्तृचरणस्य, तदापीत नानमस्यभर्त्तृपादा मोदते चौमया सहतीति पाठो युज्यते।

पतिप्रिया हिते युक्ता स्वाचारा विजितेन्द्रिया ।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमां गतिम् ॥

मनुः ।

दानात्प्रभृति या तु स्याद्यावदायुः पतिव्रता ।
सा भर्त्तृलोकमाप्नोति यथैवारुन्धती तथा ॥
पतिं या नाभिचरति मनोवाक्कायसंयता ।
सा भर्त्तृलोकमाप्नोति सद्भिः साध्वीति चोच्यते ॥
अनेन नारी वृत्तेन मनोवाग्देहसंयता ।
इह कीर्त्तिमवाप्नोति पतिलोकं परत्र च ॥

पतिलोकोऽत्र पत्या सह कृतयज्ञादिजन्यो विवक्षितः ।

छन्दोगपरिशिष्टे कात्यायनः ।

पतिशुश्रूषयैव स्त्री सर्व्वान् कामान् समश्नुते ।
दिवः पुनरिहायाता सुखानां सा निधिर्भवेत्* ॥

वृहस्पतिः ।

आर्त्तार्त्ते मुदिता हृष्टे प्रोषिते मलिना कृशा ।
मृते म्रियेत या पत्यौ सा ज्ञेया स्त्री पतिव्रता ॥

वशिष्ठः ।

पतिव्रतानां गृहमेधिनीनां
सत्यव्रतानां शुचिसुव्रतानाम्† ।
तासान्तु लोकाः पतिभिः समानाः

---

* भावधिरिति पाठान्तरम् ।

† खलु योषिताञ्चेति पाठान्तरम् ।

गोमायुलोका व्यभिचारिणीनाम् ॥

मनुः।

व्यभिचारात्तु भर्त्तुः स्त्री लोके प्राप्नोति निन्द्यताम्।
शृगालयोनिमाप्नोति पापरोगैश्च पीड्यते ॥

छन्दोगपरिशिष्टे कात्यायनः।

पतिमुल्लङ्घ्य मोहात्स्त्री कं कं न नरकं व्रजेत्।
कृच्छ्रान्मानुषतां प्राप्य किं किं दुःखं न विन्दति ॥

शङ्खलिखितौ।

सुरालशुनपलाण्डुगृञ्जनकमांसादीन्यभक्ष्याणि च वर्जयेत्। आहारमयं शरीरं तन्मयत्वाद्ब्राह्मणः सङ्कीर्य्यते मातुरशितपीताद्धि गर्भः सम्भवति।

मनुः।

प्रतिषिद्धा पिबेद्या तु मद्यमभ्युदयेष्वपि।
प्रेक्षासमाजे गच्छेद्वा सा दण्ड्या कृष्णलानि षट् ॥

वशिष्ठः।

या ब्राह्मणी स्यादिह वै सुरापी
न तां देवाः पतिलोकं नयन्ति।
इहैव सा तिष्ठति क्षीणपुण्या
सृता* जलौका भवत्यथ शुक्तिका वा ॥

याज्ञवल्क्यः।

पतिलोकं न सा याति ब्राह्मणी या सुरां पिबेत्।

---

* अप्सुवि पाठान्तरम्।

इहैव सा शुनी गृध्री शूकरी चैव जायते ॥

यमः ।

या ब्राह्मणी स्यादिह वै सुरापी
न तां देवाः पतिलोकं नयन्ति ।
इहैव सा तिष्ठति हीनपुण्या
शुनी भूत्वा गर्द्दभी शूकरी च ॥

इति विवादरत्नाकरे स्त्रीधर्म्मतरङ्गः ।

---

## अथ प्रोषितभर्त्तृकाधर्म्मः ।

तत्र मनुः ।

विधाय प्रोषिते वृत्तिं जीवेन्नियममास्थिता ।
प्रोषिते त्वविधायैव* जीवेच्छिल्पैरगर्हितैः ॥

वृत्तिं विधाय प्रोषित इत्यन्वयः । जीवेत्तयैव वृत्त्या ।

याज्ञवल्क्यः ।

क्रीडां शरीरसंस्कारं समाजोत्सवदर्शनम्† ।
हास्यं परगृहे यानं त्यजेत्प्रोषितभर्त्तृका ॥

बृहस्पतिः ।

---

* न विधायैवेति पाठान्तरम् ।

† क्रीडाशरीरसंस्कारसमाजोत्सवदर्शनमिति पाठान्तरम् ।

प्रसाधनं नृत्यगीतसमाजोत्सवदर्शनम् ।
मांसं मद्याभियोगञ्च न कुर्य्यात्प्रोषिते पतौ ॥

विष्णुः ।

भर्त्तरि प्रोषिते अप्रतिकर्म्म, पररटहेष्वनभिगमनं, द्वार-देशगवाक्षेष्वनवस्थानम्* ।

अप्रतिकर्म्म प्रसाधनानाचरणम् ।

शङ्खलिखितौ ।

सर्व्वासां प्रोषिते भर्त्तरि ब्राह्मणी चारित्रं रक्षेत्, इत-रासां मातापितरौ, अनन्तरं राजन्या वा प्रेङ्खाताण्डव-विहार-चित्रदर्शनाङ्गरागोद्यानयान विहृतशयनोत्कृष्ट-पानभोजनकन्दुकक्रीड़ाधूपगन्धमाल्यालङ्कारदन्तधावना-ञ्जनादीनामस्वतन्त्राणां† प्रोषितभर्त्तृकाणां कुलस्त्रीणा-मनारम्भः ।

सर्व्वासामिति चतसृष्वपि ब्राह्मण्याद्येकपत्नीषु मध्ये ब्राह्मणी स्वयमेव चारित्रं रक्षेत् । तदितरासां‡ मातापितरौ, अन-न्तरञ्च तयोरसतोः राजन्या स्वस्येतरयोश्च§ चारित्रं रक्षेत् । प्रेङ्खा दोला ।

हारीतः ।

---

* द्वारदेशे गवाक्षेष्ववस्थानमिति पाठान्तरम् ।

† दन्तधावनाञ्जनादर्शप्रसाधनादीनामस्वतन्त्राणामिति पाठान्तरम् ।

‡ इतरासामिति पाठान्तरम् ।

§ स्वस्यैवेति पाठान्तरम् ।

न प्रोषितेऽलङ्कुर्य्यान्न वेणीं मुञ्चेत् ।

अत्र च सभर्त्तृकास्त्रीमात्रमधिकृत्य निषिद्धानां यत्पुनः प्रोषित-भर्त्तृकामधिकृत्य निषेधवचनं तदत्यन्तनिषेधार्थम् ।

इति विवादरत्नाकरे प्रोषितभर्त्तृकाधर्मतरङ्गः ।

---

## अथ मृतभर्त्तृकाधर्माः ।

तत्राङ्गिराः ।

मृते भर्त्तरि या नारी समारोहेद्धुताशनम् ।
साऽरुन्धतीसमाचारा स्वर्गलोके महीयते ॥
तिस्रः कोट्योऽर्द्धकोटी च यानि लोमानि मानवे ।
तावन्त्यब्दानि सा स्वर्गे भर्त्तारं यानुगच्छति ॥
व्यालग्राही यथा व्यालं बिलादुद्धरते बलात् ।
तद्वद्भर्त्तारमादाय तेनैव सह मोदते ॥
मातृकं पैतृकञ्चैव यत्र कन्या प्रदीयते ।
पुनाति त्रिकुलं नारी भर्त्तारं यानुगच्छति ॥
तत्र सा भर्त्तृपरमा परा परमलालसा ।
क्रीडते पतिना सार्द्धं यावदिन्द्राश्चतुर्द्दश ॥
ब्रह्मघ्नो वा कृतघ्नो वा* मित्रघ्नो वापि मानवः ।

---

* ब्रह्मघ्नो वा पतिघ्नो वेति पाठान्तरम् ।

तं वै पुनाति सा नारी इत्याङ्गिरसभाषितम् ॥
साध्वीनामेव नारीणां नाग्निप्रपतनादृते ।
अन्यो धर्मोऽस्ति विज्ञेयो मृते भर्तरि कर्हिचित् ॥
यावन्नाग्नौ दहेद्देहं मृते पत्यौ पतिव्रता ।
तावन्न मुच्यते नारी स्त्रीशरीरात्कथञ्चन ॥
सद्वृत्तभावार्पितभर्तृकाणां
स्त्रीणां वियोगक्षतकातराणाम् ।
तासां प्रभावस्तमिते गतिं कं
नाग्निप्रवेशादपरोऽस्ति धर्मः ॥

सद्वृत्तेति वृत्तमाचारः, भावोऽभिसन्धिः, तौ शोभनावर्पितौ याभिस्तास्तथा । वियोगक्षतकातराणां वियोग एव क्षतं व्रणः* तेन कातराणाम् । प्रभौ पत्यौ, कं स्वर्गम् ।

व्यासः ।

दयितं यान्यदेशस्थं मृतं श्रुत्वा पतिव्रता ।
समारोहति शीर्षेऽग्नौ† तस्याः शक्तिं निबोधत ॥
यदि प्रविष्टो नरकं बहुपाशैः‡ सुदारुणैः ।
संप्राप्तो यातनास्थानं गृहीतो यमकिङ्करैः ॥
तिष्ठते विवशो दीनो वेष्ट्यमानः स्वकर्मभिः ।

* प्ररोहो व्रण इति पाठान्तरम् ।

† शीघ्रायाविति पाठान्तरम् ।

‡ बद्ध पाशैरिति पाठान्तरम् ।

व्यालग्राही यथा व्यालं बलादुद्धरते बिलात्* ।
तद्वद्भर्त्तारमादाय दिवं याति तपोबलात् ॥
तत्र सा भर्त्तृपरमा स्तूयमानाप्सरोगणैः ।
क्रीड़ति पतिना सार्द्धं यावदिन्द्राश्चतुर्द्दश ॥

ब्रह्मपुराणे ।

मृते भर्त्तरि सत्स्त्रीणां न चान्या† विद्यते गतिः ।
नान्यद्भर्त्तृवियोगाग्निदाहस्य‡ शमनं भवेत् ॥
देशान्तरमृते तस्मिन् साध्वी तत्पादुकाद्वयम् ।
निधायोरसि संशुद्धा प्रविशेज्जातवेदसम् ॥
ऋग्वेदवादात्साध्वी स्त्री न भवेदात्मघातिनी ।
त्र्यहाशौचे निवृत्ते तु श्राद्धं प्राप्नोति शाश्वतम् ॥

ऋग्वेदवादादिमा नारीरविधवा इत्यादिवादात् । एवञ्च सकलवचनपर्य्यालोचनया ब्राह्मणादिसर्व्वभार्य्याणां स्वगतभर्त्तृगतफलविशेषार्थिनीनां गर्भवतीबालापत्यादिव्यतिरिक्तानां सहमरणानुमरणयोरधिकार इति ।

बृहस्पतिः ।

शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा ।
अन्वारूढ़ा जीवतीति§ साध्वी भर्त्तृहिताय सा ॥

---

* बलादुद्धरते बिलादिति पाठान्तरम् ।

† न त्वन्येति पाठान्तरम् ।

‡ नान्या भर्त्तृवियोगाग्निदाहस्येति पाठान्तरम् ।

§ जीवन्तीति पाठान्तरम् ।

विष्णुः।

मृते भर्त्तरि ब्रह्मचर्य्यं तदन्वारोहणं वा।

हारीतः।

आहिताग्निश्चेत्प्रमीयेत, औपासनावचाणाग्निं परिमृज्य सर्पिराज्ञीभिः सूक्तसवनमिष्ट्वा नावसेत्। अनाहिताग्निश्चेदन्यमादध्याज्जनाग्निं वा परिगृह्य भर्त्तुः पितुः स्वजनगृहवर्ज्जं जितजिह्वाहस्तपादेन्द्रिया स्वाचारवती दिवारात्रं भर्त्तारमनुशोचती* व्रतोपवासैः चान्त्रायणोऽन्ते† पतिलोकं जयति सा भूयः पतिमालोकमाप्नोतीत्येवं ह्याह।

पतिव्रता तु या नारी निष्ठां याति पतौ मृते।

सा हित्वा सर्व्वपापानि पतिलोकमवाप्नुयात्॥

आहिताग्निः श्रौताग्निः। अवचाणमर्द्धदग्धोल्मूकमायं गौरिति तिस्र ऋचः सर्पिराज्ञः। अनाहिताग्निः स्मार्त्ताग्निः अन्यं गृह्यमाधानविधिना गृह्णीयात्। जनाग्निः लौकिकाग्निः स च विवक्षितः।

बृहस्पतिः।

व्रतोपवासनिरता ब्रह्मचर्य्ये व्यवस्थिता।

दमदानरता नित्यमपुत्रापि दिवं व्रजेत्॥

मनुः।

---

* भर्त्तारमनुशोचन्तीति पाठान्तरम्।

† क्षान्तायुषोऽन्ते इति पाठान्तरम्।

कामन्तु क्षपयेद्देहं पुष्पमूलफलैः शुभैः।
न तु नामापि गृह्णीयात्पत्यौ प्रेते परस्य तु॥
आसीतामरणात्क्षान्ता नियता ब्रह्मचारिणी।
यो धर्म्म एकपत्नीनां काङ्क्षन्ती तमनुत्तमम्॥
अनेकानि सहस्राणि कौमारब्रह्मचारिणाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्॥
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता।
स्वर्गं गच्छत्यपुत्रापि यथा ते ब्रह्मचारिणः॥
अपत्यलोभाद्या तु स्त्री भर्त्तारमतिवर्त्तते।
सेह निन्दामवाप्नोति पतिलोकाच्च हीयते॥
नान्योत्पन्ना प्रजास्तीह न चान्यस्य परिग्रहे।
द्वितीयस्तु न साध्वीनां क्वचिद्भर्त्तोपदिश्यते॥

यमः।

यावज्जीवं सदासीत नियता ब्रह्मचारिणी।
यो धर्म्म एकपत्नीनां तं धर्म्ममनुकाङ्क्षती॥
स्त्रियाः श्रुतौ वा शास्त्रे वा प्रव्रज्या न विधीयते।
प्रजा हि तस्याः स्वो धर्म्मः सवर्णादिति धारणा॥
अष्टाशीतिसहस्राणि मुनीनामूर्द्ध्वरेतसाम्।
दिवं गतानि विप्राणामकृत्वा कुलसन्ततिम्॥
तथैव कन्या व्यावृत्ता ब्रह्मचर्य्ये व्यवस्थिता।
अपुत्रा प्राप्नुयात्स्वर्गं यथा ते ब्रह्मचारिणः॥
अपुत्रा जातपुत्रा वा कन्या पतिमनुव्रता।

प्राप्नुयात्स्वर्गमेवेति मनुः स्वायम्भुवोऽब्रवीत् ॥

एकपत्नीनामेकपतिकानाम्। कन्यात्व उदा।

अनेकदोषदुष्टेऽपि मृते भर्त्तरि वा सदा।
साध्वाचारेऽवतिष्ठेत गुरुशुश्रूषणे रता ॥
मृते भर्त्तरि साध्वी स्त्री ब्रह्मचर्य्ये व्यवस्थिता।
सारुन्धतीसमाचारा ब्रह्मलोके महीयते ॥

इति विवादरत्नाकरे मृतभर्तृकाधर्मतरङ्गः।



## अथ नियोगः।

तत्र मनुः।

देवराद्वा सपिण्डाद्वा स्त्रिया सम्यग्नियुक्तया।
प्रजेप्सिताऽधिगन्तव्या* सन्तानस्य परिक्षये ॥

नारदः।

नियुक्ता गुरुभिर्गच्छेद्देवरं पुत्रकाम्यया।
स च तां प्रतिपद्येत तथैवापुत्रजन्मनः ॥
पुत्रे जाते निवर्त्तेत विप्लवः स्यादतोऽन्यथा।
घृतेनाभ्युक्ष्य गात्राणि तैलेनाविकृतेन वा ॥

---

* प्रजेप्स्येति पाठान्तरम्।

सुखान्मुखं परिहरन्गात्रैर्गात्राणि चास्पृशन्* ।
कुले तदवशेषे च सन्तानार्थं न कामतः ॥
नियुक्तो गुरुभिर्गच्छेद्भ्रातुर्भार्य्यां यवीयसः ।
अविद्यमाने तु गुरौ राज्ञे† याच्यः कुलक्षयः ।
ततस्तद्वचनाद्गच्छेदनुशिष्यात्स्त्रियञ्च सः ॥
पूर्व्वोक्तेन विधानेन स्नातां पुंसवने शुचिः ।
सकृदागर्भधानात्तु‡ कृते गर्भे तथैव सा ॥
अतोऽन्यथा वर्त्तमानः पुमान्स्त्री वापि कामतः ।
विनेयौ स्वभगं‡ राज्ञा विप्लवः स्यादतोऽन्यथा ॥

यमः ।

ऋतौ स्नातायां तस्यान्तु वाग्यतस्तामये निशि ।
सुप्तश्मश्रुनखलोमानां गन्धस्पर्शाववेदयन् ॥
एकवासा घृताक्ताङ्गो दुर्गन्धः शोकदुर्मनाः ।
मुखान्मुखं परिहरन्गात्रैर्गात्राणि चास्पृशन् ॥
यतात्मा गर्भमादध्यादृते गर्भे त्वपव्रजेत् ।
जातापत्यां नाधिगच्छेत्पुत्रे जाते तथैव च ॥
सीमन्तोन्नयनादीनि सर्व्वकार्य्याणि कारयेत् ।
भ्रातुः सन्तानमिच्छद्भिः पितृणामौर्द्ध्वदेहिकम् ॥
भ्रातुः सन्तानं पितृणामौर्द्ध्वदेहिकमिच्छद्भिर्मृतस्य भ्रातृभि-

* गात्रैर्गात्रमसंस्पृशन्निति ।
† राज्ञेति पाठान्तरम् ।
‡ द्रुमगमिति पाठान्तरम् ।

दोरभूते: राजा सीमन्तोन्नयनादीनि* कारयेदित्यर्थः । बहु-त्वञ्चानाविवक्षितं, तेन भ्रातुर्जीवत एकत्वेऽपि शास्त्रप्रवृत्ति.†।

याज्ञवल्क्यः ।

अपुत्रां गुर्व्वनुज्ञातोदेवरः पुत्रकाम्यया ।
सपिण्डो वा सगोत्रोवा घृताभ्यक्तऋतावियात्‡ ॥
आगर्भसम्भवाद्गच्छेत्पतितस्त्वन्यथा भवेत् ।
अनेन विधिना जात. क्षेत्रजस्तु भवेत्सुत: ॥

देवल: ।

नष्टः प्रव्रजितः क्लीवः पतितोराजकिल्विषी ।
लोकान्तरगतोवापि परित्याज्य. पति: स्त्रिया: ॥

नष्टोऽशास्त्रीयव्यापारेण त्यक्तपरिकरसङ्ग: । प्रव्रजित: अशास्त्र-विषयप्रव्रज्याशाली वृथामौण्ड्यादि.§ । राजकिल्विषी राज-रोगाक्रान्त. ।

तथा ।

मृते भर्त्तरि जीवे वा स्त्री विन्देतापरं पतिम् ।
सन्तत्यनाशार्थतया न स्वातन्त्र्यान्तु¶ योषित: ॥
अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी प्रोषितं पतिम् ।

---

* सीमन्तोन्नयनादीति पाठान्तरम् ।

† शास्त्रापवृत्तिरिति पाठान्तरम् ।

‡ सपिण्डो वा सगोत्रो वा घृताभ्यक्तऋतावियादिति पाठान्तरम् ।

§ मुण्डादिरिति पाठान्तरम् ।

¶ न स्वातन्त्र्यादिति पाठान्तरम् ।

अप्रसूता च चत्वारि परतोऽन्यं समाश्रयेत्* ॥
अष्टौ वर्षाण्युदीक्षेत ब्राह्मणी तु पतिं तथा ।
क्षत्रिया षट्समास्तिष्ठेदप्रसूता समात्रयम् ॥

क्षत्रिया षट् समा इत्यत्राप्यप्रसूतेति बोद्धव्यम् ।

तथा ।

वैश्या प्रसूता चत्वारि द्वे समे त्वप्रसूतिका ।
न शूद्रायाः स्मृतः कालो न च धर्मव्यतिक्रमः ॥
विशेषतोऽप्रसूतायाः संवत्सरपरा स्थितिः† ।
अप्रवृत्तौ स्मृतः काल एष प्रोषितयोषिताम् ॥
जीवति श्रूयमाणे च स्यादेष द्विगुणो विधिः ।
प्रजाप्रवृत्तौ नारीणां वृत्तिरेषा प्रजापतेः ॥
अतोऽन्यगमने स्त्रीणामेष दोषो न विद्यते ।

अथ देवरसपिण्डाधिकारे मनुः ।

नान्यस्मिन्विधवा नारी नियोक्तव्या स्वबन्धुभिः ।
अन्यस्मिंश्च नियुञ्जाना धर्मं हन्युः सनातनम् ॥
नोद्वाहिकेषु मन्त्रेषु नियोगः कीर्त्यते क्वचित् ।
न विवाहविधावुक्तं विधवावेदनं‡ पुनः ॥
अयं§ द्विजैर्हि विद्वद्भिः पशुधर्मो विगर्हितः ।

---

* समाचरेदिति पाठान्तरम् ।

† संवत्सरपरस्थितिरिति पाठान्तरम् ।

‡ विधवादेवनं वेत पाठान्तरम् ।

§ स्वयमिति पाठान्तरम् ।

मनुष्याणामपि प्रोक्तो वेणे राज्यं प्रशासति ॥
स महीमखिलां भुञ्जन्राजर्षिप्रवरः पुरा।
वर्णानां सङ्करं चक्रे कामोपहतचेतनः ॥
ततःप्रभृति* यो मोहात्प्रमीतपतिकां स्त्रियम्।
नियोजयत्यपत्यार्थे तं विगर्हन्ति साधवः ॥

अन्यस्मिन्देवरसपिण्डाभ्यामन्यस्मिन्। एतच्चानयोरन्यतरस्यापि सद्भावे, एतदभावे सगोत्रस्यापि याज्ञवल्क्येन बोधितत्वात्।

मृतपत्यधिकारे† वशिष्ठः।

सा चेन्नियोगमिच्छेद्वृत्तलाभान्नास्ति नियोगः प्रायश्चित्तञ्चाप्युपदिश्य‡ नियुञ्ज्यादित्येके।

कात्यायनः।

नियोगात्पावनं कुर्य्याद्यथोक्तं तद्विशुद्धये।
द्विजस्य स्त्रीषु धर्म्मोऽयं शूद्रस्यैके तदाश्रयः§ ॥

बृहस्पतिः।

उक्तो नियोगी मनुना निषिद्धः स्वयमेव तु।
युगह्रासादशक्योऽयं कर्त्तुं मर्त्त्यै¶र्विधानतः ॥

---

* तत प्रभृतीति पाठान्तरम्।

† मृतपत्न्यधिकारे इति पाठान्तरम्।

‡ प्रायश्चित्तमुपदिश्येति पाठान्तरम्।

§ शूद्रस्यैकं समाश्रयेदिति शूद्रस्यैकसमाश्रय इति च पाठान्तरम्।

¶ मर्त्ये इति पाठान्तरम्।

तपोज्ञानसमायुक्ताः कृते त्रेतायुगे नराः ।
द्वापरे च कलौ नृणां* शक्तिहानिर्विनिर्म्मिता ॥
अनेकधा कृताः पुत्रा ऋषिभिर्ये पुरातनैः ।
तच्छक्य नाधुना कर्त्तुं शक्तिहीनैरिदन्तनैः ॥

एवञ्चाष्टौ वर्षाण्युदीचेतेत्यादि देवलवाक्यान्यपि नियोगवदेव युगान्तरान्वयीन्येवोन्नीयते† ।

इति विवादरत्नाकरे नियोगतरङ्गः ।

---

## अथ परपूर्व्वाविधिः* ।

तत्र नारदः ।

परपूर्व्वाः स्त्रियस्त्वन्याः सप्त प्रोक्ता यथाक्रमम् ।
पुनर्भूस्त्रिविधास्तासां स्वैरिणी च चतुर्विधा ॥
कन्यैवाक्षतयोनिर्या पाणिग्रहणदूषिता ।
पुनर्भूः प्रथमा प्रोक्ता पुनः संस्कारकर्म्मणा ॥
कौमारं पतिमुत्सृज्य या त्वन्यं† पतिमाश्रिता ।

---

* नृणामिति पाठान्तरम् ।
† युगान्तरान्वयीन्येवेत्युन्नीयते इति पाठान्तरम् ।

---

* परपूर्व्वेति पाठान्तरम् ।
† या चान्यमिति पाठान्तरम् ।

पुनः पत्युर्गृहमियात्* सा द्वितीया प्रकीर्त्तिता ॥
असत्सु देवरेषु स्त्री बान्धवैर्या प्रदीयते† ।
सवर्णाय सपिण्डाय तृतीया सा प्रकीर्त्तिता ॥
स्त्री प्रसूताऽप्रसूता वा पत्यावेव तु जीवति ।
कामात्समाश्रयेदन्यं स्वैरिणी प्रथमा च‡ सा ॥
मृते भर्त्तरि या नारी§ देवरादीनपास्य तु ।
कामतस्तु भजेदन्यं सा द्वितीया प्रकीर्त्तिता ॥
देशापहृतविक्रीता क्षुत्तृष्णाव्यसनार्दिता ।
तवाहमित्युपगता सा तृतीया प्रकीर्त्तिता ॥
देशधर्मानवेक्ष्य स्त्री गुरुभिर्या प्रदीयते ।
उत्पन्नसाहसान्यस्मै सान्त्यिमा स्वैरिणी स्मृता¶ ॥
पुनर्भूणां विधिस्त्वेष स्वैरिणीनां प्रकीर्त्तितः ।
पूर्व्वा पूर्व्वा जघन्यासां श्रेयसी चोत्तरोत्तरा‖ ॥

चो भिन्नक्रमः । स्वैरिणीनामिति सप्तम्यर्थे** षष्ठी, तेन पुनर्भूषु स्वैरिणीषु चेत्यर्थः ।

---

* पुन पत्युर्गृहं यायादिति पाठान्तरम् ।

† असत्सु या देवरेषु बान्धवैस्तु प्रदीयते इति पाठान्तरम् ।

‡ तु इति पाठान्तरम् ।

§ या तु स्त्रीति पाठान्तरम् ।

¶ अन्तिमा स्वैरिणी तु सेति मतेति च पाठान्तरम् ।

‖ तूत्तरोत्तरेति पाठान्तरम् ।

** सप्तम्या स्थाने इति पाठान्तरम् ।

मनुः ।

पतिं हित्वापकृष्टं* स्वमुत्कृष्टं या निषेवते ।
निन्द्यैव सा लोके भवति परपूर्व्वेति चोच्यते ॥

अपकृष्टमिति† न परपूर्व्वात्वे बीजं, किन्त्वन्यनिषेवणप्रयोजक-मित्येतावतोक्तम्‡ ।

तिस्रः पुनर्भुवस्तस्रः स्वैरिण्य इत्यभिधाय शङ्खलिखितौ ।

तत्र पूर्व्वा पूर्व्वा जघन्या तासामपत्यानामृक्थपिण्डो-दकमन्त्रेषु यो विकल्पः स मातुरेव गुणवत्तया व्याख्यातः ।

याज्ञवल्क्यः ।

अक्षता च क्षता चैव पुनर्भूः संस्कृता पुनः ।
स्वैरिणी या पतिं हित्वा सवर्णं कामतः श्रयेत् ॥

हारीतः ।

स्वैरिणी च पुनर्भूश्च रेतोधाः कामचारिणी ।
सर्व्वभक्ष्या च विज्ञेयाः पञ्चैताः शूद्रयोनयः ॥
एतासां यान्यपत्यानि उत्पद्यन्ते कदाचन ।
न तान्पङ्क्तिषु युञ्जीत न ते पङ्क्त्यर्हकाः§ स्मृताः ॥

रेतोधाः कुण्डमाता, कामचारिणी चतुःपुरुषगमनानन्तरमपर-

* हित्वावकृष्टमिति पाठान्तरम् ।
† अवकृष्टमितीति पाठान्तरम् ।
‡ मित्येतावदुक्तमिति पाठान्तरम् ।
§ पङ्क्त्यर्हा इति पाठान्तरम् ।

पुरुषगामिणी, सर्व्वभक्ष्या सुरापी।

कात्यायनः।

सुखार्थं या प्रवृत्ता स्त्री न भर्त्तुः सुतकाम्यया।
पुत्रन्तु जनयेदेव निन्द्या पापा च* सा स्मृता॥
भर्त्तृगोत्रं समुत्सृज्य नारी यद्यन्यमाश्रिता।
निन्द्यैव सा स्मृता लोके परपूर्व्वेति चोच्यते॥
परपूर्व्वाश्रिता यत्र तत्र स्यान्नाश्रितः† प्रभुः।
क्रमाहृते तु धर्म्मोऽयं लब्धा वा स्वामिनो भवेत्॥
निरोद्धव्या च ताड्या च परपूर्व्वापराधतः।
अक्षमाज्ञानवेत्तन्तो ताडयन्दण्डमर्हति॥
चौरहस्तान्नदीवेगाद्दुर्भिक्षाद्देशविभ्रवात्।
निस्तार्थ्यः‡ यापि कान्तारात्§ लब्धा त्यक्ता क्रमागता॥
आसां भोगे न दोषः स्यादिति शास्त्रविनिश्चयः।
स्वामिदत्तान्तु गृह्णीयादेषा चेन्न¶ ततोऽन्यथा॥

न दोषो दण्डप्रयोजकः।

तथा।

दीयमानमथात्मानं या नारी नानुमोदते।

---

* तु इति पाठान्तरम्।

† स्यान्नाश्रित इति पाठान्तरम्।

‡ निस्तीर्य्येति पाठान्तरम्।

§ वासकान्तारादिति पाठान्तरम्।

¶ गृह्णीयाद्यद्येषेति पाठान्तरम्।

न सा देया न च ग्राह्या विधिरेष स्मृती गुरुः* ॥
न चोत्तमां न चाकामां तथा पुत्रवतीं न च ।
ईदृशीं† त्वनुरूपेण निष्क्रयेण प्रमीलयेत् ॥

इति विवादरत्नाकरे परपूर्व्वाविधितरङ्ग: ।



## अथ दायभाग: ।

तत्सङ्गती मनुः ।

एष स्त्रीपुंसयोरुक्तो धर्म्मो वो रतिसंहितः* ।
आपद्यपत्यप्राप्तिश्च दायभागं† निबोधत ॥

नारदः ।

विभागोऽर्थस्य पित्रस्य पुत्रैर्यत्र प्रकल्प्यते ।
दायभाग इति प्रोक्तं तद्विवादपदं बुधैः ॥

यत्र यस्मिन्व्यवहारपदे प्रकल्प्यते क्रियते ।

मनुः‡ ।

* भृगुरिति पाठान्तरम् ।
† ताद्दशीमिति पाठान्तरम् ।

* रतिसंश्रित इति पाठान्तरम् ।
† दायधर्ममिति पाठान्तरम् ।
‡ यम इति पाठान्तरम् ।

ऊर्द्ध्वं पितुश्च मातुश्च समेत्य भ्रातरः समम्।
भजेरन्पैतृकं रिक्थमनीशास्ते हि जीवतोः॥

समं तुल्यं नात्र विंशोद्धारादीति यावत्। ननु प्रमीतपितृक-विभाग एव मनुना विंशोद्धारादीनां कथनात्कथं सममिति न* तस्य गुणवज्ज्येष्ठादिविषयत्वात्†। उदयकरस्तु‡ सममिति क्षतोद्धारधनाभिप्रायमिति व्याख्यातवान्। हलायुधपारि-जाताभ्यान्तु सममिति स्थाने सहेति पठितं, व्याख्यातञ्च पारिजातेन सह परस्परम्। पैतृकमित्यत्रैकशेषं§ कृत्वा तद्धित-प्रत्ययः¶ तेन मातृधनस्यापि ग्रहणमिति हलायुधः। पैतृक-मित्युपादानेऽपि पैतामहादिधनमपि विवक्षितम्। द्रव्ये पिता-महोपात्ते इत्यादि वाक्येन तत्रापि भागस्य बोधनादित्यपरे‖। इयमपि चेदं विवक्षितं, परन्तु भूतपूर्व्वगत्या** मातृधने तु दुहितृतदन्वयाभावे†† पुत्रभागान्वय‡‡ इति बोद्धव्यम्।
देवलः।

---

* चेन्नेति पाठान्तरम्।
† गुणवज्ज्येष्ठविषयत्वादिति पाठान्तरम्।
‡ उदयनस्त्विति उदयकस्त्विति च पाठान्तरम्।
§ पैतृकमित्येकशेषमिति पाठान्तरम्।
¶ तद्धित इति पाठान्तरम्।
‖ बोधनादित्यपर इति पाठान्तरम्।
** भूतपूर्व्वरीत्येति पाठान्तरम्।
†† तद्दुहितृतदन्वयाभावे इति पाठान्तरम्।
‡‡ पुत्रविभागान्वय इति बोध्यमिति पाठान्तरम्।

पितर्य्युपरते पुत्रा विभजेयुर्धनं पितुः ।
अस्वाम्य हि भवेदेषां निर्दोषे पितरि स्थिते ॥

निर्दोषे पातित्यादिदोषरहिते ।

नारदः ।

पितर्य्यूर्द्ध्वं गते पुत्रा विभजेयुर्धनं पितुः ।
मातुर्दुहितरोऽभावे दुहितॄणां तदन्वयः ॥

मातुर्धनं दुहितरो विभजेरन्, दुहितॄणामभावे तदन्वयी दुहित्रन्वयी विभजेदित्यर्थः । पितर्य्यूर्द्ध्वं गत इत्येतावतैव विभागे सिद्धे पुत्रग्रहणं क्षेत्रजादीनामप्यवबोधार्थं, ततश्च* द्वादशपुत्राणामन्यतरस्मिन्नपि† विद्यमाने नान्यस्य धनभाक्त्वं, पितुरिति वचनं भ्रातॄणां मध्ये यद्येकस्य विद्याधनादि विभजेत्, तदा तस्य‡ विभागो नास्तीति बोधनार्थम्, दुहितुः सान्निध्यात्तत्पदेन तस्या एव परामर्शौचित्यात् । लक्ष्मीधरस्वरसोऽप्येवम् । प्रकाशपारिजातौ तु तदन्वयो दुहित्रन्वयः पुत्रपौत्रादिरित्याहतुः ।

शङ्खलिखितौ ।

अत ऊर्द्ध्वमृक्थभागी न जीवति पितरि पुत्रा ऋक्थं विभजेरन्, यद्यपि स्यात्पश्चादधिगतं तैरनर्हा एव पुत्राः । अर्थधर्मयोरस्वातन्त्र्यात्पितरि निर्दोषे पश्चादधिगतं

* तत इति पाठान्तरम् ।

† पुत्राणामेकस्मिन्नपीति पाठान्तरम् ।

‡ पुत्राणां मध्ये यद्येकस्य धनादिविभागस्तदा तस्येति पाठान्तरम् ।

पितृनिरपेक्षैः पुत्रैः समर्थैर्विद्यादिभिर्मिलित्वा अर्ज्जितम्।

अथ मनुः।

ज्येष्ठ एव तु गृह्णीयात्पित्र्यं धनमशेषतः।
शेषास्तमुपजीवेयुर्यथैव पितरं तथा॥
ज्येष्ठेन जातमात्रेण पुत्री भवति मानवः।
पितॄणामनृणश्चैव स तस्मात्सर्व्वमर्हति॥
यस्मिन्नृणं सन्नयति येन चानन्त्यमश्नुते।
स एव धर्म्मजः पुत्रः कामजानितरान्विदुः॥
पितेव पालयेत्पुत्राञ्ज्येष्ठो भ्रातॄन्यवीयसः।
पुत्रवच्चापि वर्त्तेरञ्ज्येष्ठभ्रातरि* धर्म्मतः॥
ज्येष्ठः कुलं वर्द्धयति विनाशयति वा पुनः।
ज्येष्ठः पूज्यतमो लोके ज्येष्ठः सद्भिरगर्हितः॥
यो ज्येष्ठो ज्येष्ठवृत्तिः स्यान्मातेव स पितेव सः।
अज्येष्ठवृत्तिर्यस्तस्य† स संपूज्यस्तु बन्धुवत्॥

तथा।

न चादत्त्वा कनिष्ठेभ्यो ज्येष्ठः कुर्व्वीत यौतकम्।

ज्येष्ठएव तु गृह्णीयादिति सकलज्येष्ठगुणवाञ्ज्येष्ठो विभाज्यधने‡ पितृवत्स्वतन्त्रः स्यादित्यर्थः। तमुपजीवेयुस्तत्कृतवृत्त्या वर्त्तेरन्। पुत्रीभवति कृतापत्योत्पत्तिर्यास्तार्थो भवती-

* ज्येष्ठे भ्रातरीति पाठान्तरम्।

† यस्तु स्यादिति पाठान्तरम्।

‡ विभाज्यपितृधने इति पाठान्तरम्।

त्यर्थः। मात्रग्रहणान्न संस्कारापेचा*। अनृण: विभिन्नैर्भै-र्ऋणैर्वाञ्जायते इति श्रुत्या यहणत्रयं बोधितं तचैकस्मा-दुत्तीर्णो भवतीत्यर्थः। सन्नयति सङ्गमयति†। आनन्त्यं सुखानां तेनानन्तं सुखमित्यर्थः, अश्नुते प्राप्नोति ऋणमुक्तः सन्नित्यर्थः। कामजानित्यर्थवादमात्रम्‡। कनीयसां भाग-बोधनेन भागाभावाबोधकत्वात्। पितेव पालयेत्र तु विप्र-लभेत। पुत्रवच्चापि वर्त्तेरन्न तत्र द्वेष कुर्य्युरित्यर्थः। कुलं वर्द्धयति सम्यग्व्यापारेण कनिष्ठपरिपालनेन कुलवृद्धिः। विना-शयतीति योग्यतामात्रम्। ज्येष्ठस्य वृत्तिः स्नेहेन कनीयसां भरणपालनादि। बन्धुवत्प्रत्युत्थानाभिवादनैर्मातुलादिवत् पूजनीयो नावज्ञाचरणेन। यौतकं तेभ्यः पृथक्कृत्य कल्पितं द्रव्यं, यु मिश्रणे युधातुपाठात्§। हलायुधस्तु यौतकं भार्य्यालङ्का-रादीत्याह।

नारदः।

विभृयाद्वेच्छतः सर्व्वाञ्ज्येष्ठोभ्राता यथा पिता।
भ्राता शक्तः कनिष्ठो वा शक्त्यपेचा कुले स्थितिः॥

शङ्खलिखितौ।

कामं वसेयुरेकतः संहता वृद्धिमाचचीरन्।

---

* सस्कारापेचामादर इति पाठान्तरम्।

† संदापयतीति पाठान्तरम्।

‡ अनुवादमात्रमिति पाठान्तरम्।

§ यु मिश्रणे धातुपाठादिति मिश्रणे युधातुपाठादिति च पाठान्तरम्।

संहृता अन्योन्यालम्बनतया* वृद्धिमाचचीरन् वृद्धिं स्फुटां कुर्व्वीरन्, वृद्धियुक्ता भवन्तीति यावत्।

मनुः।

एवं सह वसेयुर्वा पृथग्वा धर्म्मकाम्यया।
पृथग्विवर्द्धते धर्म्मस्तस्माद्धर्म्म्या पृथक्क्रिया॥

पृथगित्यादि। मध्यगधनस्य स्वेच्छया अविनियोज्यत्वात्† निरपेक्षस्वत्वासद्द्रव्य-साध्य-यागाद्यनुष्ठानाभावात्तन्निवृत्त्यर्थोऽयं न्यायप्राप्तो विभाग उच्यते। पृथग्वा धर्म्मकाम्ययेति न पुनरविभागादधर्म्मः कलञ्जभक्षणादिवत्, विभागाच्च धर्म्मो ज्योतिष्टोमादिवदिति।

बृहस्पतिः।

एकपाकेन वसतां पितृदेवद्विजार्च्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे॥

एकपाकेनेत्यत्राविभागे सतीति‡ विवक्षितम्।

हारीतः।

जीवति पितरि पुत्राणामर्थादानविसर्गाक्षेपेषु न स्वातन्त्र्यं, कामदाने प्रोषिते चार्त्ते गते वा ज्येष्ठ एवार्थांश्चिन्तयेत्।

अर्थादानं पितृनैरपेक्षेण साधारणधनग्रहणम्, अर्थार्जनमिति

---

* अन्योन्यालम्बनत इति पाठान्तरम्।

† अनियोज्यत्वादिति पाठान्तरम्।

‡ सतीति पाठान्तरम्।

पारिजातः। विसर्गो दानं, आक्षेपः ऋणिकहस्तात्तद्धनग्रहणम्*। कामदाने काममात्रादेवार्थदातरि। प्रकाशकारिणु यामं दीने इति पठित्वा काममिति सन्निहितपित्रनुज्ञामाहेति, दीने विचित्ते† इति विवृतम्।

शङ्खलिखितौ।

> पितर्य्यशक्ते कुटुम्बस्य व्यवहारं‡ ज्येष्ठः कुर्य्यादनन्तरो वा कार्य्यज्ञस्तदनुमतेन नलकामे पितरि ऋक्थभागो§ वृद्धे विपरीतचेतसि दीर्घरोगिणि वा ज्येष्ठएव पितृवदर्थान् पालयेदितरेषां ऋक्थमूलं हि कुटुम्बमस्वतन्त्राः पितृमन्तो मातर्य्यप्येवमवस्थितायाम्।

अनन्तरोऽनुजः, तदनुमतेन ज्येष्ठानुज्ञया। विपरीतचेतसि वातादिदोषेण भ्रान्तचेतसि, ऋक्थमूलं धनमूलं कुटुम्बं कुटुम्बभरणम्। अस्वतन्त्रा दानाद्यनधिकारिणः। मातर्य्येवं गुणवत्यां जीवन्त्यामस्वतन्त्राः पुत्रा इत्यन्वयः।

इति विवादरत्नाकरे दायभागतरङ्गः¶।



* तद्धनोद्ग्राहणमिति पाठान्तरम्।

† अचित्ते इति पाठान्तरम्।

‡ कुटुम्बव्यवहारमिति पाठान्तरम्।

§ ऋक्थविभाग इति पाठान्तरम्।

¶ दायविभागतरङ्ग इति पाठान्तरम्।

## अथ जीवत्पितृकविभागः।

तत्र मनुविष्णू।

> पैतृकन्तु पिता द्रव्यमनवाप्यं यदाप्नुयात्।
> न तत्पुत्रैर्भजेत्सार्द्धमकामः स्वयमर्जितम्॥

पैतृकं पितृकमागतम्, अनवाप्यं पित्रा आप्तुमशक्यं, न तत्पुत्रैः सममनिच्छन्विभजेत्स्वयमर्जितत्वात्।

याज्ञवल्क्यः।

> भूर्या पितामहोपात्ता निबन्धो द्रव्यमेव वा।
> तत्र स्यात्सदृशं स्वाम्यं पितुः पुत्रस्य चोभयोः॥

नियम्यते इति निबन्धः आकरादौ नियतं लभ्यं, सदृशं स्वाम्यं नात्वांशाधिक्यं, नवा पितुरिच्छया दानम्।

व्यासः।

> क्रमागते गृहक्षेत्रे पितापुत्राः समांशिनः।
> पैतृके न विभागार्हाः सुताः पितुरनिच्छतः॥

बृहस्पतिः।

> द्रव्ये पितामहोपात्ते स्थावरे जङ्गमे तथा।
> सममंशित्वमाख्यातं पितुः पुत्रस्य चैव हि॥
> पैतामहं हृतं पित्रा स्वशक्त्या यदुपार्ज्जितम्।
> विद्याशौर्य्यादिनाप्तञ्च तत्र स्वाम्यं पितुः स्मृतम्॥
> प्रदानं स्वेच्छया कुर्य्याद्भागञ्चैव ततो धनात्।
> तदभावे तु तनयाः समांशाः सम्प्रकीर्त्तिताः॥

हृतं परैरपहृतं यदशक्त्या पितामहेन नोद्धृतं स्वशक्त्या च पित्रोद्धृतं तद्विद्यादौर्य्यादिनाप्तञ्च कुर्य्यादित्यर्थः।

अथ पुत्रा विभजेरन्नित्यधिकारे नारदः।

मातुर्निवृत्ते रजसि प्रत्तासु भगिनीषु च।
निवृत्ते वापि रमणे* पितर्य्युपरतस्पृहे॥

प्रत्तासु विवाहितासु, निवृत्ते रमणे रतिसामर्थ्ये निवृत्ते, उपरतस्पृहे विषयस्पृहाविच्छेदवति, प्रकाशे तु निरपेक्षे च रमणे, निरस्ते चापि रमणे† इति पाठद्वयं वाक्यभेदपुरस्कारेण‡ लिखितम्, तदपि तदीयार्थव्याख्यानेन फलतोऽविरुद्धम्। हलायुधस्तु रमणादिति§ पठितवांस्तत्रापि फलाविशेष एव।

बृहस्पतिः।

पित्रोरभावे भ्रातॄणां विभागः संप्रदर्शितः।
मातुर्निवृत्ते रजसि जीवतोरपि शस्यते॥

अत्रापि निवृत्ते चापीति विवक्षितम्।

गौतमः।

---

* मरणे इति पाठान्तरम्।

† चाप्यमरणे इति पाठान्तरम्।

‡ निवृत्ते मरणेऽवति मरणार्थनिवृत्ते। उपरतस्पृहे विषयस्पृहाविच्छेदवति। प्रकाशे तु निरपेक्षे चामरणे निरस्ते चाप्यमरणे इति पाठद्वयं भेदपुरस्कारेणेति पाठान्तरम्।

§ मरणादिति पाठान्तरम्।

ऊर्द्धं पितुः पुत्रा ऋक्थं विभजेरन्* निवृत्ते रजसि मातुर्जीवति पितरि चेच्छति ।

शङ्खलिखितौ ।

जीवति वा पितरि ऋक्थभागोऽनुमतः प्रकाशं वा मिथो वा धर्म्मतः ।

अनुमतः पित्रनुमतः, प्रकाशं मध्यस्थसमक्षं, मिथस्तदसमक्षम् ।

बौधायनः ।

पितुरनुमत्या दायविभागः ।

अथ† हारीतः ।

जीवन्नेव वा विभज्य‡ वनमाश्रयेद्वृद्धाश्रमं वा गच्छेत् स्वल्पेन वा संविभज्य भूयिष्ठमादाय वसेद्यद्युपदस्येत् पुनस्तेभ्यो गृह्णीयात् । क्षीणाय विभजेत् ।

वनमाश्रयेदाश्रमान्तरं परिगृह्णीयात् । वेदसन्यासित्वेन पुत्रै-श्वर्य्ये वासो वृद्धाश्रम इति प्रकाशकारः । वृद्धाश्रमश्चतुर्थाश्रम इति हलायुधपारिजातौ, तन्मते वनमाश्रयेदित्यनेन वानप्रस्था-श्रममाश्रयेदिति विवक्षितम् । वस्तुतस्तु वाकारोऽनास्थायाम्, तेन वनगमनवृद्धाश्रमगमनत्वाभिमतादन्योऽपि स्थितिप्रकारो-लभ्यते । तत्र वा§ वसेद्गृहतो वेदसन्यासी गृहस्थाश्रममेव

* भजेरन्निति पाठान्तरम् ।

† अन्नेति पाठान्तरम् ।

‡ अर्थं विभज्येति पाठान्तरम् ।

§ एवमिति पाठान्तरम् ।

स्वातन्त्रेण वाञ्छति, तं प्रति स्वल्पेनेत्यादि बोद्धव्यम्। उपदश्येदुपचीयेत।

अत्र नारदः।

पितैव वा स्वयं पुत्रान्विभजेद्वयसि स्थितः।

ज्येष्ठं वा श्रेष्ठभागेन यथा वास्य मतिर्भवेत्॥

वाशब्दो विकल्पार्थः। पिता वा पुत्रा वा विभजेयुः। वयसि स्थितः पूर्व्वविशेषेण हीनतया असमर्थ इत्यर्थः। अतएव गौतमः विभक्तजः पित्र्यमेवेति विभागोत्तरकालं पुत्रोत्पत्तौ विभागमाह। श्रेष्ठः प्रशस्ततमोऽधिक इत्यर्थः। यथा वास्य पितुर्मतिर्भवति समाधिकभागेषु,* तथा विभजेत्।

विष्णुः।

पिता चेत्पुत्रान्विभजेत्तस्य स्वेच्छा स्वयमुपात्तेऽर्थे†।

पितृद्रव्यानुपक्षेपार्जितधनविषयमेतत्।

याज्ञवल्क्यः।

विभागञ्चेत्पिता कुर्य्यात्स्वेच्छया विभजेत्सुतान्।

ज्येष्ठं वा श्रेष्ठभागेन सर्व्वे वा स्युः समांशिनः॥

एतदपि स्वार्जितधनविषयं पूर्व्वपुरुषार्जिते पितापुत्रयोः समांशित्वाभिधानात्।

अत्रैव समं विभागमाश्रित्य विशेषमाह।

यदि कुर्य्यात्समानंशान् पत्न्यः कार्य्याः समांशिकाः।

---

* समाधिकभागे इति पाठान्तरम्।

† स्वयमुपार्जितेऽर्थे इति पाठान्तरम्।

न दत्तं स्त्रीधनं यासां भर्त्रा वा श्वशुरेण वा ॥

यदि पिता पुत्रान्समांशान्* कुर्य्यात्, तदा स्वपत्न्योऽपि समांशिकाः कार्य्याः । एवञ्च† पुत्राणां विषमांशपक्षे पत्न्योऽपि विषमांशा बोद्धव्याः, न तु पुत्रादिपत्न्यः पितुर्विभाजकत्वात् तत्प्रतियोगिकपत्नीत्वस्यैवावगमात् । यदि तु कस्याश्चित् पत्न्याः भर्त्रा श्वशुरेण वा धनं न दत्तं, तदा ता अपि ताव-च्छनवत्यः कार्य्या इत्यर्थः । अत्र पत्नीनामपुत्राणामपीति हला-युधः । दत्ते स्त्रीधने अर्द्धं वक्ष्यतीति‡ प्रकाशः ।

नारदः ।

द्वावंशौ प्रतिपद्येत विभजन्नात्मनः पिता ।

प्रतिपद्येत लभेत, विभजन्विभागं कुर्व्वाणः ।

बृहस्पतिः ।

जीवद्विभागे तु पिता गृह्णीतांशद्वयं स्वकम्§ ।

एतच्च शङ्खपर्य्यालोचनया¶ एकपुत्रत्वे‖ द्रष्टव्यम् ।

तथाच पित्रधिकारे शङ्खलिखितौ ।

स यद्येकपुत्रः स्याद्द्वौ भागावात्मनः कुर्य्याद्विपद-

* समानांशानिति पाठान्तरम् ।

† एवमिति पाठान्तरम् ।

‡ वक्ष्यते इतीति पाठान्तरम् ।

§ गृह्णीयादंशकद्वयमिति पाठान्तरम् ।

¶ शङ्खवाक्यपर्य्यालोचनयेति शङ्खवचनपर्य्यालोचनयेति च पाठान्तरम् ।

‖ एकपुत्रत्वे इति पाठान्तरम् ।

चतुष्पदेषु रूपमधिकम् ।

रूपमधिकमिति वसुस्वरूपमधिकं गृह्णीतांशद्वयं गृह्णीयादित्यर्थः ।

तथा ।

द्युपभोज्यैठाय गृहं यवीयसे, अन्यच पितुरवस्थानात् ।

अस्यार्थः । नानापुत्रवत्त्वेऽ* ज्येष्ठकनिष्ठयोर्गुणवत्त्वे ज्येष्ठाय द्युपभोदातव्यः, गृहं कनिष्ठाय, पितुरनिच्छयापि, अन्यथा नियमानर्थक्यापत्तेः । यत्तु याज्ञवल्क्येन सर्वे वा स्युः समांशिन इत्युक्तं तत्सर्वेषां तुल्यरूपत्वे पितुरिच्छया समांशित्वं न्यूनाधिकांशित्वञ्चेत्यविरोध इति हलायुधः । पारिजातस्तु एकपुत्रः ज्येष्ठपुत्र इत्याह । भाष्यकारस्तु† पुत्रशब्दं न पठितवान्, यथैकाकी स्यादिति पठितवान्, यथैकाकी पत्नीविरहितोऽपि स्यात्तदांशद्वयं गृह्णीयात्, सपत्नीकश्चेत्तामप्यपरेणांशेन तोषयेत् । रूपमधिकं द्विपदचतुष्पदमध्ये एकमंशद्वयाधिकं गृह्णीयात्, ज्येष्ठयवीयसोर्गुणवत्त्वे चायमधिकविधिः पितुरनिच्छयापि, अन्यथा नियमानर्थक्यापत्तेः, याज्ञवल्क्योक्तसमांशित्वञ्च सर्वेषां गुणवत्त्वेन । उत्कर्षाभावे पितुरिच्छया समांशित्वं न्यूनाधिकांशित्वञ्चेत्यविरोध इत्याह । अन्यचेति पितृवासगृहवर्जमित्यर्थः ।

बौधायनः ।

---

* नानापुत्रवत्त्वपक्षे इति पाठान्तरम् ।

† भाष्यकारेणेति पाठान्तरम् ।

पुत्रेभ्यो दायं विभजेदितिॐ श्रुतिः समः सर्व्वेषामविशे-
षाद्दरं वा रूपमुद्धरेज्ज्येष्ठस्तस्माज्ज्येष्ठं पुत्रं धनेन निरव-
सायन्तीति श्रुतिर्दशानां वैकमुद्धरेत्† ज्येष्ठः सममितरे
विभजेरन्।

वरं वा रूपमुद्धरेज्ज्येष्ठः यावन्ति वस्तूनि तेषु‡ एकं वरं गृह्णी-
याज्ज्येष्ठ इत्यर्थः। अत्र श्रुतिं हेतुमाह तस्मादित्यादि, ज्येष्ठं
पुत्रं धनेनोद्धरणलक्षणेन, निरवसायन्ति इतरपुत्रेभ्यः पृथक्-
कुर्व्वन्ति, पक्षान्तरं दशानां वेति दशानां गवादीनां सजाती-
यानां एकमुद्धरेत्पितुरनिच्छयापि, सोऽयं विकल्पो ज्येष्ठ-
गुणतारतम्याद्व्यवस्थितः।

आपस्तम्बः।

एकधनेन ज्येष्ठं तोषयित्वा जीवन्पुत्रेभ्यो विभजेत्समं
क्लीबमुन्मत्तं पतितं परिहाप्य।

जीवज्जीवन्नेव यः प्रजोत्पत्त्यासमर्थ इत्यर्थः। एकधनेन उत्कृष्टा-
श्वादिना§ क्लीबमित्यादिना विभागानधिकारिणः सर्व्व-
एवाभिमताः। ज्येष्ठवित्तात्यल्पभूयस्त्वापेक्षया¶ गुणाधिक्ये
सति मन्तव्यमिति व्यवस्था‖।

---

* विभज्यादितीति पाठान्तरम्।

† चैकमुद्धरेदिति पाठान्तरम्।

‡ तावत्सु इति पाठान्तरम्।

§ उत्कृष्टवस्त्रादिनेति पाठान्तरम्।

¶ ज्येष्ठे वित्तविभिन्नितभूयस्त्वापेक्षयेति पाठान्तरम्।

‖ मन्तव्य व्यवस्थेति पाठान्तरम्।

अत्र मनुः।

भ्रातॄणामविभक्तानां यद्युत्थानं भवेत्सह।
न तत्र विषमं भागं पिता दद्यात्कथञ्चन॥

उत्थानं धनार्जनानुकूलव्यापारः।

नारद-बृहस्पति-याज्ञवल्क्याः।

समन्यूनाधिका भागाः पित्रा येषां प्रकल्पिताः।
तथैव ते पालनीया विनेयाः स्युरतोऽन्यथा॥

नारदः।

पित्रैव तु विभक्ता ये समन्यूनाधिकैर्धनैः।
तेषां स एव भागः स्यात्सर्वस्यैव पिता प्रभुः॥

पूर्वं सम्भूयोत्थाने भ्रातॄणां मिलित्वा धनार्जने विषमभाग-निषेधनमिदन्तु पितुरर्जिते विषमविभागविधानमित्यविरोधः।

इति विवादरत्नाकरे जीवत्पितृकविभागतरङ्गः।

---

## अथ प्रमीतपितृकविभागः।

तत्र मनुः।

ज्येष्ठस्य विंश उद्धारः सर्वद्रव्याच्च यद्वरम्।
ततोऽर्द्धं मध्यमस्य स्यात्तुरीयन्तु यवीयसः॥
ज्येष्ठश्चैव कनिष्ठश्च संहरेतां यथोदितम्।

येऽन्ये ज्येष्ठकनिष्ठाभ्यां तेषां स्यान्मध्यमं धनम् ॥
सर्वेषां धनजातानामाददीताग्र्यमग्रजः ।
यच्च सातिशयं किञ्चिद्दशतः प्राप्नुयाद्वरम् ॥

गुणवज्ज्येष्ठादिविषयोऽयमुद्धारः । अत्रेदृशी विषयव्यवस्था, यदा बहवः पुत्रा एकमातृका गुणवन्तः, किन्तु यथाक्रमं गुणह्रासः, तदा ज्येष्ठस्य मध्यकाद्यनादिशो भागः उद्धारः कर्त्तव्यः सर्वद्रव्याच्च यद्वरं धनं तद्दातव्यम्। मध्यमस्य ततोऽर्द्धचत्वारिंश त्तमो भागो मध्यमञ्च धनम्। एवं कनीयसस्तुरीयमशीतितमो भागो हीनञ्च द्रव्यं दातव्यम्। यदा तु ज्येष्ठकनिष्ठावेव गुणवन्तौ तदा तयोर्यथोक्त उद्धारो दातव्यः, ये तु मध्यमा निर्गुणास्तेषां मध्यमं धनम्। मध्यमस्य गुणवतो यदुद्धार रूपमुक्तं चत्वारिंशत्तमो भागः, स समं विभज्य दातव्यः। यदा तु बहवो मध्यमा अतिगुणवन्तस्तदा* प्रत्येकं† चत्वारिंशत्तमो भाग उद्धृत्य दातव्यः, यदि ज्येष्ठो गुणातिशयवान्, अन्ये निर्गुणास्तदा सर्वधनापेक्षया यच्छ्रेष्ठं द्रव्यं‡ यच्च समानजातीयापेक्षया सातिशयं§ पद्मरागादि, सर्वेषां गोमहिष्यादीनां दशतो दशसु दशसु एकं श्रेष्ठमुद्धृत्य ज्येष्ठो गृह्णीयादिति।

---

* अपि गुणवन्तस्तदेति पाठान्तरम्।

† प्रत्येकमवेति पाठान्तरम्।

‡ यच्चा श्रेष्ठमिति पाठान्तरम्।

§ समानजातीयसातिशयमिति पाठान्तरम्।

यत्र ज्येष्ठोऽधिकगुणोऽपरे तु मध्यमगुणास्तत्र,* विशेषमाह गौतमः।

> विंशतिभागो ज्येष्ठस्य मिथुनमुभयतोदद्युक्तो रथो गोवृषः। काणखोरकूटवण्डा† मध्यमस्यानेकाश्चेदविर्धान्यायसी गृहमनोयुक्तं‡ चतुष्पदां चैकैकं यवीयसः सममेवेतरत्सर्व्वम्।

सर्वस्मात्पितृधनाद्विंशतितमो भागो ज्येष्ठस्य, मिथुनं गोमिथुनमुभयतोदन्ता अश्वरासभादय.§ एषामन्यतमसजातीयाभ्यां युक्तो रथः, गोवृषः सेकसमर्थो वृषः, अयमुद्धारः सति सम्भवे ज्येष्ठस्य, काणखोरकूटवण्डा मध्यमस्यानेकाश्चेदिति खोरो खञ्जः, कूटः शृङ्गविकलः, वण्डो बालविरहितः वेँड़े¶ इति यस्य प्रसिद्धिः, अथ मध्यमस्योद्धारो अनेकाश्चेद्येषामपि‖ भवन्तीत्यर्थः। अविर्धान्यायसी गृहमनोयुक्तं चतुष्पदाञ्चैकैकं यवीयस इति,अविमेँषी** व्रीहिलौहयौ. समा-

---

* मध्यगुणास्तत्रेति पाठान्तरम्।

† काणखोरकूटवण्डचौरा इति पाठान्तरम्। तस्मात् रथक परित्यज्य परमस्माद इति चौरशब्दार्थः।

‡ गृहमनोयुक्तश्चेति पाठान्तरम्।

§ रासभादय इति पाठान्तरम्।

¶ वेड़े इति पाठान्तरम्।

‖ यद्यन्येषामपीति पाठान्तरम्।

** अविमेँषी एकवचनादिकमिति पाठान्तरम्।

येन निर्देशादानुरूप्येण किञ्चिद्देयम् । गृहमेकम्, यानः शकटं, युक्तं मनोयद्युक्तं, चतुष्पदां गवादीनामेकैकं कनिष्ठस्योद्धारः । सममेवेतरत्, उद्धृतातिरिक्तं सममेव विभजनीयमित्यर्थः । एवमन्यत्रापि यत्र उद्धारे गुरुलघुभावस्तत्र भ्रातॄणां ज्येष्ठमध्यमकनिष्ठानां गुणवत्त्वाद्यपेक्षया* व्यवस्था द्रष्टव्या । लोके तु ज्येष्ठमात्रपुरस्कारेण च मध्यमकनिष्ठोद्धारस्थानादायैव ज्येष्ठस्य विंशोद्धारो दृश्यते ।

हारीतः ।

> विभजिष्यमाणे गवां समूहे वृषभमेकधनं वरिष्ठं वा ज्येष्ठाय दद्युर्देवतागृहञ्च, इतरे निष्क्रम्य कुर्युः एकस्मिन्नेव दक्षिणं ज्येष्ठायानुपूर्व्यमितरेषाम् ।

एकधनमुत्कृष्टधनम् । देवता विष्ण्वादिप्रतिमा† गृहं चैत्यकम् । निष्क्रम्य‡ कुर्युर्गृहान्तराणीति शेषः । यदा गृहान्निष्क्रम्य गृहान्तरकरणासम्भवः, तदा दक्षिणं वेश्म ज्येष्ठाय भवेदिति शेषः । आनुपूर्व्यमनुपूर्व्यता, तेन मध्यमाय मध्यमं, कनिष्ठाय ततोऽपि हीनमित्यर्थः । हरिहरस्तु देवतागृहपदेन दुर्गादिपूजामण्डपं व्याख्याय तज्ज्येष्ठाय दत्त्वा अन्ये मण्डपान्तरं कुर्युरित्याह ।

---

* गुणवत्त्वानुरूपापेक्षयेति पाठान्तरम् ।

† पूज्यविष्ण्वादिप्रतिमेति पाठान्तरम् ।

‡ ज्येष्ठमिति पाठान्तरम् ।

आपस्तम्बः।

देशविशेषे सुवर्णं कृष्णा गावः कृष्णं भौमं ज्येष्ठस्य पितुः परिभाण्डञ्च।

कृष्णं भौमं भूमिभवं तिलमाषादि, परिभाण्ड भोजनपात्रादि।

बौधायन.।

असति पितरि चतुर्णां वर्णानां गोश्वाजावयो ज्येष्ठांशो यथासंख्येन*।

एतच्च ज्येष्ठस्य भ्रातु. किञ्चिद्गुणवत्त्वे।

देवलः।

पुत्राणां मध्यमोदायः समानानामपीष्यते।
ज्येष्ठस्य दशमं भागं न्यायवृत्तस्य निर्द्दिशेत्॥

मध्यमो दायो मध्यमं धन विंशोऽंशः, एतच्च ज्येष्ठे वेद-समन्विते, अन्येषु निर्गुणेषु मन्तव्यमिति हलायुधपारि-जातौ। अन्ये तु यदा ज्येष्ठोऽग्निवेदसम्पन्नोऽन्येऽपि गुणवन्त-स्तदा ज्येष्ठस्य दशमो भागः, अन्येषां पुत्राणां मध्यमो भागो मध्यमं धनं विंशो भागः प्रत्येकमिति प्रथमखण्डार्थः। यदा-ग्निवेदवाञ्ज्येष्ठोऽन्येऽपि निर्गुणाः, तदा ज्येष्ठस्य दशमो भागो निर्गुणभ्रातॄणान्तु पूर्व्ववच्चत्वारिंशत्तमो भाग एव विभज्य दातव्य इति द्वितीयखण्डार्थः।

इति विवादरत्नाकरे प्रमीतपितृकविभागतरङ्गः।



* असति पितरि गौस्वर्णं कृष्णागाव कृष्णभौममिति पाठान्तरम्।

# अथानेकमातृकभ्रातृविभागः।

तत्र मनुः।

पुत्रः कनिष्ठो ज्येष्ठायां कनिष्ठायाञ्च पूर्व्वजः।
कथं तत्र विभागः स्यादिति चेत्संशयो भवेत्॥

एकं वृषभमुद्धारं संहरेत्* स तु पूर्व्वजः।
ततोऽपरेऽज्येष्ठवृषास्तदूनानां स्वमातृतः॥

पूर्व्वजसजातीयमातृप्रभवत्वानापुत्रविषय एवायं संशयः। नाना-वर्णानां दायविभागस्याग्रे वक्ष्यमाणत्वात्, पूर्व्वजशब्देन पूर्व्वोढ़ायां जातः कनीयानिवोच्यते, ततोऽपरेऽज्येष्ठवृषास्तदूनानां स्वमातृत इत्यग्रिमखण्डात्†। ततो ज्येष्ठवृषादपरे अज्येष्ठवृषाः अज्येष्ठवृषास्तदूनानां ज्येष्ठपुत्रात्कनीयसः ऊनानां तन्मातृकनिष्ठ-मातृकाणामित्यर्थः।

मातृतो ज्येष्ठमभिधाय तत्रैव विशेषमाह।

ज्येष्ठस्तु जातो ज्येष्ठायां हरेदृषभषोड़शाः।
ततः स्वमातृतः शेषा भजेरन्निति धारणा॥

वृषभः षोड़शो यासां गवां ताः,तथा तस्यात्यन्तसाजात्यस्यान्त-रङ्गत्वादुद्धारः‡। शेषा मातुरज्येष्ठत्वेन कारणेन§ अज्येष्ठमेकैकं¶

---

* सत्वभेदिति पाठान्तरम्।

† पुत्राश्चपखण्डादिति पाठान्तरम्।

‡ तासाञ्चात्यन्तसाजात्यस्यान्तरङ्गत्वादुद्धार इति पाठान्तरम्।

§ मातुरज्यैष्ठ्येन कारणेनेति मातुर्ज्येष्ठकनिष्ठेति च पाठान्तरम्।

¶ ज्येष्ठमेकैकमिति पाठान्तरम्।

वृषभं हरेरन्। एतच्च परमतमुक्तं मनुना। स्वमतन्तु, सदृशस्त्रीषु जातानां पुत्राणामविशेषतः। न मातृतो ज्यैष्ठ्यमस्ति जन्मतो ज्यैष्ठ्यमुच्यते इत्यादिना जन्मतो ज्यैष्ठ्यमस्तीति* दर्शितमिति† प्रकाशकारः। हलायुधस्तु अस्यार्थः, यदा ज्येष्ठायां कनिष्ठः, कनिष्ठायाञ्च ज्येष्ठो भवति, तदा योऽसौ कनिष्ठायां पूर्व्वजातः, स एकं श्रेष्ठवृषमुद्धारं गृह्णीयात्। तस्माद्वृषादयोऽन्येऽश्रेष्ठवृषाः, ते तद्दूनानां पूर्व्वजातकनिष्ठानां स्वमातृतः स्वमातृक्रमेण यथापकर्षं‡ प्रत्येकमेकैकशो दातव्याः, परिशिष्टं समं विभजनीयम्। यदा तु ज्येष्ठायामेव ज्येष्ठोभवति तदा-विशेषमाह ज्येष्ठस्त्वित्यादिना। वृषभः षोडशो यासां गवां तास्तथा§। अन्ये पुनः स्वमातृक्रमेण पूर्व्वोक्तमेकैकं वृषभमुद्धारं गृह्णीयुः।

अत्रैव गौतमः।

> वृषभोऽधिको ज्येष्ठस्य, वृषषोड़शा ज्यैष्ठिनेयस्य समधा
> वा¶ ज्यैष्ठिनेयेन यवीयसा।

---

* ज्यैष्ठ्यमस्तीत्यादीति पाठान्तरम्।

† ज्यैष्ठ्यमस्तीत्यादिना दर्शितमितीति पाठान्तरम्।

‡ व्यपकर्षमिति पाठान्तरम्।

§ वृषभ—तथेति पाठस्तु त्रिषु पुस्तकेषु दृश्यते, परं प्रथमनिःशास्य पाठस्य एतत्वादेव पुनरुल्लिखस्य प्रयोजनादर्शनात्प्रमादकृत एवेति ध्येयम्।

¶ भाग इति पाठान्तरम्।

ज्येष्ठः मन्वनुसारात्कनीयसीपुत्रः प्रथमं जातोऽपिचितः*। ज्येष्ठिनेयस्तु ज्येष्ठायां जातो ज्येष्ठः, समधा समप्रकारेण, एतच्च सर्व्वेषां तुल्यरूपत्वे† द्रष्टव्यम्।

शङ्खलिखितौ।

वृषभोऽधिको ज्येष्ठाय शृङ्गं यवीयसे।

अत्रापि ज्येष्ठो मन्वनुसारात्कनीयसीपुत्र एव द्रष्टव्यः।

गौतमः।

प्रतिमातृवान्ववर्गे भागविशेषः‡।

अस्यार्थः, यदा बह्वीषु समानजातीयासु स्त्रीषु समसंख्या बहवः पुत्रा भवन्ति§ तदा मातृभागस्य दुःशकत्वात्¶ मातृभागमादाय तैः स्ववर्गे सोदर्य्यभ्रात्रादिरूपे विभागविशेषो‖ विशेषोद्धाररूपः कर्त्तव्यः।

तदाह** वृहस्पतिः।

यद्येकजाता बहवः समाना जातिसंख्यया।

सापत्नास्तैर्विभक्तव्यं मातृभागेन धर्मतः।

---

* प्रथमजातोऽपिचित इति पाठान्तरम्।

† तुल्यरूपत्वेनेति तुल्यपरत्वे इति च पाठान्तरम्।

‡ प्रतिमातृवान्ववद्विभागविशेष इति पाठान्तरम्।

§ अतिबहव पुत्रा सन्तीति, अतिबहव पुत्रा भवन्तीति च पाठान्तरम्।

¶ दुःशकत्वादिति पाठान्तरम्।

‖ स्ववर्गे सोदर्य्ये भ्रात्रादिविभागविशेष इति पाठान्तरम्।

** तत्राहेति पाठान्तरम्।

सवर्णा भिन्नसंख्या ये पुत्रभागस्तेषु विद्यते ॥

विष्णुः ।

सवर्णाः पुत्राः समानानंशानादद्युः* ज्येष्ठाय श्रेष्ठमुद्धारञ्च दद्युः ।

एतच्च पुत्राणां भिन्नसंख्यकत्वे ।

मनुः ।

उद्धारो न दशस्वस्ति सम्पन्नानां स्वकर्म्मसु ।
यत्किञ्चिदेव देयं स्याज्ज्यायसे मानवर्द्धनम् ॥

अस्यार्थः, अध्ययनादितुल्येषु दशतयाप्युपादरमित्युद्धारो न कर्त्तव्य† । एतच्चोपलक्षण, सर्व्वेषामेवोद्धाराणामिह‡ प्रतिषेध, यत्किञ्चिदेवेति वचनात्, किन्तु जन्ममात्रनिबन्धनज्येष्ठनिमित्तकं किञ्चिन्मानवर्द्धनं दातव्यम् । यदा गुणवत्त्वेन तेषां परस्परं विशेषो भवति, तदा तदूनानां समाहृती ज्येष्ठस्तु जातो ज्येष्ठायामिति च§ मन्तव्यमिति लिखितोक्तवान् । यत् केचिदुक्तं¶ तदूनानां स्वमाहृत इति ज्येष्ठस्तु जातो ज्येष्ठायामिति च पूर्व्वपचमुक्ता‖ सदृशस्त्रीष्वित्यादिना सिद्धान्तितम् ।

* समानंशानादद्युरिति पाठान्तरम् ।

† न दशेति तथाप्युपादरमिति चउद्धारो न कर्त्तव्य इति पाठान्तरम् ।

‡ सर्व्वेषामुद्धाराणामेव प्रतिषेध इति, सर्व्वेषामेवोद्धाराणां प्रतिषेध इति च पाठान्तरम् ।

§ तदूनानां माहृतोज्येष्ठमिति, तदूनानां स्वमाहृतो ज्येष्ठमिति च पाठान्तरम् ।

¶ केनचिदुक्तमिति पाठान्तरम् ।

‖ पूर्व्वं पच सम्यश्चेति पाठान्तरम् ।

अन्यथा विरोधादिति तदपहस्तितम्। गुणाचारादिति विशेषेण व्यवस्थायाः प्रतिपादितत्वादिति, युक्तश्चैतत्सति सिद्धान्तत्वे पूर्व्वपक्षितत्वस्य* व्यवस्थापनानर्हत्वात्। लक्ष्मी-धरेण ज्येष्ठापुत्रस्य कनीयस एव ज्येष्ठत्वप्रयुक्तोद्धारव्यवस्थापनाच्च पारिजातस्याप्येवं† परिग्रहाच्च‡।

तथा।

जन्मज्यैष्ठ्यस्य चाह्वानं सुब्रह्मण्यास्वपि§ स्मृतम्।
यमयोश्चैव गर्भेषु जन्मतो ज्येष्ठता मता॥

सुब्रह्मण्या¶ नाम मन्त्रविशेषो ज्योतिष्टोमे छन्दोगैर्निगद्यते। प्रयोगबहुत्वाद्बहुवचनं तत्र‖ पठ्यते प्रथमपुत्रेण पितरं व्यपदिश्याह्वयते। अमुकस्य पिता अमुकस्य पितामहो यजत इति, तच्च जन्मज्येष्ठतया विहितं नाटसूत्रे, यथा ज्येष्ठं स्त्रीपुंसां ये जीवेयुरिति वचनात्।

देवल।

वह्निर्वर्णेषु चारित्र्याद्यमयोः पूर्व्वजन्मतः।
यस्य जातस्य यमयोः पश्यन्ति प्रथमं मुखम्।

---

* पूर्व्वपक्षत्वस्येति पाठान्तरम्।

† पारिजातस्यावैवमिति पाठान्तरम्।

‡ पारिजातस्यानैव परिग्रह इति पाठान्तरम्।

§ सुब्रह्मण्यास्वपीति पाठान्तरम्।

¶ सुब्रह्मण्येति पाठान्तरम्।

‖ बहुवचनमपीति पाठान्तरम्।

सन्तानः पितरश्चैव तस्मिञ्ज्येष्ठं प्रतिष्ठितम् ॥

मनुः ।

यो ज्येष्ठो विनिकुर्व्वीत लोभाद्भ्रातॄन्यवीयसः ।
सोऽज्येष्ठ स्यादभागश्च नियन्तव्यश्च राजभिः ॥

विनिकुर्व्वीत वञ्चयेत् । अज्येष्ठो ज्येष्ठवन्न पूज्यः ।

तथा ।

एवं समुद्धृतोद्धारे समानंशान्प्रकल्पयेत् ।
उद्धारेऽनुद्धृते त्वेषामियं स्यादंशकल्पना ॥
एकाधिकं हरेज्ज्येष्ठः पुत्रोऽध्यर्द्धं ततोऽनुजः ।
अंशमंशं यवीयांस इति धर्म्मो व्यवस्थितः ॥

एकाधिक एकेनांशेनाधिकं द्वावंशाविति यावत्, ततोऽनुजः पुनरध्यर्द्धं अर्द्धांशसहितमेकमंशं गृह्णीयात्, कनीयांसस्तु प्रत्येकमेकैकमंशं यदा विनोद्धारं विभागस्तदा । एतच्च यदा ज्येष्ठतदनुजौ गुणविद्यातिशयसम्पन्नौ, अन्ये तु निर्गुणास्तदा मन्तव्यम् । जन्मविद्यागुणज्येष्ठो द्व्यंशं दायादवाप्नुयादिति ज्येष्ठमधिकृत्य बृहस्पतिवचनात्, तदनुजे च न्यायसाम्यात् । विंशोद्धारादि च, यदा सर्व्वे गुणाचारादियुक्ताः, परस्परं गुणाचारादौ च किञ्चिद्वैधर्म्यं तदा बोद्धव्यम् ।

गौतमः ।

द्व्यंशी वा पूर्व्वजः स्यादेकैकमितरेषाम् ।*

इदञ्च ज्येष्ठस्यैव गुणातिशययुक्तत्वे अन्येषां निर्गुणत्वे ।

---

* तमधिकृत्येति पाठान्तरम् ।

तथा ।

एकैकं वा धनं रूपवत्* काम्यं पूर्व्वतः पूर्व्वो† लभेत दशतः पशूनाम् ।

समानजातीयान्दशतो दश दश पशून् पूर्व्वः पूर्व्वोलभेतेत्यर्थः ।

नैकशफद्विपदानाम् ।

अश्वादीनामेकशफानां स्त्र्यादीनाञ्च द्विपदानां न दश दश गृह्णीयादित्यर्थः । एतच्च सर्व्वेषां समत्वे धनबहुले च मन्तव्यम् ।

वशिष्ठः ।

अथ भ्रातॄणां दायभागो द्व्यंशं हरेज्ज्येष्ठो गवाश्वस्य चैकं‡ दशममजादयो गृहञ्च कनिष्ठस्य कार्ष्णायसं गृहोपकरणानि मध्यमस्य ।

द्व्यंशमिति, द्वावंशौ ज्येष्ठोहरेद्गवाश्वस्येति दशसु गोषु अश्वेषु चैकैकं श्रेष्ठं गृह्णीयात् । इदञ्च वशिष्ठवचनं ज्येष्ठस्य सातिशयगुणवत्त्वे इतरयोश्च गुणवत्त्वे ।

नारदः ।

ज्येष्ठायांशोऽधिकोदेयः कनिष्ठायावरः स्मृतः ।
समांशभागाः शेषाः स्युरप्रत्ता भगिनी तथा ॥
क्षेत्रजेषु च पुत्रेषु तद्वज्जातिषु धर्म्मतः ।

---

* धनरूपवदिति पाठान्तरम् ।

† पूर्व्वपूर्व्वे इति पाठान्तरम् ।

‡ चान्विति पाठान्तरम् ।

प्रकाशकारेण तु वाक्यमिदं कनिष्ठायावरं इति स्थाने श्रेष्ठाय तु वरं इति पठितं व्याख्यातञ्चाग्रे प्रथमोत्पन्नस्यांशद्वयम् श्रेष्ठः कुटुम्बकर्म्मसुप्रयुक्तः, तस्य वरं श्रेष्ठं किञ्चिद्देयमिति। अप्रत्ता कुमारी भगिनी, तथा अंशभागिनीत्यर्थ* भागधेयमौरसे क्षेत्रजे च इत्यग्रे व्यक्तीभविष्यति†। औरसेषु पुत्रेषु तदुक्तं‡ क्षेत्रजेष्वाह क्षेत्रजेषु पुत्रेषु तदज्जातेषु धर्म्मतः§ तद्विभागो यथौरसेषूक्तः, किम्भूतेषु¶ जातेषु धर्म्मतः, स्वं क्षेत्रं क्लीवादिभिर्यदान्यस्मै सकुल्याय सवर्णाय वा दीयते, तदा च ततोजातो धर्म्मतो जात‖ इत्युच्यते, तेषु अप्यधिकोज्येष्ठांशो देय इति। कथं पुनरेकस्य क्षेत्रजातानामनेकेषां सम्भवः, उच्यते यमजोत्पन्नविषयमेतत्।

कीदृशाय ज्येष्ठायाधिकोंऽशोदेयः** इत्यचाह बृहस्पतिः।

जन्मविद्यागुणज्येष्ठोद्व्यंशं दायादवाप्नुयात्††।
समांशभागिनस्त्वन्ये तेषां पितृसमस्तु सः॥

---

* अप्रत्ता कुमारी तदांशभागिनीत्यर्थं इति पाठान्तरम्।

† भागश्चतुर्थं इत्यग्रे भविष्यतीति पाठान्तरम्।

‡ औरसक्षेत्रजेषु च तदुक्तमिति पाठान्तरम्।

§ तदुक्तं क्षेत्रजेषु तु पुत्रेषु तदज्जाते धर्म्मत इति पाठान्तरम्।

¶ किन्त्विति पाठान्तरम्।

‖ तदा ततोधर्म्मजात इति पाठान्तरम्।

** कीदृशाय ज्येष्ठायाधिकोऽशोऽस्य, कीदृशाय ज्येष्ठाय कोऽशोदेय इति च पाठान्तरम्।

†† दायमवाप्नुयादिति पाठान्तरम्।

त्मना ।

वर्णानामनुलोमानां विभागोऽयं प्रदर्शितः* ।
समस्तैनैकजातानां विभागस्तु विधीयते ॥

एषां पुत्राणां निर्गुणत्वेन तुल्यानां, तथा† कस्यचिद्गुणवत्त्वे-
पि सर्व्वे चेन्नानाविधधनार्जकाः, तदा समएव भागः‡ इत्यर्थः ।
याज्ञवल्क्यः ।

विभजेरन् सुताः पित्रोरूर्द्धमृक्थमृणं समम् ।

तथा ।

सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः ।
अनेकपितृकाणान्तु पितृतो भागकल्पना ॥

न चैषां स्वयमुत्पादितं स द्व्यंशमेव हरेदित्यस्य वशिष्ठवचन-
स्यापवादोऽयं सामान्येति । यदा सामान्यार्थस्य कृषिवाणि-
ज्यादिना सम्यगुत्थानं संवर्द्धनं केनचित्कृतं भवति, तदा तत्र
समएव भागो न संवर्द्धनकर्त्तुरंशद्वयमित्यर्थः । वशिष्ठवचनन्तु
विद्यादितरविषयतया व्यवस्थाप्यम् । अनेकभ्रातॄणां ये पुत्रास्तेषां
विषमविषमसंख्यकानामपि पैतामहे धने विभज्यमाने पितॄणां
योंऽशः, सएव तेषां, न प्रत्येकमंशं कल्पयेदित्यर्थः ।
अत्रैव बृहस्पतिः ।

समवेतैस्तु यत्प्राप्तं सर्व्वे तत्र समांशिनः ।

* प्रकीर्त्तित इति पाठान्तरम् ।

† यथेति पाठान्तरम् ।

‡ विभाग इति पाठान्तरम् ।

तत्सुता विषमसमाः समभागहराः स्मृताः ॥

अविभक्तपितृकाः विषमसमाः पुत्राः ।

कात्यायनः ।

अविभक्ते मृते पुत्रे* तत्सुतं रिक्थभागिनम् ।
कुर्वीत जीवनं येन लब्धं नैव पितामहात् ॥
लभेतांशं स पित्र्यन्तु पितृव्यात्तस्य वा सुतात् ।
स एवांशस्तु सर्व्वेषां भ्रातॄणां न्यायतोभवेत् ॥
लभेत तत्सुतो वापि निवृत्तिः परतोभवेत् ।

अस्यार्थः । यदा भ्रातॄणां मध्ये कश्चिदेकोन विद्यते, तदा तत्सुतस्य तु भागेन निवर्त्तते इति ।

देवलः ।

अविभक्तविभक्तानां कुल्यानां वसतां सह ।
भूयोदायविभागः स्यादाचतुर्थादिति स्थितिः ॥

अयमर्थः । अविभक्तानामेव वा विभक्तानां सहवसतां संसृष्टानां वा पुनर्विभागो स्यात्तत्सुततत्सुतपर्य्यन्तमेव, तत्सुताच्चतुर्थान्निवर्त्तते इति ।

तथा ।

तावत्कुल्याः सपिण्डाः स्युः पिण्डभेदस्त्वनन्तरम् ।
सममिच्छन्ति पिण्डानां दायार्थस्य विभाजनम् ॥

---

* अविभक्तेऽनुजे प्रेते इति पाठान्तरम् ।

एतच्च यदा स्वविषयोविभागार्थिना* अभुज्यमानोऽपरेण तु तद्देशस्थितेन† भुज्यमानस्तदा‡।

वशिष्ठः।

अथ भ्रातॄणां दायविभागो याश्चानपत्याः स्त्रियस्तासा-
मापुत्रलाभात्।

स्त्रियोऽत्र भ्रातृजायास्ता यदि शङ्कितपुत्रास्तदा तासामपि भागो दातव्यः। पुत्रानुत्पत्तौ भागो भ्रातॄणामेव, तासाञ्च भरणमात्रं कार्य्यमित्यर्थः§।

विष्णुः।

मातरः पुत्रभागानुसारभागहारिण्यः¶ अनूढाश्च दुहितरः। मातर इति बहुवचननिर्द्देशात्सत्येकमेव जननीत्वादेकत्व-विवक्षायाञ्च मानाभावाद्बह्वीनां‖ जननीनामधिकारोऽन्यथा मातरः पुत्रभागानुसारभागहारिण्य इति वर्णक्रमभागह्रास-परम्। एकभ्रातृपरत्वे सर्व्वं भुज्यते इति ग्रहेश्वरोऽपि** ।

याज्ञवल्क्यः।

पितुरूर्द्ध्वं विभजतां माताप्यंशं समं हरेत्।

---

* विभाग विनेति पाठान्तरम्।

† तदुद्देशेनैवेति पाठान्तरम्।

‡ विभागं विना भुज्यमानोऽपरेण तदुद्देशेन भुज्यमानस्तदेति पाठान्तरम्।

§ तैरेव तासाञ्च भरणमित्यर्थ इति पाठान्तरम्।

¶ पुत्रभागानुसारेण भागहारिण्य इति पाठान्तरम्।

‖ बह्वीनामपीति पाठान्तरम्।

** ग्रहेश्वरोऽपीति पाठान्तरम्।

पितेत्यनुवृत्तौ बृहस्पतिः ।

तदभावे तु जननी तनयानां समांशिनी ।
समांशा मातरस्तेषां तुरीयांशा च कन्यका ॥

जनन्यत्र पुत्रवती, मातरः पितृपत्न्योऽपुत्राः, तुरीयांशा सजातीयस्य भ्रातुर्यावानंशस्तदपेक्षया चतुर्थोऽंशः संस्कारार्थं कल्पनीयः । यत्तु विष्णुवचनं मातरः पुत्रभागानुसारभागहारिण्यः अनूढाश्च दुहितर इति, तदप्येतद्वचनाच्चतुर्थांशपरं बृहस्पतेरप्यनूढाकन्यातात्पर्यकत्वात् ।

व्यासः ।

असुतास्तु पितुः पत्न्यः समानांशाः प्रकीर्त्तिताः ।
पितामह्यश्च ताः सर्व्वा मातृतुल्याः प्रकीर्त्तिताः ॥

तु शब्दोऽप्यर्थे ।

बृहस्पतिः ।

पितृ ऋणग्रहराः पुत्राः सर्व्वं एव यथांशतः* ।
विद्याकर्म्मयुतस्तेषामधिकं लब्धुमर्हति ॥
विद्याविज्ञानशौर्य्यार्थे ज्ञानदानक्रियासु च ।
यस्येह प्रथिता कीर्त्तिः पितरस्तेन पुत्रिणः ॥

नारदः ।

कुटुम्बार्थेषु चोद्युक्तस्तत्कार्य्यं कुरुते तु यः ।
स भ्रातृभिर्बृहणीयो ग्रासाच्छादनवाहनैः ॥

अत्र हलायुधेन तु यः स्वयोग्यतया भागं न गृह्णाति, तस्य

* यथा सता इति पाठान्तरम् ।

किञ्चिद्दत्त्वा तत्पुत्राणां विवादनिवृत्त्यर्थं विभाग कर्त्तव्य इत्यस्यार्थं व्याख्याय* तदेतदाहेति कृत्वा, भ्रातॄणां यस्तु नेहेत धनं शक्तः स्वकर्म्मणा । स निर्भाज्यः स्वकादंशात्किञ्चिद्दत्त्वोपजीवनमिति मनुवाक्यमवतारितम् । प्रकाशकारस्तु अस्यार्थाधिक्यमादायाह, ये भ्रातरः सह वसन्तोविद्यमानपितृधनाः कृष्यादिना चाधिक धनमर्ज्जयन्ति, तेषां यद्येको नार्जयेत्, स निर्भाज्यः अपसारयितव्यः स्वकादंशाद्यावदधिक तदीयाधनाद्यवहारोत्पन्नं† तत्तस्य न दातव्य, न तु मूलस्य निषेध. । तत्रापि सर्वथा न निर्भाज्यः, किञ्चिद्दत्त्वोपजीवन क्षेत्रफलमात्मनो गृहीत्वा शेषमस्मै दातव्यम् ।

ज्येष्ठ वा श्रेष्ठभागेन सर्वे वा स्युः समांशिन इति पद्यद्वयेऽप्यपवादमाह याज्ञवल्क्यः ।

शक्तस्यानीहमानस्य किञ्चिद्दत्त्वा पृथक्क्रिया ।

अत्रापि प्रकाश‡ किञ्चिदसारमपि दत्त्वा पृथक्क्रिया विभागः कर्त्तव्यः । तत्पुत्राणां विवादनिवृत्त्यर्थमिति ।

इति विवादरत्नाकरे अनेकमातृकभ्रातृविभागतरङ्गः ।



---

* इत्यस्यार्थं कृत्वेति पाठान्तरम् ।

† तदीयधनव्यवहारोत्पन्नमिति पाठान्तरम् ।

‡ प्रकाशकार इति पाठान्तरम् ।

# अथ विभागानधिकारिणः।

तत्रापस्तम्बः।

सर्वे धर्म्मयुक्ताः* भागिनः, यस्त्वधर्म्मेण द्रव्याणि प्रतिपादयति ज्येष्ठोऽपि तमभागं कुर्य्यात्।

प्रतिपादयति व्ययते इत्यर्थः। अधर्म्मेण द्यूतादिना, एतच्चाश्रमविरोधिव्ययाभिप्रायम्†। अभागं व्ययितांशभागहीनं, भागहीनमिति‡ केचित्।

गौतमः।

सवर्णापुत्रोऽप्यन्यायप्रवृत्तो न लभेतैकेषाम्।

अपिशब्दात्किमुत विजातीयपुत्रा इत्याचार्य्याः§। न लभेतांशमिति शेषः। शक्यापनेयान्यायप्रवृत्तत्वापेक्षया विकल्प इत्यत्र प्रकाशकारः।

अत्र मनुः।

सर्व एव विकर्म्मस्था नार्हन्ति भ्रातरो धनम्।

विकर्म्मस्था द्यूताद्यासक्ताः। कुटुम्बार्थहानिपरा इत्यन्ये।

अत्र शङ्खलिखितौ।

अपपात्रितस्य ऋक्थपिण्डोदकानि निवर्त्तन्ते।

---

* धर्म्मनियुक्ता इति पाठान्तरम्।

† एतच्चाश्रमोदयविरोधिव्ययाभिप्रायमिति पाठान्तरम्।

‡ हीनभागमितीति पाठान्तरम्।

§ इत्याचार्य्य इति पाठान्तरम्।

अपपात्रितस्य नृपहिंसादिदोषाद्वान्धवैः कृतघटापवर्ज्जनस्य।

बृहस्पतिः।

सवर्णजोऽप्यगुणवान्नार्हः स्यात्पैतृके धने।
तत्पिण्डदाः श्रोत्रिया ये तेषां तदभिधीयते॥
उत्तमर्णाधमर्णेभ्यः पितरं त्रायते सुतः।
अतस्तद्विपरीतेन* नास्ति तेन प्रयोजनम्॥
तया गवा किं क्रियते या न धेनुर्न गर्भिणी।
कोऽर्थस्तेन तु पुत्रेण योन विद्वान धार्म्मिकः॥
शास्त्रशौर्य्यार्थरहितस्तपोज्ञानविवर्जितः।
आचारहीनः पुत्रस्तु मूत्रोच्चारसमस्तु सः†॥

अगुणवान् अग्रिमवाक्यखण्डे व्यक्तः‡। तत्पिण्डदाः अगुणवद्ग्रासाच्छादनदातारः।

अथ मनुः।

अनंशौ§ क्लीवपतितौ जात्यन्धबधिरौ तथा।
उन्मत्तजडमूकाश्च ये च केचिन्निरिन्द्रियाः॥
सर्व्वेषामपि तन्न्याय्यं दातुं शक्त्या मनीषिणा।
ग्रासाच्छादनमत्यन्तं पतिता: स्युरदित्सवः¶॥

---

* अतस्तु विपरीतेनेति पाठान्तरम्।

† मूत्रोच्चारसम स्मृत इति पाठान्तरम्।

‡ अग्रिमवाक्यखण्डेनैव वक्तव्य इति पाठान्तरम्।

§ निरंशाविति पाठान्तरम्।

¶ पतितोस्यददद्भवेदिति पाठान्तरम्।

यद्यर्थिता तु दारैः स्यात्क्लीबादीनां कथञ्चन ।
*तेषामुत्पन्नतन्तूनामपत्यं दायमर्हति ॥*

जात्यन्धेत्यत्र जातिग्रहणेनान्धत्वस्याप्रतिसमाधेयतामाह* नौत्पत्तिकत्वम्† । जड़ः आत्मपरविवेकशून्यः । निरिन्द्रियग्रहणेन पङ्ग्वादयः श्रौतस्मार्त्तक्रियानधिकारिणो गृह्यन्ते । सर्वेषामपि क्लीबादीनामत्यर्न्तं यावज्जीवं, क्लीबादीनामित्यतद्गुणसंविज्ञानो बहुव्रीहिः क्लीबस्यापत्योत्पादनायोग्यत्वात् । प्रकारमकारस्तु क्लीबत्वमग्रेऽपनेयदोषप्रयुक्तमपत्योत्पादनाशक्तत्वं विवक्षितम्, अतो नातद्गुणसंविज्ञानं मन्यते । तन्तुरपत्यम् ।

याज्ञवल्क्यः ।

पतितस्तत्सुतः क्लीवः पङ्गुरुन्मत्तको जड़ः ।
अन्धोऽचिकित्स्यरोगाद्या भर्त्तव्यास्तु निरंशकाः ॥

तत्सुतः पातित्यादनन्तरोत्पन्नः, जड़ो विकलान्तःकरणः, अचिकित्स्यरोगोऽप्रतिक्रियकुष्ठादिः, आदिशब्देनान्ये ऽत्यन्तरोगा अनंशा भरणीया ग्राह्याः ।

क्लीवादीनामनंशताप्राप्तौ तत्पुत्राणामपि निरंशत्वप्रसक्तौ अयमेवाह ।

औरसाः क्षेत्रजास्तेषां निर्दोषा भागहारिणः ।

---

* जातिग्रहणेनान्धस्य प्रतिसमाधेयतामाहेति, जातिग्रहणादन्धत्वाप्रतिसमाधेयतामाहेति च पाठान्तरम् ।

† नौत्पत्तिकत्वमिति क्वापि इति पाठः ।

पतिततदपत्यैः सह सर्व्वव्यवहारनिषेधात्* न भरणमपि।

वसिष्ठः।

अनंशास्त्वाश्रमान्तरगताः।

आश्रमान्तरं गृहस्थाश्रमात्।

गौतमः।

जडक्लीबौ तु भर्त्तव्यावपत्यं जडस्य भागार्हं शूद्रापुत्र-वच्चप्रतिलोमासु।

अर्हपदाद्यदासावधिकारी भवति, तदा भागो न तु जडा-पत्यत्वमात्रेणेति द्योत्यते। शूद्रापुत्रवदिति प्रतिलोमासु स्त्रीषु जातानामपि शुश्रूषमाणानां शूद्रापुत्रवज्जीवनं देयमित्यर्थः।

कात्यायनः।

अक्रमोढ़ासुतश्चैवं† सगोत्राद्यश्च जायते।
प्रव्रज्यावसितश्चैव न रिक्थं तेषु चार्हति‡॥
अक्रमोढ़ासुतस्त्वृक्थी सवर्णश्च यदा पितुः।
असवर्णप्रसूतश्च क्रमोढ़ायाश्च यो भवेत्॥
प्रतिलोमप्रसूता या तस्याः पुत्रो न रिक्थभाक्।
ग्रासाच्छादनमत्यर्थं देयं तद्बन्धुभिर्मतम्॥
बन्धूनामप्यभावे तु पित्र्यं द्रव्यं तदाप्नुयात्।
अपित्र्यं तद्धनं प्राप्तं दापनीया न बान्धवाः॥

---

* सर्व्वथा व्यवहारनिषेधादिति पाठान्तरम्।

† अक्रमोढ़ासुतश्चैवेति पाठान्तरम्।

‡ चार्हतिदिति पाठान्तरम्।

अक्रमोढ़ासुतोऽच नानावर्णानां कन्यानां विवाहे यः क्रमः शास्त्रीयः,* तदुल्लङ्घनेन विवाहितायामसवर्णायामुत्पन्नः, अग्रे अनेनैवाक्रमोढ़ासुते सवर्णाजाते अक्रमोढ़ासुतस्त्वृक्थीत्यनेन भागग्राहकत्वविधेः। सगोत्रायान्तु जायते सगोत्रायाः परिणीतायां† यो जायते, प्रव्रज्यावसितः प्रव्रज्यां गृहीत्वा तत्र भ्रष्टः, अक्रमोढ़ासुतस्त्विति अक्रमोढासुतोऽपि सवर्ण एव स्यात् तदा ऋक्थी भागग्राहक एव, एवमसवर्णप्रसूतोऽपि क्रमोढ़ायां जातो भागग्राहक एव। प्रतिलोमप्रसूता या इति अपकृष्टवर्णेनोत्कृष्टवर्णा या परिणीता तत्पुत्रो न ऋक्थभाक्, ग्रासाच्छादनमिति तस्यैव यदि बान्धवाः सन्ति तदा तैर्ग्रासाच्छादनमवश्यं देयं, बन्धूनामभावे तु स्वयमेव तद्धनं गृह्णीयात्। यदा तु बान्धवैरपि अपिवत्रमेव धनं प्राप्तं, तदा ग्रासाच्छादनमपि न ते तस्य दापयितव्या इति

बृहस्पतिः।

असंस्कृता भ्रातरस्तु ये स्युस्तत्र यवीयसः।
संस्कार्य्याः पूर्व्वजैस्ते वै पैतृकान्मध्यगाद्धनात्‡॥

यवीयसोयवीयांसः आर्षत्वान्नमदीर्घयोरभावादित्येके। अन्ये तु यवीयसः कनिष्ठस्य मध्यगादित्याहुः§। फलतस्तु न कश्चिद्विशेषः।

* शास्त्रीयक्रम इति पाठान्तरम्।

† सगोत्रायां परिणीतायामिति पाठान्तरम्।

‡ मध्यकाद्धनादिति पाठान्तरम्।

§ मध्यकादित्याहुरिति पाठान्तरम्।

व्यासः ।

असंस्कृतास्तु ये तत्र पैतृकादेव तद्धनात् ।
संस्कार्य्या भ्रातृभिर्ज्येष्ठैः कन्यकाश्च यथाविधि ॥

कन्यकासंस्कारः परिणयरूपः ।

नारदः ।

येषान्तु न कृताः पूर्व्वैः* संस्कारविधयः क्रमात् ।
कर्त्तव्या भ्रातृभिस्तेषां पैतृकादेव तद्धनात् ॥
अविद्यमाने पित्रर्थे स्वांशादुद्धृत्य वा पुनः ।
अवश्यकार्य्याः संस्कारा भ्रातृणां† पूर्व्वसंस्कृतैः ॥

अत्र संस्कारविधयो जातकर्म्माद्युपनयान्ताः ।

देवलः ।

कन्याभ्यश्च पितृद्रव्यं देयं वैवाहिकं वसु ।
अपुत्रस्य च कन्या स्वं धर्म्मजा पुत्रवद्धरेत् ॥

याज्ञवल्क्यः ।

असंस्कृतास्तु संस्कार्य्या भ्रातृभिः पूर्व्वसंस्कृतैः ।
भगिन्यश्च निजादंशाद्दत्त्वांशन्तु तुरीयकम् ॥

विष्णुः ।

अनूढानाञ्च कन्यानां वित्तानुरूपेण‡ संस्कारं कुर्य्यात्

---

* "पूर्व्वमिति पित्रेति च पाठान्तरम् ।

† मातृभिरिति पाठान्तरम् ।

‡ स्ववित्तानुसारेणेति पाठान्तरम् ।

मनु: ।

स्वेभ्य स्वेभ्यस्तु कन्याभ्य प्रदद्युर्भ्रातर. पृथक् ।

स्वात्स्वादंशाच्चतुर्भाग पतिता. स्युरदित्सव ॥

अत्र निजादंशादुद्धृत्य चतुर्थो भागो दातव्य इति नार्थ * किन्तु यज्जातीयपुत्रस्य यो भागस्तच्चतुर्थोऽशो यो भवति, त परिकल्प्य कन्यायै सस्कारार्थं दद्यादित्यर्थो विवक्षित: । तेन ब्राह्मणी पुत्राणा चतुर्षु अंशेषु क्षत्रियाणा त्रिषु समुदायाच्चतुर्थमंश दद्यु रित्यर्थो भवति । अत्र चानेकवाक्यगतचतुर्थांशदर्शनात् चतुर्थांशस्यैव दान, प्रयोजनन्तु संस्कार । चतुर्थांशदान-विधिर्विष्णोरपि तथैव दिशा नेतव्य । कल्पतरुप्रकाशमिता-क्षरा अप्येवम् । विष्णुवाक्यदर्शनाच्चतुर्थांशदानमुपलक्षणम्, यावता संस्कारो भवति, तावत्येव तात्पर्यमिति हलायुधादि मतम् । युक्तञ्चैतत्कर्त्तव्यसस्कारस्यौचित्यात् ।

कात्यायन ।

कन्यकानान्त्वदत्तानां चतुर्थो भाग इष्यते ।

पुत्राणाञ्च त्रयो भागा, स्वाम्य स्वल्पधने† स्मृतम् ॥

स्वाम्य स्वल्पधने स्मृतमिति यदा चतुर्थभागरूपे‡ धनेऽल्पता, सस्कारस्त्वधिकधननिर्व्वाह्य, तदा यावता धनेन सस्कारो भवति, तावति धने कन्यकाना स्वाम्य प्रभुत्वम् । तेन ताव-

---

* न चचनार्थ इति पाठान्तरम् ।

† स्वाम्यन्त्वल्पे धने इति पाठान्तरम् ।

‡ कुत्रचतुर्थभागरूपे इति पाठान्तरम् ।

इनमेव स्वांशादाकृष्यापि भ्राता संस्कारार्थं देयमिति। मातुश्च वैवाहिकं स्त्रीधनं जीवन्त्यामपि मातरि।

शङ्खलिखितौ।

विभज्यमाने दायेभ्यः स्वकन्यालङ्कारं* वैवाहिकं स्त्रीधनञ्च कन्या लभते।

स्वकन्यालङ्कारं स्वकीयनूपुरादि कन्या लभते†।

बौधायनः।

मातुरलङ्कारं दुहितरः साम्प्रदायिकं लभेरन्नन्यद्वा।

मातुरलङ्कारं वैवाहिकं कन्या लभते, यदि चालङ्कारादन्यदपि वैवाहिकं मातुर्भवति तदा तदपि कन्या लभते इत्यर्थः।

अर्हति‡ स्त्रीत्यनुवृत्तौ पुनर्बौधायनः।

न दायं निरिन्द्रिया अदाया हि स्त्रियो मता इति श्रुतिः।

निरिन्द्रिया निःसत्त्वा इति प्रकाशः, अदाया अनंशा इत्यर्थः। एतच्च विहितांशस्त्रीव्यतिरिक्तविषयम्।

इति विवादरत्नाकरे विभागानधिकारितरङ्गः।

---

* कन्यालङ्कारमिति पाठान्तरम्।

† लभेतेति पाठान्तरम्।

‡ अर्हन्तीति पाठान्तरम्।

# अथ विभाज्यम्।

तत्र कात्यायनः।

पैतामहञ्च पित्र्यञ्च यत्किञ्चित्स्वयमर्ज्जितम्।
दायादानां विभागे तु सर्व्वमेतद्विभज्यते॥
ऋक्थं प्रीतिप्रदत्तन्तु दत्त्वा शेषं विभाजयेत्।
आचतुर्थात्तु तद्भाव्यं क्रमेणैव तु तत्सुतैः॥

स्वयमर्जितमसाधारणप्रयोजकरूपव्यतिरेकेणेति शेषः। ऋक्थं प्रीतिप्रदत्तञ्चेति, पित्रा यदृक्थं कस्मैचित्प्रीत्या दातुं प्रतिश्रुतं, तत्प्रीतिप्रदत्तं, तद्दत्त्वावशिष्टं विभजनीयम्। आचतुर्थादिति, त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते। इति वचनाद्यो यस्य पिण्डदानेनोपकरोति, स तस्य विभज्य धनं गृह्णीयादित्यर्थः। हलायुधस्तु यस्मै प्रतिश्रुतं तमारभ्य चतुर्थत्वं विवक्षितमित्याह।

नारदः।

यच्छिष्टं पितृदायेभ्यो दत्त्वर्णं पैतृकन्तु यत्।
भ्रातृभिस्तद्विभक्तव्यमृणी न स्याद्यथा पिता॥

पितृदायोऽत्र पित्रान्यस्मै प्रतिश्रुतं धनम्। प्रकाशकारस्तु पितृदानेभ्य इति पाठं पुरस्कृतवान्, अर्थोऽत्रापि स एव।

कात्यायनः।

भ्रात्रा पितृव्यमातृभ्यां कुटुम्बार्थमृणं कृतम्।
विभागकाले देयं तदृक्थिभिः सर्व्वमेव तु॥

तद्दण धनिने देय नान्यथैव प्रदापयेत् ।
भावितञ्चेत्प्रमाणेन विरोधात् परतो यदा ॥

तद्दणमित्यादि । यद्दण भ्रात्रादिभि कृत विरोधादिवादासन्दिग्धीभूत तदेव धनिने देय यदि विवादात्परतो धनिना प्रमाणेन साधित भवेन्नान्यथेत्यर्थ ।

तथा ।

पित्रा पितृणसम्बद्धमात्मीयञ्चात्मना कृतम् ।
ऋणमेवविध प्रोध्य विभागे बन्धुभि सह ॥

पित्र्य पित्रा कृत, पितृणसम्बद्ध पितृऋण दातुमात्मना कृतं, आत्मीय कुटुम्बार्थं पूर्ववाक्योक्तभ्रात्रादिव्यतिरिक्तविषय, आत्मना कृत कुटुम्बार्थमेव ।

तथा ।

धर्मार्थ प्रीतिदत्तञ्च यद्दण स्वनियोजितम् ।
तद्दयमान विभजेत्र दान पैतृकाद्धनात् ।

यत स्वयमसाधारणेन साधारणधन धर्मार्थ दत्त प्रीत्या च यद्दत्तमृणञ्च यत्स्वयमुत्तमर्णत्वेनान्यस्मै दत्त तज्जायमान विभक्तव्य यत पैतृकाद्धनादसाधारणेन दान नोचितमिति कल्पतरु । प्रकाशपारिजातौ तु यद्दणमेकेन साधारणमसाधारणधर्मार्थं कृत यद्दण कृतान्यस्मै प्रीत्या दत्तं यच्च स्वनियोजित स्वभोगार्थ* कृत तत्त्रयमपि तथा निर्धीयमानमपि

* स्वपभोगार्थमिति पाठान्तरम् ।

विभजेत्पृथक्कुर्य्यादिन कृतं तेनैव तद्देयं न पैतृकाद्धनात् सर्व्वैर्देयमित्यर्थ इत्याहतुः। वस्तुतस्तु सर्व्वमेतद्विवेचितमिति सर्व्वार्थपरतयैव वाक्यमिदं व्याख्यातुमुचितमिति।

तथा।

दृश्यमानं विभज्येत गृहं क्षेत्रं चतुष्पदम्।
गूढद्रव्याभिशङ्कायां प्रत्ययस्तत्र कीर्त्तितः॥

प्रत्ययो दिव्यम्।

एतदेव स्पष्टयति।

गृहोपस्करवाह्यास्तु दोह्याभरणकर्म्मिणः।
दृश्यमाना विभज्यन्ते कोषं गूढेऽब्रवीद्भृगुः॥

गृहोपस्कर उदूखलादिः कर्म्मिणो दासादयः, सुप्रसिद्धमन्यत्।

मनुः।

अजाविकं सैकशफं न जातु विषमं भजेत्।
अजाविकन्तु विषमं ज्येष्ठस्यैव विधीयते॥

विषमाणामजाविकैकशफानां न मूल्यादिना समो विभागः करणीयः, किन्तु ज्येष्ठेनैव ते ग्राह्या इत्यर्थः।

इति विवादरत्नाकरे विभागतरङ्गः।



## अथाविभाज्यम् ।

तत्र मनुः ।

विद्याधनन्तु यद्यस्य तत्तस्यैव धनं भवेत् ।
मैत्रमौद्वाहिकञ्चैव माधुपर्किकमेव च ॥

विद्याधनमौद्वाहिकञ्चाग्रे वक्ष्यते। मैत्रं मित्राल्लब्धं, माधुपर्किकं मधुपर्ककाले पूज्यतया लब्धं, तस्यैव भवेदविभाज्यं भवेदित्यर्थः ।

याज्ञवल्क्यः ।

क्रमादभ्यागतं द्रव्यं हृतमभ्युद्धरेत्तु यः ।
दायादेभ्यो न तद्दद्याद्विद्यया लब्धमेव च ॥

क्रमादभ्यागतं पितृक्रमादागतं यत्किञ्चिदन्यैर्हृतमसामर्थ्यादिना पूर्व्वपुरुषेणानुद्धृतं यो द्रव्यमंशिनां मध्ये एक उद्धरति, तदन्यतरेभ्यो न दद्यात्। अत्र चांशन्तराणामनुज्ञयेति मिताक्षराकारः। यच्च संहितायां हारीतः। पूर्व्वनष्टान्तु यो भूमिमेक एवोद्धरेत्क्रमात्* । यथा भागं लभन्तेऽन्ये दत्तांशन्तु तुरीयकमिति वाक्यं लिखति स्म, तच्च स्मृतिमहार्णवकामधेनुकल्पतरुपारिजातप्रभृत्यलिखनादयुक्तमेव ।

व्यासः ।

विद्याप्राप्तं शौर्य्यधनं यच्च सौदायिकं भवेत् ।
विभागकाले तत्तस्य नान्वेष्टव्यं तद्रिक्थिभिः ॥

---

* भूमिमेकश्चेदुद्धरेत्क्रमादिति पाठान्तरम् ।

शौर्य्यधनं युद्धादिलब्धं, सौदायिकमूढ़या कन्यया वेत्यादिना कात्यायनेनाग्रे वच्यते।

गौतमः।

स्वयमर्जितमवैद्याय वैद्यो नाकामो दद्यात्।

स्वयमर्जितं विद्ययेति शेषः। वैद्यो विद्यावान्।

कात्यायनः।

नाविद्यानान्तु वैद्येन देयं विद्याधनात्* क्वचित्।

समविद्याधिकानान्तु देयं वैद्येन तद्धनम्॥

नारदः।

वैद्योऽविद्याय नांशन्तु प्रदद्यादै स्वतो धनात्।

पैत्रं द्रव्यं समाश्रित्य न चेत्तेन तदाहृतम्†॥

अत्र चेदमभिप्रेतं,यदा साधारणधनेनैव ग्रासाच्छादनाद्युपयोगं कृत्वा समधिगतविद्यः साधारणधनानाश्रयेण विद्यया धनं प्राप्नोति, तदाऽविद्याय न देयं, साधारणधनाश्रयेण तु विद्यार्जितमविद्यायापि देयम्। यदा तु विद्यार्जनकाले साधारणधनोपयोगो नास्ति तदार्जनकाले साधारणधनोपयोगेऽपि विदुषा न कस्यचिद्देयम्, किन्तु विदुष एव तद्धनं, पितृद्रव्यानुपघ्नेपार्जितस्याविभाज्यत्वमुक्त्वा पृथग्विद्यालब्धस्यापि व्यासेनाविभाज्यत्वप्रतिपादनात्। अतएव पुनरग्रे विद्याधनस्य यदविभाज्यत्वं वच्यते तदसाधारणधनोपघ्नेनैव उपात्त-

* विद्याधनमिति पाठान्तरम्।

† तदर्जितमिति पाठान्तरम्।

विद्यया धनार्जनकालेऽपि साधारणधनोपयोगे द्रष्टव्यमिति। हलायुधनिबन्धोऽप्येवमेव। प्रकाशकारादयस्तु विद्याधनादीनां बोधकवचनानि पितृधनोपक्षेपविरहपराण्येवेत्याहुः, तच्च न उभयोपादानानुपपत्तेः*।

विभजेदित्यनुवृत्तौ पुनर्नारदः।

शौर्य्यभार्य्याधनं हित्वा यच्च विद्याधनं भवेत्।
न विभाज्यानि तान्याहुः प्रसादो यश्च पैतृकः॥
माता च स्वधनं दत्तं यस्मै स्यात्प्रीतिपूर्व्वकम्।
तस्याप्येष विधिर्दृष्टो मातापीष्टे यथा पिता॥

स्वधनपदोपादानात्स्त्रीधनविषयमिदम्।

व्यासः।

पितामहेन यद्दत्तं पित्रा वा प्रीतिपूर्व्वकम्।
तस्य तन्नापहर्त्तव्यं माता दत्तञ्च यद्भवेत्॥

याज्ञवल्क्यः।

पितृद्रव्याविनाशेन यदन्यत्स्वयमर्जितम्।
मैत्रमौद्वाहिकञ्चैव दायादानां न तद्भवेत्॥

अन्यत्रैवाद्व्यतिरिक्तमपि।

मनुविष्णू।

अनुपघ्नन् पितृद्रव्यं श्रमेण यदुपार्जितम्।

---

* उभयस्य उपक्षेपस्य अनुपक्षेपस्य च इत्यर्थं यदुपादानं यद्वय तस्य अनुपपत्ते रसङ्गतेरित्यर्थः।

स्वयमीहितलब्धं तन्नाकामो* दातुमर्हति ॥

व्यासः ।

अनाश्रित्य पितृद्रव्यं स्वशक्त्याप्नोति यद्धनम् ।
दायादेभ्यो न तद्दद्याद्विद्यालब्धञ्च यद्भवेत् ॥

अथ कात्यायनः ।

परभक्तप्रदानेन प्राप्तविद्यो यदन्यतः ।
तया प्राप्तन्तु यद्वित्तं विद्याप्राप्तं तदुच्यते ॥
उपन्यस्ते च यल्लब्धं विद्यया पणपूर्व्वकम् ।
विद्याधनन्तु तद्विद्याद्विभागे न विभज्यते† ॥
शिष्यादार्त्त्विज्यतः प्रश्नात्सन्दिग्धप्रश्ननिर्णयात् ।
स्वज्ञानशंसनाद्वादाल्लब्धं प्राध्ययनाच्च यत् ॥
विद्याधनन्तु तत्प्राहुर्विभागे न विभज्यते ।
शिल्पेष्वपि हि धर्म्मोऽयं मूल्याद्यच्चाधिकं भवेत् ॥
विद्यापणकृतश्चैव याज्यतः शिष्यतस्तथा ।
एतद्विद्याधनं प्राहुः सामान्यं यदतोऽन्यथा ॥
परं निरस्य यल्लब्धं विद्यया पणपूर्व्वकम् ।
विद्याधनन्तु तद्विद्यान्न विभाज्यं बृहस्पतिः ॥
विद्याप्रतिज्ञया लब्धं शिष्यादाप्तञ्च यद्भवेत् ।
ऋत्विङ्न्यायेन‡ यल्लब्धमेतद्विद्याधनं भृगुः ॥

---

* स्वयमीहितलब्धञ्च नाकाम इति पाठान्तरम् ।

† प्रयुज्यते इति पाठान्तरम् ।

‡ चार्त्त्विज्यायेनेति पाठान्तरम् ।

प्राध्ययनात्प्रकृष्टाध्ययनात्। मूल्याद्यच्चाधिकं भवेदिति उचित-मूल्यात्पुरुषेच्छया यदधिकं लभ्यते, तदपि तस्यासाधारण-मेवेत्यर्थः। विद्यापणकृतमिति, अत्राध्याये अत्र वादस्थाने वाऽप्रमादिना इदं वक्तव्यमित्यनेन रूपेण यल्लब्धं, तदप्यसाधा-रणमित्यर्थः। विद्याप्रतिज्ञयेति अहमेवेमां विद्यामधीये इति प्रतिज्ञा तया लब्धम्।

अथ याज्ञ्यं शौर्य्यधनमविभाज्यं तदाह।

आरुह्य संशयं यत्र प्रसभं कार्य्यं कुर्व्वते।
तस्मिन्कर्म्मणि तुष्टेन प्रसादः स्वामिना कृतः॥
तत्र लब्धन्तु यत्किञ्चिद्धनं शौर्य्येण तद्भवेत्।
ध्वजाहृतं भवेद्यत्तु विभाज्यं नैव तत्स्मृतम्॥
संग्रामादाहृतं यत्तु* विद्राव्य द्विषतां बलम्।
स्वाम्यर्थे जीवितं त्यक्त्वा तद्ध्वजाहृतमुच्यते॥

अथ याज्ञ्यमौद्वाहिकं साधारणं तदाह।

यल्लब्धं लाभकाले तु सजात्या कन्यया सह।
कन्यागतन्तु तद्वित्तं शुल्कं वृद्धिकरं स्मृतम्॥
वैवाहिकन्तु तद्विद्याद्भार्य्यया यत्सहागतम्।
धनमेवंविधं सर्व्वं विज्ञेयं कर्म्मसाधकम्॥

शङ्खलिखितौ।

न वास्तुविभागो नोदपात्रालङ्कारानुयुक्तस्त्रीवाससामपां प्रचारवर्त्मनामविभागश्चेति प्रजापतिः।

* यद्येति पाठान्तरम्।

वास्तुगृहं, उदपान लोहवारिभाजनं, अलङ्कारोऽङ्गलग्नस्तएव, अनुयुक्तमुपभुक्तं, तेनैकोपभोगविषयस्त्रीवाससां न विभाग इति प्राप्यते। अपां प्रचारवर्त्मनां जलप्रचरणमार्गाणाम्।

मनुविष्णू।

वस्त्रं पत्रमलङ्कारं कृतान्नमुदकं स्त्रियः।
योगक्षेमप्रचारञ्च न विभाज्यं प्रचक्षते॥

पत्रशब्दो लेख्यनिविष्टधनपरः, धन पत्रनिविष्टमिति कात्यायनवचनाद्दृणमपास्य लेखितमिति वृहस्पतिवचनाच्च। हलायुधस्तु पत्रं वाहनमित्याह। कृतान्नं पक्वादि तण्डुलादीति पारिजाते। स्त्रियः सयुक्ताः, अविभागः स्त्रीषु संयुक्तास्विति गौतमवचनात्। योगक्षेमं मन्त्रिपुरोहितादि तद्धेतुत्वात्। प्रचारो गवादीनां प्रचरणमार्गः, योगक्षेमं पितृक्रमेण राजकुलादावुपजीव्यमिति प्रकाशः। हलायुधस्तु योगोयोगहेतुर्नौकादिः, क्षेमः क्षेमहेतुर्दुर्गादीत्याह*।

व्यासः।

अविभाज्यं सगोत्राणामासहस्रकुलादपि।
याज्यं क्षेत्रञ्च पत्रञ्च कृतान्नमुदकं स्त्रियः॥

क्षेत्रं वास्तुक्षेत्रं, पत्रं वाहनमिति प्रकाशकारः।

कात्यायनः।

धनं पत्रनिविष्टन्तु धर्मार्थं यन्निरूपितम्।
उदकञ्चैव दाराश्च निबन्धो यः क्रमागतः॥

---

* दुर्गादिरित्याहेति पाठान्तरम्।

धृत वस्त्रमलङ्कारो नानुरूपञ्च यद्भवेत् ।
यथाकालोपयुक्तानि तथा योज्यानि बन्धुभिः ॥
गोप्रचारश्च रथ्या च वस्त्र यच्चाङ्गयोजितम् ।
प्रयोज्य न विभज्येत शिल्पार्थञ्च बृहस्पतिः ॥
देशस्य जातेः सङ्घस्य धर्मोग्रामस्य यो भृगुः ।
उदितः स्यात्स तेनैव दायभागं प्रकल्पयेत् ॥

धृत वस्त्र बहुमूल्यम्, अङ्गयोजितमबहुमूल्य विवचितम। धर्म्मार्थं यन्निरूपित सर्व्वसाधारणधर्म्मार्थं यद्व्यवस्थापित देवाराधनाय घण्टादि*। निबन्ध पूर्व्वं व्याख्यात । नानुरूपञ्च यद्भवेयत्र† साक्षाद्विभागो न सम्भवी। प्रयोज्य प्रयुक्त ऋणनिति हलायुध । प्रयोज्य प्रयोगार्हं पुस्तकादि, तन्न विभज्येत मूर्खादिभिरिति पारिजात । शिल्पार्थं तूलिकादि।

अथ बृहस्पतिः ।

वस्त्रादयोविभाज्या यैरुक्तन्तैर्न विचारितम् ।
धन भवेत्समृद्धाना पत्रालङ्कारसंश्रितम ॥
मध्यस्थितमनाजीव्य दातु नैकस्य शक्यते ।
युक्त्या विभजनीय तदन्यथानर्थक भवेत् ॥
विक्रीय वस्त्राभरणमृणमुद्राद्य लेखितम् ।

---

* घटादीति पाठान्तरम् ।

† यद्वस्तु न इति पाठान्तरम् ।

कृताकृतास्ताभावेन* परिवर्त्यं विभज्यते ॥
उद्धृत्य कूपवाप्यम्भस्त्वनुसारेण गृह्यते† ।
यथा भागानुसारेण सेतुः क्षेत्रं विभज्यते ॥
एका स्त्री कारयेत्कर्म यथांशेन गृहे गृहे ।
बह्व्यः‡ समांशतो देया दासानामप्ययं विधिः ॥
योगक्षेमवतां लाभः समत्वेन विभज्यते ।
प्रचारश्च यथांशेन कर्त्तव्य ऋत्विग्भिः§ सदा ॥

मध्यस्थितमनाजीव्यं मध्यगं¶ तदनुपयुक्तं दातुं नैकस्य शक्यते, एकस्मै दातुमशक्यं, योगक्षेमवतां विभागयोगक्षेमवतां मन्त्रि-पुरोहितादेः । अत्र मन्त्रादीनां बहुमूल्यानां स्वल्पवतां विभाज्यत्वमुक्तम्, अतो मन्त्रादीनामविभाज्यत्ववचनमल्पमूल्यमन्त्रादौ स्वल्पवत एव निषेधकं, बहुमूल्येषु उक्तैतद्विभागप्रकारव्यति-रिक्तप्रकारेण विभागनिषेधकं द्रष्टव्यमित्यविरोधः । प्रकारा-कारस्वल्पमूल्यमनर्हसंयुक्तं यत्, तत्र विभजनीयम्, अतएव धनं पचारद्वारदत्त्वादिसंयितं यत्तद्विभजनीयमेव, तस्य विभागप्रकार उक्तो मध्यस्थितमनाजीव्यमित्यादिनेत्याह ।

इदानीं यद्विधविद्याधनादीनामपि विभागोऽस्ति तदाह

---

* कृताकृतं प्रत्ययेनेति कृताकृते कृताकृतेनेति च पाठान्तरम् ।

† भुज्यते इति पाठान्तरम् ।

‡ वत्सा इति पाठान्तरम् ।

§ कर्त्तव्यविधिभिरिति पाठान्तरम् ।

¶ मध्यवर्त्तीति वर पाठः ।

कात्यायनः ।

कुले विनीतविद्यानां भ्रातॄणां पितृतोऽपि वा ।
शौर्य्यप्राप्तन्तु* यद्वित्तं विभाज्यं तद्बृहस्पतिः ॥

कुले पितामहपितृव्यादिभ्यः पितृत एव वा शिक्षितविद्यानां भ्रात्रादीनां यद्विद्याशौर्य्यप्राप्तं धनं, तद्विभजनीयमेवेत्यर्थः ।

नारदः ।

कुटुम्बं बिभृयाद्भ्रातुर्यो विद्यामधिगच्छतः ।
भागं विद्याधनात्तस्मात् स लभेताश्रुतोऽपि सन् ॥

अश्रुतः अविद्यः ।

मनुः ।

यत्किञ्चित्पितरि प्रेते धनं ज्येष्ठोऽधिगच्छति ।
भागो यवीयसां तत्र यदि विद्यानुपालिनः ॥

यत्किञ्चित्पितरि प्रेते असाधारणविद्यादिना† ज्येष्ठो धनमर्जयति, तत्र ज्येष्ठार्जिते ज्येष्ठस्यांशद्वयम्‡ एकैकस्तु भागः कनिष्ठानां, यदि ते विद्याभ्यासरता इत्यर्थः ।

अविद्यानान्तु सर्व्वेषामीहातो यद्धनं भवेत् ।
समस्तत्र विभागः स्यादपित्र्य इति धारणा ॥

यदा सर्व्व एव भ्रातरोऽविद्वांसः कृष्यादिना धनमर्जयन्ति, तदा तस्मिन्नपित्रे धने सम एव विभागो न तु तत्र बहु-

---

* शौर्य्यप्राप्तञ्चेति पाठान्तरम् ।

† असाधारणधनव्ययेन विद्यादिना इति पाठान्तरम् ।

‡ ज्येष्ठस्यैवांशद्वयमिति पाठान्तरम् ।

तदमनेनोपात्तमित्युद्धारादि कर्त्तव्यमित्यर्थः ।

स्वयमर्जितमित्यनुवृत्तौ गौतमः ।

अविद्याः समं विभजेरन् ।

अविद्यास्तद्भ्रातृसाधारणप्रयोजकविद्याशून्याः ।

वशिष्ठः ।

येन चैषां स्वयमुत्पादितं स्यात् द्व्यंशमेव हरेत्* ।

यदा बहूनां मध्ये साधारणधनमाश्रित्य एक एव शौर्यादिनार्जयति, तदा तस्य द्व्यंशो, शेषाणामेकैकः ।

व्यासः ।

साधारणं समाश्रित्य यत्किञ्चिद्वाहनायुधम् ।
शौर्यादिनाप्नोति धनं भ्रातरस्तत्र भागिनः ॥
तस्य भागद्वयं कार्यं† शेषास्तु समभागिनः ॥

एतत्परिभावितविद्याशौर्यादिधनव्यतिरिक्तविद्याशौर्यादिधनाभिप्रायेण द्रष्टव्यमिति ।

इति विवादरत्नाकरे विभागतरङ्गः ।



---

* [illegible] पाठान्तरम् ।
† [illegible] पाठान्तरम् ।

# अथ स्त्रीधनहरणम्।

तत्र मनुः।

न निर्हारं स्त्रियः कुर्य्युः कुटुम्बाद्बहुमध्यगात्*।
स्वकादपि च वित्ताद्धि स्वस्य भर्त्तुरनाज्ञया॥

कुटुम्बशब्देनात्र कुटुम्बधनं साहचर्य्यादभिमतम्। तेन बहुमध्यगात्† धनात्स्त्रीभिर्धनिनामननुमत्या निर्हारो धनस्य निष्कृष्य हरणं न कार्य्यम्। तथा स्वकादपि कुटुम्बान्तरापेक्षया भर्त्तुरसाधारणधनादपि निष्कृष्य हरणं धनस्वामिनामननुमत्या न कार्य्यमित्यर्थः।

मनुविष्णू।

पत्यौ जीवति यः स्त्रीभिरलङ्कारो धृतो भवेत्।
न तं भजेरन्दायादा भजमानाः पतन्ति ते॥

पत्युरननुज्ञातेनाप्यदत्तोऽप्यलङ्कारो यो मण्डनार्थं धृतः, सोऽपि दायादैर्न हर्त्तव्य इति मेधातिथिरिति प्रकाशः।

अत्रापस्तम्बः।

अलङ्कारोभार्य्याया ज्ञातिधनञ्चेत्येके।

ज्ञातिधनञ्चेति विवाहे यद्दनं यौतकाख्यं लब्धं, तदपि भार्य्यायाएवेत्यर्थः।

नारदः।

---

* बहुमध्यकादिति पाठान्तरम्।

† बहुमध्यकादिति पाठान्तरम्।

भर्त्रा प्रीतेन यद्दत्तं स्त्रियै तस्मिन्मृतेऽपि तत् ।
सा यथाकाममश्नीयाद्दद्याद्वा स्थावरादृते ॥

यावद्भर्त्रा दत्तं धनं स्त्रीस्वातन्त्र्यविषयं तावद्दर्शयति व्यासः ।

द्विसहस्रपणो दायः स्त्रियै देयो धनस्य तु ।
यच्च भर्त्रा धनं दत्तं सा यथाकाममाप्नुयात्* ॥

द्वे सहस्रे पणानां परिमाणमस्येति द्विसहस्रपण इति वचनात् अल्पे धने अल्पदानमेवेति† स्वेच्छादेयं स्वयं प्राप्तमिति वचनात् साधारणधनाभिप्रायमेतदिति‡ वदन्ति । प्रकाशस्तु या अयोग्यभर्तृका भर्त्तृत्वेन वृताः पृथक्क्रियन्ते, ताभ्यः पणसहस्राधिकमदेयमिति ।

कात्यायनः ।

ऊढ़या कन्यया वापि पत्युः पितृगृहेऽथवा ।
भ्रातुः§ सकाशात्पित्रोर्वा लब्धं सौदायिकं स्मृतम् ॥
सौदायिकं धनं प्राप्य स्त्रीणां स्वातन्त्र्यमिष्यते ।
यस्मात्तदानृशंस्यार्थं तैर्दत्तं तत्प्रजीवनम् ।
सौदायिके सदा स्त्रीणां स्वातन्त्र्यं परिकीर्त्तितम् ।
विक्रये चैव दाने च यथेष्टं स्थावरेष्वपि ॥

पत्युर्गृहे इति सम्बन्धः । भ्रातुः सकाशात्पित्रोर्वेत्युपलक्षणम् ।

---

* यथाकाममश्नुते इति पाठान्तरम् ।

† अल्पदानमायातीति अल्पधनमायातीति च पाठान्तरम् ।

‡ साधारणधनाभिप्रायमिदमिति पाठान्तरम् ।

§ भर्तुरिति पाठान्तरम् ।

तेन ऊढ़या अनूढ़या वा पतिगृहे पितृगृहे वा स्वमातुः स्वपितुर्वा तत्कुलेभ्यो* यल्लब्धं तत्सौदायिकम्। आनृशंस्यमदारुणता, तेन यस्मादियं वित्ताभावाद्दारुणा न भवत्वेतदर्थं तैः पित्रादिभिर्दत्तं तत्प्रजीवनमिति लभ्यते। तदेवं सौदायिके धने स्थावरसाधारणं स्त्रीणां स्वातन्त्र्यं, भर्तृदत्ते तु स्थावरादन्यस्मिन्† स्थितम्।

तथा।

भर्तृदायं मृते पत्यौ विन्यसेत्स्त्री यथेष्टतः‡।
विद्यमाने तु संरक्षेत्क्षपयेत्तत्कुलेऽन्यथा॥
अपुत्रा शयनं भर्तुः पालयन्ती गुरौ§ स्थिता।
भुञ्जीतामरणात्क्षान्ता¶ दायादा ऊर्द्ध्वमाप्नुयुः॥

अत्र भर्तृदायो भर्तृसम्बन्धेन स्त्रीस्वत्वाश्रयो धनं, तच्च द्विधा मृते भर्त्तरि अधिकार्य्यन्तराभावात्स्त्रीस्वत्वाश्रयः, जीवत्येव भर्त्तरि तत्सम्बन्धेन वा स्त्रीस्वत्वाश्रयः। तत्र प्रथमे स्त्री स्थावरादन्यत् यथेष्टं विन्यसेद्विनियुञ्जीत, गुरुसमीपे स्थिता भर्तुः शय्यां पालयन्ती समयं क्षपयेत्। स्थावरमधिकृत्याह भुञ्जीतामरणात्, ऊर्द्ध्वं दायादा आप्नुयुः। द्वितीये त्वाह विद्यमाने तु संरक्षेत्।

* तद्विधेभ्य इति पाठान्तरम्।
† स्थावरादन्यस्मिन्निति पाठान्तरम्।
‡ यथेच्छत इति पाठान्तरम्।
§ व्रते इति पाठान्तरम्।
¶ क्षमादिति पाठान्तरम्।

व्यये भर्त्तुरनुज्ञां पालयन्ती तद्धनरक्षां कुर्य्यादिति प्रकाशानुसारः। हलायुधपारिजातौ तु भर्तृदायं भर्तृदत्तं स्त्रीधनमाहतुः। तदत्रापुत्रसंक्रान्ति* स्त्रीस्वत्वान्वयेऽपि धने आकाङ्क्षायाः सत्त्वात्प्रकाशस्वरसो† बलीयान्, प्रकरणानुरोधस्याकाङ्क्षाया बलवत्त्वात्‡ निर्हारनिषेधवद्दृश्यतेऽपीति§।

मनुः।

वशापुत्रासु चैवं स्याद्रक्षणं निष्कुलासु च ।
पतिव्रतासु च स्त्रीषु विधवास्वातुरासु च ॥
जीवन्तीनान्तु तासां ये तद्धरेयुः स्वबान्धवाः ।
तांश्छिष्याच्चौरदण्डेन धार्म्मिकः पृथिवीपतिः ॥

वशा वन्ध्या अपुत्राः प्रणष्टपुत्रा निष्कुलाः प्रणष्टमातापितृकुलाः।

देवलः।

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।
भोक्त्री च स्वयमेवेदं पतिर्नार्हत्यनापदि ॥
वृथा मोक्षे च भोगे च स्त्रियै दद्यात्सवृद्धिकम् ।
पुत्रार्त्तिहरणे वापि स्त्रीधनं भोक्तुमर्हति ॥

वृत्तिर्वृत्त्यर्थं दत्तधनं, लाभो बन्धुभ्यो लब्धं, शुल्कं विवाहार्थितया कन्यायै दत्तं धनम्। वृथा मोक्षे चेति यदावश्यककार्य्या-

---

* तदत्रापुत्रसंक्रान्ते इति पाठान्तरम्।
† सत्त्वाप्रकाशस्वरस इति पाठान्तरम्।
‡ प्रकरणानुरोधस्याकाङ्क्षावत्त्वादिति पाठान्तरम्।
§ निर्हारनिषेधवत्त्वमप्यतेऽपीति पाठान्तरम्।

दिना धनमादाय वृथादानभोगौ करोति, तदा सवृद्धिकं धनं दद्यात्। पुत्रार्त्तिहरणार्थन्तु स्त्रीधनं विनापि स्त्रीसम्मत्या ग्रहीतव्यम्।

कात्यायनः।

न भर्त्ता नैव च सुतो न पिता भ्रातरो न च।
आदाने वा विसर्गे वा स्त्रीधने प्रभविष्णवः॥
यदि ह्येकतरस्तेषां स्त्रीधनं हरते बलात्।
स वृद्धिं प्रतिदाप्यः स्याद्दण्डञ्चैव समाप्नुयात्॥
तदेव यद्यनुज्ञाप्य भक्षयेत्प्रीतिपूर्व्वकम्।
मूलमेव स दाप्यः स्याद्यदा स धनवान्भवेत्॥
व्याधितं व्यसनस्थञ्च धनिकैर्वोपपीड़ितम्।
दृष्ट्वा* निसृष्टं यत्प्रीत्या दद्यात्स्वेच्छया हि सः॥

व्याध्यादिना गृहीतं स्वाम्यादिकं दृष्ट्वा स्त्रिया यत्प्रीत्या धनं स्वामिप्रभृतये दत्तं, तत्स्वेच्छया† स्वामिप्रभृतिभिर्दद्यादित्यनन्तरवाक्यार्थः।

याज्ञवल्क्यः।

दुर्भिक्षे धर्म्मकार्य्ये च व्याधौ सम्प्रतिरोधके।
गृहीतं स्त्रीधनं भर्त्ता न स्त्रियै दातुमर्हति॥

धर्म्मकार्य्ये अवश्यकर्त्तव्ये। व्याधाविति यस्मिन् व्याधौ कार्य्य-

---

* तथैति पाठान्तरम्।

† तदात्मेच्छयेति पाठान्तरम्।

प्रतिरोधी भवति* तन्निहारार्थं स्त्रीधनं गृहीतं न स्त्रियै दातव्यमित्यर्थ. ।

कात्यायनः ।

अथ चेत्स द्विभार्य्यः स्यान्न च तां भजते पुनः ।
प्रीत्या निसृष्टमपि† चेत्प्रतिदाप्यः स तद्धनम्‡ ॥
ग्रासाच्छादनवासानामाच्छेदो§ यत्र योषितः ।
तत्र स्वमाददीत स्त्री विभागमृक्थिनस्तथा ॥
लिखितस्येति धर्म्मोऽयं प्राप्ते भर्त्तृकुले वसेत्¶ ।
व्याधिता प्रेतकाले तु गच्छेद्बन्धुकुलं तत ॥
अपकारक्रियायुक्ता निर्लज्जार्थविनाशिका ॥‖
व्यभिचाररता स्त्री तु स्त्रीधन न च** सार्हति†† ॥
यदर्थं द्रव्यमुत्पन्नं तस्माद्द्रव्यं नियोजयेत् ।
स्थानेषु धर्म्मयुक्तेषु न स्त्रीमूर्खविधर्म्मिषु ॥
भर्त्रा प्रतिश्रुतं देयमृणवत्स्त्रीधनं सुतैः ।
तिष्ठेद्भर्त्तृकुले जातु न या पितृकुले वसेत् ॥

---

* कार्य्यापरोध इति कार्य्यप्रतिरोध इति च पाठान्तरम् ।

† विसृष्टमपीति पाठान्तरम् ।

‡ तद्दद्यादिति पाठान्तरम् ।

§ ग्रासाच्छादनवासानामुच्छेद इति पाठान्तरम् ।

¶ मते इति पाठान्तरम् ।

‖ निर्लज्जा चाशनाशिकेति निर्लज्जा चार्थनाशिनीति च पाठान्तरम् ।

** नर्हतीति पाठान्तरम् ।

†† तिष्ठेत्पितृकुले या तु स्त्रीधनं न च सार्हतीति पाठान्तरम् ।

यदा प्रीत्या यया भार्य्यया धनं दत्तं तां पतिर्न भजते ऋतुकालादावपि, तथा ग्रासाच्छादनवासानामाच्छेदो वा भवति, तदा व्याध्याद्युपहतं पतिमालोक्य स्वधनं दत्तमपि तया बलाद्ग्राह्यं, तच्चाश्रमे तस्यालभ्यं भवति, तदापि* पत्यादिसकाशाद्ग्राह्यमित्ययं शास्त्रधर्म्मः। प्राप्ते च तत्र धने सा भर्त्तुः कुले एव वसेत्। बलवति व्याधौ तद्बन्धुकुलं गच्छेदिति बन्धुकुलं तत इत्यन्तस्यार्थः†।

इति विवादरत्नाकरे स्त्रीधनकृत्यतरङ्गः।



## अथ स्त्रीधनविभागनिर्णयः।

तत्र मनुः।

जनन्यां संस्थितायान्तु समं सर्व्वे सहोदराः।
भजेरन्मातृकं रिक्थं भगिन्यश्च सनाभयः॥

समं ज्येष्ठांशाद्यादिशून्यम्, भगिन्योऽत्राप्रत्ता अप्रतिष्ठिताश्च विव-

---

* आश्रमे ग्रामं विशेषयं तस्या स्वस्य तत्स्वकृतिनं यद्ग्रासाच्छादनाय धनमितिभाव, तच तदापि व्याध्याद्युपहतत्वेऽपीति भाव। तदपीति पाठे यथाश्रमे इति पाठो भवितुं युक्त इति सुधीभिर्विभाव्यम्।

† इत्यस्यार्थं इति पाठान्तरम्।

स्थिताः अपि मह बृहस्पतिवाक्यानुसारात्*, सनाभयः सहोदराः।

तथा।

> यास्तासां स्युर्दुहितरस्तासामपि यथांशतः।
> मातामह्या धनात्किञ्चित्प्रदेयं प्रीतिपूर्व्वकम्॥

तासां भगिनीनां यथांशतो धनबहुत्वाल्पत्वानुसारेण।

तथा।

> अन्वाधेयञ्च यद्दत्तं पत्या प्रीतेन चैव यत्।
> पत्यौ जीवति वृत्तायाः प्रजायास्तद्धनं भवेत्॥

अन्वाधेयलक्षणं वक्ष्यते। एतच्च वचनं वृत्तायां जीवत्यपि पत्यौ एवं-विधधनद्वये पतिसम्बन्धनिराकरणार्थमारब्धमिति हलायुधः।

बृहस्पतिः।

> स्त्रीधनं स्यादपत्यानां दुहिता च तदंशिनी।
> अप्रत्ता चेत्समूढा तु लभते मानमात्रकम्॥

अपत्यानां पुत्राणां तदंशिनी पुत्रांशसमांशिनी। अप्रत्ता अनूढा। तेनैतद्वाक्यबलान्मनुवाक्येऽपि अनूढानामेव भ्रातृभिः सह समांशित्वमिति बोद्धव्यम्। ऊढानान्तु मानानुसारेण किञ्चिद्देयम्।

गौतमः।

> स्त्रीधनं दुहितॄणामप्रत्तानामप्रतिष्ठितानाञ्च।

एतच्च† पुत्रांशस्य व्यावृत्त्यर्थं किन्तु दुहितृसंप्रतिपादनार्थम्।

---

* [illegible]दिति पाठान्तरम्।

† एतच्च नेति पाठान्तरम्।

अप्रतिष्ठिता विवाहितानपत्या* निर्धनभर्तृका दुर्भगा च।

मनुः।

मातुस्तु† यौतकं यत्स्यात्कुमारीभाग एव सः।

यौतकमत्र परिणयनकाले पित्रादिभिः स्त्रियै दत्तम्। हलायुधस्तु यौतकं शाकसूपार्थं स्त्रियै दत्तं तया स्वकौशलेन विशेषितम्, तत्र न भ्रातॄणामूढानाञ्च‡ भागः, अनपत्यानां§ दुर्भगाणामूढानाञ्च सम एवांश इति।

वशिष्ठः।

मातुः पारिणाय्यं स्त्रियो विभजेरन्।

पारिणाय्यं परिच्छद आदर्शकङ्कणादि।

विभजेरन्नूर्द्धमित्यनुवृत्तौ याज्ञवल्क्यः।

मातुर्दुहितरः शेषमृणात्ताभ्य ऋतेऽन्वयः।

ऋणान्मातृणात्, शेषमवशिष्टं, तेन मातृणं परिशोध्य यौतकं पारिणाय्यञ्च धनमवशिष्टमप्रत्ता अप्रतिष्ठिताश्च दुहितरो भजेरन्निति खण्डार्थः। ताभ्यो दुहितृभ्य ऋते विना तदन्वयः दुहितुः पुत्रादिः¶। ब्राह्मादिविवाहविषयमेतत्।

तथाच विवाहेष्वित्यनुवृत्तौ विष्णुः।

सर्व्वेष्वेव प्रसूतानां तद्धनं दुहितृगामि।

---

* न सापत्येति पाठान्तरम्।

† मातुश्चेति पाठान्तरम्।

‡ तत्र सभ्रातॄणामूढानाञ्चेति पाठान्तरम्।

§ सापत्यानामिति पाठान्तरम्।

¶ दुहितृपुत्रादिरिति पाठान्तरम्।

मनुः ।

स्त्रियास्तु यद्भवेद्वित्तं पित्रा दत्तं कथञ्चन ।
ब्राह्मणी तद्धरेत्कन्या तदपत्यस्य वा भवेत् ॥

यदा भर्त्तुः स्वापत्यानि च न सन्ति, सपत्न्यश्च नानाजातीयाः तद्दुहितरश्च सन्ति, तदा ब्राह्मणी कन्या पितृदत्तं मातृधनमर्हति, तदभावे तदपत्यं वेत्यर्थः । पित्रा दत्तमिति स्त्रीधनमात्रोपलक्षणमित्यसहायमेधातिथिरिति प्रकाशकारः ।

कात्यायनः ।

दुहितॄणामभावे तु रिक्थं पुत्रेषु तद्भवेत् ।
बन्धुदत्तं तु बन्धूनामभावे भर्तृगामि तत् ॥
भगिन्यो बान्धवैः सार्धं विभजेयुः सभर्तृकाः ।
स्त्रीधनस्येति धर्मोऽयं विभागस्य प्रकल्पितः ॥

पारिणाय्यं यौतकं पितृदत्तञ्च धनं दुहितॄणामभावे पुत्रगामि । तदतिरिक्तस्त्रीधने पूर्वोक्ताः । अभावे पूर्वोक्तानां भर्तृगाम्येव धनमिति ।

इति विवादरत्नाकरे स्त्रीधनविभागस्तरङ्गः ॥

## अथाप्रजाधने विवाहविशेषेण* व्यवस्था ।

तत्र नारदः ।

> स्त्रीधनं स्यादपत्यानां भर्तृगाम्यप्रजासु च ।
> ब्राह्मादिषु चतुर्ष्वाहुः पितृगामीतरेषु च ॥

चतुर्ष्विति न पञ्चमव्यवच्छेदार्थं, तेन ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु अप्रजाया धनं तदपगमे भर्तृगामि, इतरेषु राक्षसासुरपैशाचेषु पितृगामि । विवाहकाललब्धस्त्रीधनविषयमिदम् ।

तथाच मनुः ।

> ब्राह्मदैवार्षगान्धर्वप्राजापत्येषु यद्धनम् ।
> अतीतायामप्रजसि भर्त्तुरेव तदिष्यते ॥
> यत्त्वस्याः स्याद्धनं दत्तं विवाहेष्वासुरादिषु ।
> अतीतायामप्रजसि† मातापित्रोस्तदिष्यते ॥

अप्रजसि‡ अनपत्यायाम् ।

देवलः ।

> सामान्यं पुत्रकन्यानां मृतायां स्त्रीधनं स्त्रियाम् ।
> अप्रजायां हरेद्भर्त्ता माता भ्राता पितापि वा ॥

हरेद्भर्त्ता ब्राह्मादिषु, मातेत्यासुरादिषु, एवञ्च मनुनारदयोरपि

---

* विवाहविशेषेण धनविशेषेणेति पाठान्तरम् ।

† अतीतायामप्रजायामिति पाठान्तरम् ।

‡ अप्रजायामिति पाठान्तरम् ।

देवलोक्तमादायाच* तात्पर्य्यमिति मन्तव्यम् ।

अत्र गौतम ।

भगिनीशुल्क सोदर्य्याणामूर्द्ध मातु पूर्व्वञ्चैके ।

यो भगिन्या भर्तृगृहादासुरादिविवाहेष्वर्थो लब्ध, स ऊर्द्ध मातु, मातर्य्यतीतायां सोदर्य्याणां पूर्व्वञ्चेति चशब्दोऽप्यर्थे, तेन मातुर्मरणात्पूर्व्वमपि भगिनीनामीदृश† सोदर्य्याणामित्येके । परमतमेतदित्यत्र हलायुध ।

याज्ञवल्क्य ।

बन्धुदत्त तथा शुल्कमन्वाधेयकमेव च ।

अप्रजायामतीतायां बान्धवास्तदवाप्नुयु ॥

शुल्क यद्गृहीत्वा कन्या दीयते तदिह विवक्षितम् । अन्वाधेयक स्त्रीधनलक्षणम् । बान्धवा सोदरा । इदमप्यासुरादि विवाहविषयम् ।

मनु ।

अपुत्राया मृतायान्तु पुत्रिकाया कथञ्चन ।

धन तत्पुत्रिकाभर्त्ता हरेतैवाविचारयन् ॥

एतच्च यदा अपुत्रायास्तस्या कुमारी न भवति भगिनी वा, तदा बोद्धव्यम् ।

तथाच पैठीनसि ।

---

* देवलोक्तममादायाचेति पाठान्तरम् ।

† भगिन्या ईदृशमिति पाठान्तरम् ।

प्रेतायां पुत्रिकायां न भर्त्ता तद्द्रव्यमर्हत्यपुत्रायां*
कुमार्य्यां स्वस्रा वा तद्ग्राह्यम्।

अत्र कुमार्य्या अभावे स्वस्रा† ग्राह्यम्।

याज्ञवल्क्यः।

दत्त्वा कन्यां हरन्दण्ड्यो व्ययं दद्याच्च सोदयम्।
मृतायां सर्व्वमाद्द्यात्परिशोध्योभयव्ययम्॥

कन्यां वाचा दत्त्वा विना दोषमपहरंस्त्राज्ञा दण्ड्यः, व्ययञ्च सवृद्धिकं वरस्य दापयितव्यः, कारणे त्वपहारो न दोषाय।

यदाह‡।

दत्तामपि हरेत्कन्यां श्रेयांश्चेद्वर आव्रजेत्।

यदि तु दैवाद्वाग्दत्ता कन्या म्रियते, तदा यत्पूर्व्वसम्बन्धिना-मुपचारार्थं पित्रा दत्तं, यच्च सम्बन्धिना अङ्गुरीयकादि दत्तं तदुभयं परिशोध्य परिगणय्यावशिष्टमाद्द्यात्§।

अर्हतीत्यनुवृत्तौ शङ्खः।

स्वयं शुल्कं वोढ़ा।

बौधायनः।

रिक्थं मृतायाः कन्याया गृह्णीयुः सोदराः स्वयम्।
तदभावे भवेन्मातुस्तदभावे पितुर्भवेत्॥

---

* अपुत्राया इति पाठान्तरम्।

† भगिन्येति पाठान्तरम्।

‡ तदाहेति पाठान्तरम्।

§ परिगणय्य शिष्टमाद्द्यादिति पाठान्तरम्।

अत्र कन्यानूढाभिप्रेता।

बृहस्पतिः।

मातृष्वसा मातुलानी पितृव्यपत्नी पितृःष्वसा।
श्वश्रूः पूर्व्वजपत्नी च मातृतुल्याः प्रकीर्त्तिताः॥
यदासामौरसो न स्यात्सुतो दौहित्र एव वा।
तत्सुतो वा धनं तासां स्वस्रीयाद्याः समाप्नुयुः॥

औरसादीनामभावे मातृष्वस्रादीनां स्वधनं स्वस्रीयाद्या आप्नुयुरित्यर्थः।

इति विवादरत्नाकरे धनभागे विभागनिर्णयः समाप्तः।

---

## अथ स्त्रीधनलक्षणम्।

तत्र मनुकात्यायनौ।

अध्यग्न्यध्यावाहनिकं दत्तञ्च प्रीतितः स्त्रियै।
मातृभ्रातृपितृप्राप्तं षड्विधं स्त्रीधनं स्मृतम्॥

अध्यग्नि उद्वाहकाले येन वह्निविहृतम्। अध्यावाहनिकं पितृगृहं नीयमानायाः पथतो यद्दीयते तत्, भर्तृगृहाद्यदा पितृगृहं याच्यते तदा श्वशुरादिभिर्दत्तमध्यावाहनिकमिति

मेधातिथिः, तदपि* ग्राह्यं न्यायसाम्यात् । दत्तञ्च प्रीतितः शीलधर्म्मनैपुण्यादिषु† उत्पन्नप्रीतिना श्वशुरादिना दत्तञ्च । षड्विधमिति न्यूनसंख्याव्यवच्छेदार्थं नत्वधिकव्यवच्छेदार्थम् । आधिवेदनिकस्यापि स्त्रीधनस्याधिकस्य याज्ञवल्क्येनाभिधानात् ।

तथाच याज्ञवल्क्यः ।

पितृमातृपतिभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकाद्यापि स्त्रीधनं परिकीर्त्तितम् ॥

लक्षितञ्च तेनैव‡ ।

अधिविन्नस्त्रियै देयमाधिवेदनिकं समम् ।
न दत्तं स्त्रीधनं यस्यै§ दत्ते त्वर्द्धं प्रकीर्त्तितम् ॥

यस्या उपरि विवाहः साधिविन्ना । तथा अन्वाधेयस्याधिकस्य विष्णुना कथनात् ।

तथाच विष्णुः ।

पितृमातृसुतभ्रातृदत्तमध्यग्न्युपागतम् ।
आधिवेदनिकं शुल्कमन्वाधेयकमिति स्त्रीधनलक्षणम् ॥

नारदः ।

अध्यग्न्यध्यावाहनिकं भर्त्तृदायस्तथैव च ।

---

* तद्दत्वापीति पाठान्तरम् ।

† शीलकर्म्मनैपुण्यादिष्विति पाठान्तरम् ।

‡ लक्षितञ्चैतद्देवेति पाठान्तरम् ।

§ यासामिति पाठान्तरम् ।

भ्रातृदत्तं पितृभ्याञ्च षड्विधं स्त्रीधनं स्मृतम् ॥

अत्रापि नाधिकव्यवच्छेदे तात्पर्यम् ।

देवलः ।

वृत्तिराभरणं शुल्कं लाभश्च स्त्रीधनं भवेत् ।

कात्यायनः ।

प्राप्तं शिल्पैस्तु यद्वित्तं प्रीत्या चैव यदन्यतः ।

भर्त्तुः स्वाम्यं सदा तत्र शेषन्तु स्त्रीधनं भवेत् ॥

उक्तप्रकारातिरिक्तं यत्स्त्रीधनं स्त्रियार्जितम्, तत्र भर्त्तुरेव स्वाम्यमित्यर्थः ।

तथा ।

विवाहकाले यत्स्त्रीभ्यो दीयते ह्यग्निसन्निधौ ।

तदध्यग्निकृतं सद्भिः स्त्रीधनं परिकीर्त्तितम् ॥

यत्पुनर्लभते नारी नीयमाना हि पैतृकात् ।

अध्यावाहनिकं नाम स्त्रीधनं समुदाहृतम् ॥

एतत्कात्यायनीयमध्यावाहनिकम् ।

तथा ।

प्रीत्या प्रदत्तं यत्किञ्चिच्छ्वश्र्वा वा श्वशुरेण वा ।

पादवन्दनिकं यत्तल्लावण्यार्जितमुच्यते ॥

विवाहात्परतो यत्तु लब्धं भर्त्तृकुलात्स्त्रिया ।

अन्वाधेयन्तु तत्प्रोक्तं यल्लब्धं स्वकुलात्तथा ॥

ऊढ लब्धन्तु यत्किञ्चित्संस्कारात्प्रीतित. स्त्रिया ।

भर्त्तुः पित्रोः सकाशाद्वा अन्वाधेयन्तु तद्भृगुः ॥

गृह्योपस्करवाह्यानां दोह्याभरणकर्म्मिणाम्।
मूल्यं लब्धञ्च यत्किञ्चिच्छुल्कं तत्परिकीर्त्तितम्॥

गृहादिकर्म्मिभिः तत्कर्म्मकरणाय प्रकरणार्थं* यद्दनं स्त्रियै उत्कोचरूपतया दत्तं तच्छुल्कमित्यर्थः। सौदायिकञ्च पूर्व्वमेव प्रसङ्गादुक्तमिति नेह प्रकरणे दर्शितम्।

इति विवादरत्नाकरे स्त्रीधनलक्षणतरङ्गः।



## अथावलुप्तविभागः।

तत्र मनुः।

ऋणे धने च सर्व्वस्मिन्प्रविभक्ते यथाविधि।
पश्चाद्दृश्येत यत्किञ्चित्तत्सर्व्वं समतां नयेत्॥

याज्ञवल्क्यः।

अन्योऽन्यापहृतं द्रव्यं विभक्तैर्यत्तु* दृश्यते।
तत्पुनस्ते† समैरंशैर्विभजेरन्निति स्थितिः॥

---

* प्रस्तुपकरणार्थमिति पाठान्तरम्।

---

* विभक्ते यत्नेति पाठान्तरम्।

† तत्पुनस्तदिति पाठान्तरम्।

अत चोत्सर्गत एव विभागे प्राप्ते वचनारम्भबलेन साधारण-धनापहारे स्तेयदोषो न भवतीति विज्ञाप्यते इति हलायुधः।

कात्यायनः।

प्रच्छादितन्तु यद्येन पुनरागत्य तत्समम्।
भजेरन्भ्रातृभिः सार्द्धमभावे तु पितुः सुताः॥
अन्योऽन्यापहृतं यत्र दुर्विभक्तञ्च यद्भवेत्।
पश्चात्प्राप्तं विभज्येत समभागेन तद्गुरुः॥
विभक्तेनैव यत्प्राप्तं धनं तस्यैव तद्भवेत्।
हृतं नष्टञ्च यत्नर्णं प्रागुक्तञ्च पुनर्भजेत्॥
बन्धुनापहृतं द्रव्यं बलाद्वैव प्रदापयेत्।
बन्धूनामविभक्तानां भोगन्नैव प्रदापयेत्॥*

हृतं परेणापहृतम्। नष्टमदृश्यमानं यत्नर्णं प्रागुक्तं पैतामहम्। बलाद्वैव प्रदापयेदित्यनेन छलादिना तद्दानमित्यभिप्रेतम्। भोगं नैव प्रदापयेत्।† तद्विभागकाले नासावधिकोपभोक्ता‡ च भोगं दापयितव्य इत्यर्थः।

बृहस्पतिः।

साधारणस्यापन्यासनिह्नवे छद्मना क्रियाम्।
भार्य्यहानिकरीं कृत्वा बलाद्वैव प्रदापयेत्॥
मायाविनो हृतधनाः क्रूरा लुब्धाय ये नराः।

---

* प्रवर्तयेदिति पाठान्तरम्।

† प्रवर्तयेदिति पाठान्तरम्।

‡ नाबाध्यवह्मैति पाठान्तरम्।

सम्प्रीत्या साधनीयास्ते स्वार्थहान्या छलेन वा ॥

साधारणेति । साधारण-ऋणन्यासनिह्नवे केनचित्कृते छद्मना पार्श्वहानिकरीं निह्नवकर्त्तृस्वत्वहानिकरीं* क्रियां कृत्वा तन्निह्नुतमपहारकं† दापयेन्न तु बलादित्यर्थः ।

इति विवादरत्नाकरेऽस्वत्वविभागतरङ्गः ।



## अथ नानावर्णानां विभागः ।

तत्र मनुः ।

एतद्विधानं विज्ञेयं विभागस्यैकयोनिषु ।
बह्वीषु चैकजातानां नानास्त्रीषु निबोधत ॥
ब्राह्मणस्यानुपूर्व्येण चतस्रस्तु यदा स्त्रियः ।
तासां पुत्रेषु जातेषु विभागोऽयं प्रकीर्त्तितः* ॥
कीनाशो गोवृषो यानमलङ्कारश्च वेश्म च ।
प्रविश्योद्धारिकं† देयमेकांशश्च प्रधानतः ॥

---

* निह्नवकर्त्तृस्वत्वहानिकारीमिति पाठान्तरम् ।

† तमपहारकमिति, निह्नवमपहारकमिति च पाठान्तरम् ।



* विभागोऽयं विधि स्मृत इति पाठान्तरम् ।

† प्रविश्योद्धारिकमिति पाठान्तरम् ।

चंत्रयं दायादरेद्विप्रो द्वावंशौ क्षत्रियासुतः ।
वैश्याजोऽध्यर्द्धमेवांशमंशं शूद्रासुतो हरेत् ॥

एकयोनिषु सवर्णेषु, एकजातानामेकेनोत्पादितानाम् । बह्वीषु नानास्त्रीषु अनेकवर्णजातासु भार्य्यासु एकजातानामित्यन्वयः । कीनाशो हलवाहकः । यानमश्वादि । तेन कीनाशगोहययानालङ्कारवेश्मानि देयानि विप्रापुत्रस्य, तदंशमध्ये एकः प्रधानतः सारतश्च कर्त्तव्य इत्यर्थः, गोष्ठपादीनि च सति सम्भवे ।

अनुद्धृतोद्धारविभागमुररीकृत्याह ।

सर्व्वं वा रक्थजातन्तु दशधा प्रविभज्यते ।
धर्म्म्यं विभागं कुर्व्वीत विधिनानेन धर्म्मवित् ॥
चतुरोऽंशान्हरेद्विप्रस्त्रीनंशान्क्षत्रियासुतः ।
वैश्यापुत्रो हरेद्द्वंशमंशं शूद्रासुतो हरेत् ॥

विप्र इत्येकत्वस्याविवक्षितत्वादनेकेषु विप्रेष्वियमेव व्यवस्थेति ।

नारदः ।

वर्णावरेष्वंशहानिरूढाजातेष्वनुक्रमात् ।

वर्णावरा विप्रस्य क्षत्रियादयः । ऊढा परिणीता, अंशहानिः क्षत्रियाया जातस्य त्रयोऽंशा इत्यादि । वर्णान्तरेष्विति क्वापि पाठः । तत्राप्ययमेवार्थः ।

महाभारते भीष्म उवाच ।

क्षत्रियस्यापि भार्य्ये द्वे विहिते कुरुनन्दन ।
तृतीया च भवेच्छूद्रा न तु दृष्टान्ततः स्मृता ॥
षड्धा तु भवेत्कार्य्यं क्षत्रियस्तं युधिष्ठिर ।

क्षत्रियाया हरेत्पुत्रश्चतुरोऽंशान् पितुर्धनात्।
युद्धोपचारिकं यत्तु पितुरासीद्धरेच्च तत्॥
वैश्यापुत्रस्तु भागांस्त्रीञ्छूद्रापुत्रस्तथाष्टमम्।
सोऽपि दत्तं हरेत्पित्रा नादत्तं हर्त्तुमर्हति॥
एकैव हि भवेद्भार्या वैश्यस्य कुरुनन्दन।
द्वितीया वा भवेच्छूद्रा न तु दृष्टान्ततः स्मृता॥
पञ्चधा तु भवेत्कार्यं वैश्यस्वं भरतर्षभ।
तयोरपत्ययोर्वक्ष्ये विभागश्च नराधिप॥
वैश्यापुत्रेण हर्त्तव्याश्चत्वारोऽंशाः पितुर्धनात्।
पञ्चमस्तु भवेदंशः शूद्रापुत्रस्य* भारत।
सोऽपि दत्तं हरेत्पित्रं नादत्तं हर्त्तुमर्हति॥

दृष्टान्तोऽत्र वेदः। तेन वेदेनाकथितापि रागतस्तृतीया शूद्रा क्षत्रियेण विवाहिता यदि स्यात्, तदा तु सत्पुत्रस्यैवांश† इत्यर्थः। एवमुत्तरत्रापि। युद्धोपचारिकं युद्धोपकरणं खड्गादि।

याज्ञवल्क्यः।

चतुस्त्रिद्व्येकभागाः स्युर्वर्णशो ब्राह्मणात्मजाः।
क्षत्रजातास्त्रिद्व्येकाविप्रस्तु द्व्येकभागिनः॥

यत्र ब्राह्मणस्य चतस्रः, क्षत्रियस्य च तिस्रोभार्यास्तत्रेदं वचनम्। वर्णशो ब्राह्मणात्मजाः वर्णे वर्णे ब्राह्मणात्मजा इत्यर्थः। अत्र च यत्र क्षत्रियवैश्यावधिकगुणी, तत्र महाभारतोक्ता विभाग-

* शूद्रापुत्रायेति पाठान्तरम्।

† तत्पुत्रस्यैवमंश इति पाठान्तरम्।

व्यवस्था । मन्दगुणयोस्तु याज्ञवल्क्योक्ता व्यवस्थेत्यविरोधः ।

विष्णुः ।

ब्राह्मणस्य चतुर्वर्णेषु ये पुत्रा भवेयुस्ते पैतृकमृक्थं दशधा विभजेयुः । तत्र* ब्राह्मणीपुत्रश्चतुरोंऽशानादद्यात्, क्षत्रियापुत्रस्त्रीन्द्वावंशौ वैश्यापुत्रः,शूद्रापुत्रस्त्वेकम् । अथ चेच्छूद्रापुत्रवर्ज्जं ब्राह्मणस्य पुत्रत्रयं भवेत्, तदा नवधा धनं विभजेयुः, वर्णक्रमेण च चतुस्त्रिद्विभागीकृतानंशानादद्युः† । वैश्यवर्ज्जमष्टधा कृत्वा चतुरस्त्रीनेकञ्च समादद्युः । क्षत्रियवर्ज्जं सप्तधा कृत्वा चतुरो द्वावेकञ्च । ब्राह्मणवर्ज्जं षड्धा कृत्वा त्रीन्द्वावेकञ्च । क्षत्रियवैश्यशूद्रेष्वप्येवमेव विभागः । अथ ब्राह्मणस्य ब्राह्मणक्षत्रियौ पुत्रौ स्यातां, तदा सप्तधा कृतात्तद्धनात् ब्राह्मणश्चतुरोंऽशानादद्यात्, त्रीन्राजन्यः । ब्राह्मणस्य ब्राह्मणवैश्यौ चेत्पुत्रौ, तदा तद्धनात् षड्धा विभक्ताच्चतुरोंऽशान्‡ ब्राह्मण आदद्यात्, द्वौ वैश्यासुतः । अथ ब्राह्मणस्य ब्राह्मणशूद्रौ पुत्रौ स्यातां, तदा तद्धनं पञ्चधा विभजेयातां चतुरोंऽशान् ब्राह्मणस्त्वादद्यात्, एकं शूद्रः। अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियवैश्यौ पुत्रौ स्यातां, तदा तद्धनं पञ्चधा विभजेयातां, त्रीनंशान् क्षत्रियस्त्वा-

---

* यथेति पाठान्तरम् ।

† चतुस्त्रिद्विभागीकृतांशानादद्युरिति पाठान्तरम् ।

‡ षड्धा कृत्वा चतुरोंऽशानिति पाठान्तरम् ।

दद्यात्, द्वावंशौ वैश्यः। अथ ब्राह्मणस्य क्षत्रियस्य वा क्षत्रियशूद्रौ पुत्रौ स्यातां, तदा तद्धनं चतुर्धा विभजेयातां, त्रीनंशान् क्षत्रियस्त्वादद्यात्, एकं* शूद्रः। अथ ब्राह्मणस्य क्षत्रियवैश्ययोर्वा वैश्यशूद्रौ पुत्रौ स्यातां, तदा तद्धनं त्रिधा विभजेयातां, द्वावंशौ वैश्य आदद्यात्, एकं शूद्रः।

अथ शङ्खलिखितौ।

अन्यवर्णस्त्रीषु जातानां दायादर्द्धार्द्धहानिर्वर्णक्रमेण।

विष्णुः।

यदि ब्राह्मणीपुत्रौ द्वौ स्यातामेकः शूद्रापुत्रस्तदा ब्राह्मणीपुत्रावष्टौ भागानादद्याताम्, एकं शूद्रापुत्रः। अथ शूद्रापुत्रावुभौ स्यातामेको ब्राह्मणीपुत्रः, तदा षड्धा विभज्य चतुरोऽंशान् ब्राह्मण आदद्यात्, द्वावंशौ शूद्रापुत्रौ। अनेन क्रमेणांशकल्पना अन्यत्रापि भवति।

पुनर्विष्णुः।

अथैकपुत्रा ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्याः सर्व्वहराः, क्षत्रियवैश्यौ वा राजन्यस्य, वैश्यस्य वैश्यः, शूद्रः शूद्रस्य।

यदा ब्राह्मणस्य ब्राह्मण्यादिभार्य्यासु तिसृषु मध्ये एक एव पुत्रो ब्राह्मणः क्षत्रियो वैश्यो वा, तदा सर्व्वहरः स एव। एवं यदि क्षत्रियस्यापि भार्य्याद्वये क्षत्रिय एव वैश्य एव वा, तदा स एव

---

* चतुर्थमिति पाठान्तरम्।

सर्व्वहरः। एवं वैश्यस्याप्येको वैश्यः सर्व्वहरः, शूद्रस्यैकः शूद्रः सर्व्वहरः। क्षत्रियवैश्ययोस्तृतीया द्वितीया भार्या अवैदिकतया नाचोक्ताः, अवैधयोस्तु क्षत्रियवैश्यतृतीयद्वितीयपरिणययोरेवमेव नेयम्।

वशिष्ठः।

> यदि ब्राह्मणस्य ब्राह्मणक्षत्रियवैश्याः पुत्राः स्युः, त्र्यंशं ब्राह्मण्याः पुत्रो हरेत्, द्व्यंशं राजन्यायाः पुत्रः, सममितरे विभजेरन्।

इतरे वैश्यापुत्राः। अत्र च विष्णुवशिष्ठौ विषमविभागवादिनौ भागिगुणोत्कर्षापकर्षाभ्यामविरोधितया व्यवस्थाप्यौ।

मनुः।

> समवर्णासु या जाताः सर्व्वे पुत्रा द्विजन्मनाम्।
> उद्धारं ज्यायसे दत्त्वा भजेरन्नितरे समम्॥

यत्र द्विजन्मनां समवर्णासु नानास्त्रीषु बहवः पुत्राः, तथा वाशब्दादसवर्णास्वपि नानास्त्रीषु बहवः पुत्रास्तदा ज्यायसे किञ्चिदुद्धारं दत्त्वा सममितरे विभजेरन्।

तथा।

> शूद्रस्य तु सवर्णैव नान्या भार्य्योपदिश्यते*।
> तस्यां जाताः समांशाः स्युर्यदि पुत्रशतं भवेत्॥

बौधायनः।

> सवर्णापुत्रानन्तरापुत्रयोरनन्तरापुत्रश्चेद्गुणवान् स ज्येष्ठांशं

* भार्य्या विधीयत इति पाठान्तरम्।

हरेद्गुणवानमेयाणां भर्त्ता भवति ।

बृहस्पतिः ।

विप्रेण क्षत्रियाजातो जन्मज्येष्ठो गुणान्वितः ।
भवेत्समांशी विप्रेण वैश्याजातस्तथैव च ॥

गौतमः ।

ब्राह्मणस्य राजन्यापुत्रो* गुणसम्पन्नो ज्येष्ठतुल्यभाक्†
ज्येष्ठांशहीनमन्यत् ।

अन्यद्रवादि । ज्येष्ठांशहीनं ज्येष्ठांशरूप उद्धारो न करणीयइत्यर्थः । तथाच राजन्यावैश्यापुत्रसमवाये,‡ यथांशं,§ ब्राह्मणीपुत्रेण क्षत्रियापुत्रस्तुल्यभाक् ब्राह्मणस्य तथा ब्राह्मणीपुत्राभावे राजन्यावैश्यापुत्रयोस्तिष्ठतोर्गुणवान् वैश्यापुत्रो राजन्यापुत्रेण कनिष्ठेन निर्गुणेन सह तुल्यांशः । ज्येष्ठांशहीनो ब्राह्मणीपुत्रइव राजन्यापुत्र इत्यर्थः । क्षत्रिया चेदिति¶ एवं क्षत्रियस्य क्षत्रियावैश्यापुत्रावेवंविधौ यदा भवतस्तदायमेव विभागक्रमः । तथा वैश्यस्यापि वैश्याशूद्रापुत्रयोरेवमेव । एवं बौधायनस्यैवंविधे विषये ज्येष्ठांशहारित्वाभिधानं सवर्णपुत्रे निर्गुणे कनी-

* राजन्यायां, पुत्र इति पाठान्तरम् ।

† ज्येष्ठतुल्यभाग इति पाठान्तरम् ।

‡ ब्राह्मणीराजन्यापुत्रसमवाये इति पाठः सङ्गच्छते ।

§ यथेति पाठः सङ्गच्छते ।

¶ पाठस्तत्र प्रामादिक इति मन्ये वचने [illegible]
ज्ञेयम् ।

यसि। सगुणे तु कनीयसि तुल्यांशत्वमित्यविरोधः*।

बृहस्पतिः।

न प्रतिग्रहभूर्देया क्षत्रियादिसुताय वै।
यद्यप्यस्य पिता दद्यान्मृते विप्रासुतो हरेत्॥

वृद्धमनुः।

ब्रह्मदायागतां भूमिं हरेयो ब्राह्मणीसुतः†।
गृहं द्विजातयः सर्व्वे तथा क्षेत्रं क्रमागतम्॥

ब्रह्मदायागतां प्रतिग्रहयाजनादिलब्धां, द्विजातयस्त्रैवर्णिकाः। प्रतिग्रहलब्धामित्यत्र‡ पारिजातः।

बृहस्पतिः।

शूद्रां द्विजातिभिर्जातो न भूमेर्भागमर्हति।
सजातावाप्नुयात्§ सर्व्वमिति धर्म्मो व्यवस्थितः॥
निषाद एकपुत्रस्तु विप्रस्य स¶ तृतीयभाक्।
द्वौ सकुल्याः सपिण्डा वा‖ स्वधादाताथ** संहरेत्॥
कुल्याभावे स्वधादाता आचार्य्यः शिष्य एव वा।

---

* तुल्यांशत्वमित्यविरोध इति पाठान्तरम्।

† हरेयुर्ब्राह्मणीसुता इति पाठान्तरम्।

‡ प्रतिलब्धामित्यत्रेति पाठान्तरम्।

§ सजातिराप्नुयादिति पाठान्तरम्।

¶ विप्रस्येति पाठान्तरम्।

‖ सकुल्य, सपिण्डोवेति पाठान्तरम्।

** स्वधादातावेति पाठान्तरम्।

सर्व्वांस्त्वापत्सु तान्वर्णान्तथैव* प्रतिपादयेत्॥

निषादः शूद्रायां ब्राह्मणाज्जातः। तेन तृतीयो भागः शूद्रापुत्रस्य, द्वौ सपिण्डस्य,तदभावे सकुल्यस्य भवेत्। सकुल्याभावे तु आचार्यः शिष्यो वा हरेत्। सर्व्वास्वापत्सु सर्व्वेषां सपिण्डसकुल्यादीनामभावे† सगोत्रान्तान्वर्णान्निषादपिण्डगोत्रान् प्रतिपादयेदित्यर्थः। सगुणनिषादविषयमेतदिति पारिजातः।

विष्णुः।

द्विजातीनां शूद्रस्त्वेकपुत्रोऽर्द्धहरः। अपुत्रस्य ऋक्थस्य‡ या गतिः सावार्द्धस्य द्वितीयस्य।

द्विजातीनां ब्राह्मणव्यतिरिक्तानां क्षत्रियवैश्यानाम्, ब्राह्मणजे शूद्रापुत्रे देवलेन तृतीयांशस्योक्तत्वात्, द्वितीयस्यार्द्धस्य ब्राह्मणभागभूतस्य§।

मनुः।

यद्यपि स्यात्सपुत्रो वा यद्यपुत्रोऽथवा भवेत्।
नाधिकं दशमाद्दद्याच्छूद्रापुत्राय धर्म्मतः॥
ब्राह्मणक्षत्रियविशां शूद्रापुत्रो न ऋक्थभाक्।
यदेवास्य पिता दद्यात्तदेवास्य धनं भवेत्॥

---

* तानर्थान्निषादेति पाठान्तरम्।

† सपिण्डसकुल्यानामभावे इति पाठान्तरम्।

‡ अपुत्र ऋक्थस्येति पाठान्तरम्।

§ यद्य एव किषु पुस्तकेषु दृश्यते, पर द्विजातिभागभूतस्येति पाठोऽयुक्त सूत्रे द्विजातीनामित्यनेन क्षत्रियवैश्ययोरेव प्रतिपादनात्। गतिश्चापुत्रधनाधिकारीता सोद्धव्येति सुधीभिर्भाव्यम्।

सपुत्रः वर्त्तमानद्विजातिपुत्रः, अपुत्रस्तद्रहितः। अत्र लक्ष्मी-धरः। यदा पिता प्रसन्नः शूद्रापुत्राय ददाति, तदा दशमांशमेव दद्यादिति। तेन तन्मते शूद्रापुत्रो न रिक्थभाक् न पिता दत्तरिक्थभागिति नैयम्। हलायुधपारिजाताभ्याञ्च प्रथमं वाक्यमत्यन्तनिर्गुणोढ़शूद्रापुत्रपरतया, द्वितीयञ्च निर्गुणानूढ़शूद्रापुत्रपरतया, भागनिषेधकमेव वर्णितम्*।

वृहस्पतिः।

> अनपत्यस्य शुश्रूषुर्गुणवाञ्छूद्रयोनिजः।
> लभेताजीवनं शेषं सपिण्डाः समवाप्नुयुः॥

अपरिणीतास्वित्यधिकारादनूढ़ापुत्रविषयमेतत्।

अत्र गौतमः।

> शूद्रापुत्रोऽप्यनपत्यस्य शुश्रूषुश्चेल्लभेत वृत्तिमूलमन्तेवासि-विधिना।

अनूढ़शूद्रापुत्रोऽपि वर्णत्रयस्य अविद्यमानान्यद्विजातिपुत्रस्य वृत्तिमूलं कृष्यादिरूपं जीवनमूलं किञ्चिल्लभेत, यदि शुश्रूषुरन्तेवासिवदाराधनकर्त्ता स्यादित्यर्थः।

यत्तु तस्मै पित्रा दत्तमपि देयमाहतुः शङ्खलिखितौ।

> न शूद्रापुत्रोऽर्थभागी, यदेवास्य पिता दद्यात्तदेवास्य भागः, तस्य गोमिथुनञ्चापरं दद्यात्कृष्णायसं कृष्णधान्यं तिलवर्ज्जम्।

---

* भागनिषेधकपरमेव दर्शितमिति पाठान्तरम्।

गौतमः ।

शूद्रापुत्रवत्प्रतिलोमास्तु ।

इतरवर्णजाताः शूद्रापुत्रवदन्तेवासिविधिना* मूलमात्रभाज इत्यर्थः ।

मनुः ।

दास्यां वा दासदास्यां वा यः शूद्रस्य सुतो भवेत् ।
सोऽनुज्ञातो हरेदंशमिति धर्मो व्यवस्थितः ॥

दास्यां ध्वजाहृतो भक्तदास इत्यादि लक्षणान्यतमलक्षणवत्यां, दासदास्यां तथाविधलक्षणवद्दासदास्यां वाऽनूढायां दासजातोऽनुज्ञातोऽपि तथा मतइति व्यवस्थितोधर्मः । परिचारकदास्यामिति कल्पतरुः ।

याज्ञवल्क्यः ।

जातोऽपि दास्यां शूद्रेण कामतोऽंशहरो भवेत् ।
मृते पितरि कुर्य्युस्तं भ्रातरस्त्वर्द्धभागिनम् ॥

कामतः पितुरिच्छया भागं लभते । यदि पितुरूर्द्धं परिणीतापुत्राः सन्ति, तदा स्वभागापेक्षयार्द्धभागग्राहकं दासीपुत्रं कुर्य्युरित्यर्थः ।

परिणीतापुत्राभावे आह ।

अभ्रातृको हरेत्सर्व्वं दुहितॄणां सुताहते ।

---

* अन्तेवासिविधयेति पाठान्तरम् ।

परिणीतासुताभावे परिणीतभार्य्यादुहितृपुत्राभावे च दासीपुत्र एव पितुरूर्द्ध सर्व्वं हरेत् ।

इति विवादरत्नाकरे नानावर्णानां विभागतरङ्गः ।

---

## अथ विभक्तजविभागः ।

मनुः ।

ऊर्द्धं विभागाज्जातस्तु पित्र्यमेव धनं हरेत्* ।
संसृष्टास्तेन वा ये स्युर्विभजेत स तैः सह ॥

पित्रा सह विभक्तेषु पुत्रेषु पश्चाज्जातो मृते पितरि पित्रंशं सर्व्वं हरेत् । जीवति पितरि पितृधनादंशमात्रम् । एवकारेण तु नापि विभक्तभ्रात्रंशमिति द्योतयति ।

बृहस्पतिः ।

पित्रा सह विभक्ता ये सापत्ना वा सहोदराः ।
जघन्यजाश्च ये तेषां पितृभागहरास्तु ते ।
अनीशः पूर्व्वजः पित्र्ये भ्रातृभागे विभक्तजः ॥

पूर्व्वजः विभागपूर्व्वजः विभक्त इति यावत्, असौ पितृभागे अनीशः, विभक्तजः विभक्तपितृजातः भ्रातृभागे अनीश इत्यर्थः ।

---

* हरेद्धनमिति पाठान्तरम् ।

तथा।

पुत्रैः सह विभक्तेन पित्रा यत्स्वयमर्जितम्।
विभक्तजस्य तत्सर्व्वमनीशाः पूर्व्वजाः स्मृताः॥
यथा धने तथर्णे चा० दानाधानक्रयेषु च।
परस्परमनीशास्ते मुक्ता शौचोदकक्रियाः॥

याज्ञवल्क्यः।

विभक्तेषु सुतो जातः सवर्णायां विभागभाक्।
दृश्याद्वा तद्विभागः स्यादायव्ययविशोधितात्॥

विष्णुः।

पितृविभक्ता अनन्तरोत्पन्नस्य विभागं दद्युः।

एतद्द्वयमपि विभागसमयगर्भस्थविभागानन्तरोत्पन्नविषयम्। अनेन विभागसमयगर्भस्थस्य विभागानन्तरजस्य विभक्तैः सद्भिः स्वभागादांशस्य तद्भागपूरणं कर्त्तव्यमित्युक्तं, तदन्यस्य विभागानन्तरजस्य विभक्तस्य पितुर्धनभागितेति मन्वादिमतं विभागसमयोत्पन्नस्यास्फुटतामादाय, स्फुटगर्भायान्तु विभाग एव नास्तीति प्रकाशकारः। हलायुधस्तु विष्णुवाक्यलिखनानन्तरं याज्ञवल्क्यं लिखित्वाह, अस्यार्थः सवर्णायामुत्पन्नो विभक्तजो यदि गुणवान्, तदा सर्व्वस्माद्दृश्यादृश्यरूपात्पूर्व्वविभक्तरूपाद्भागं लभते, यदि तु मन्दगुणस्तदा दृश्यादेव परिदृश्यमानादेव

* तथर्णेऽपीति पाठान्तरम्।

भूम्यादेर्भूमिरूपधनादुत्पन्नधान्यादिरूपाद्वृद्धिसहितमृणं पातयित्वा* अवशिष्टभागं लभते इति ।

इति विवादरत्नाकरे विभक्तविभागतरङ्गः ।

---

## अथ विभक्तागतविभागः ।

तत्र बृहस्पतिः ।

कृतेऽकृते विभागे वा रिक्थी यत्र प्रवर्त्तते ।
सामान्यं चेद्भावयति तत्र भागहरस्तु सः ॥

भावयति विभावयति प्रमाण्यशांश इति ।

तथा ।

ऋक्थं लेख्यं गृहं क्षेत्रं यस्य पैतामहं भवेत् ।
चिरकालप्रोषितोऽपि भागभागागतस्तु सः ॥
गोत्रसाधारणं† त्यक्त्वा योऽन्यदेशं समाश्रितः ।
तद्वंशस्यागतस्यांशः प्रदातव्यो न संशयः ॥
तृतीयः पञ्चमश्चैव सप्तमो वापि यो भवेत् ।
जन्मनामपरिज्ञाने लभेतांशं क्रमागतम् ।

---

* पातयित्वा चावश्यकादिति पाठान्तरम् ।

† गोत्र साधारणमिति पाठान्तरम् ।

यस्याचतुर्थादविभक्तविभक्तानामित्यादि देवलोक्तनियमः, स सहवासादौ, अयन्तु दूरदुर्गमवासादावित्यविरोधः ।

तथा ।

यं परम्परया मौलाः सामन्ताः स्वामिनं विदुः ।
तदन्वयस्यागतस्य दातव्या गोत्रजैर्मही ॥

इति विवादरत्नाकरे विभक्तागतविभागतरङ्गः ।

---

## अथ पुत्रान्तरैर्विभागः ।

तत्र मनुः ।

पुत्रिकायां कृतायान्तु यदि पुत्रोऽनु जायते ।
समस्तत्र विभागः स्याज्ज्येष्ठता नास्ति हि स्त्रियाः ॥

पुत्र औरसः । अनु पुत्रिकाकरणात् । स्त्रियाः पुत्रिकात्मिकायाः । पुत्रिका च अपुत्रोऽनेन विधिनेत्यादि वाक्येन* पुत्रलक्षणप्रकरणे मनुना कथनीया ।

वृहस्पतिः ।

एक एवौरसः पित्र्ये धने स्वामी प्रकीर्त्तितः ।
तत्तुल्या पुत्रिका प्रोक्ता भर्त्तव्यास्त्वपरे सुताः ॥

---

* विधिनेत्यादिना वाक्येनेति पाठान्तरम् ।

ननुः ।

एक एवौरसः पुत्रः पित्र्यस्य वसुनः प्रभुः ।

शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनम् ॥

शेषाणां ये तत्र तदंशभागित्वेन निषिद्धास्तेषामानृशंस्यं दया, प्रजीवनं भरणम् ।

तथा ।

यवीयाञ्ज्येष्ठभार्य्यायां पुत्रमुत्पादयेद्यदि ।

समस्तत्र विभागः स्यादिति धर्म्मो व्यवस्थितः ॥

ज्येष्ठस्याविभक्तस्यापुत्रस्य भार्य्यायां कनिष्ठेन नियुक्तेनोत्पादितः पुत्रो मृते पितर्य्युत्पादकेन पितृव्येन सह विभजमानः सममंशं लभते, न तु पितृज्येष्ठताप्रयुक्तमुद्धारादिकमस्येत्यर्थः ।

अत्रैव न्यायद्योतकं वाक्यम् ।

उपसर्जनं प्रधानस्य धर्म्मतो नोपपद्यते ।

पिता प्रधानं जनने तस्माद्धर्म्मेण तं भजेत् ॥

पिता उपसर्जनमप्रधानं क्षेत्रजः सः प्रधानस्यौरसस्य* तुल्य इति धर्म्मतो नोपपद्यते, यतस्तत्र पिता जनकः पितृव्य एव प्रधानमिति प्रकाशकारः । लक्ष्मीधरस्तु उपसर्जनत्वमप्युपसर्जनमित्याह फलतयात्र न विशेषः । धर्म्मेण शास्त्रोदितेन† ।

तथा ।

धनं यो बिभृयाद्भ्रातुर्मृतस्य स्त्रियमेव च ।

---

* प्रधानस्यैव तथेति पाठान्तरम् ।

† शास्त्रादिष्टेनेति पाठान्तरम् ।

सोऽपत्यं भ्रातुरुत्पाद्य दद्यात्तस्यैव तद्धनम् ॥

विभक्तस्य* भ्रातुरनपत्यस्य च प्रमीतस्य धनं स्त्रियञ्च यो धारयति स क्षेत्रजोत्पादनधर्मेण तस्यामपत्यमुत्पाद्य तदपत्यस्यैव तद्धनं दद्यात्, न तु लोभेन भ्रातृधनं स्वयमेव गृह्णीयादित्यर्थः। तथा।

यद्येकरिक्थिनौ स्यातामौरसक्षेत्रजौ सुतौ।
यद्यस्य पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥

क्षेत्रजोऽत्रानियुक्तादुत्पन्नः। पैतृकमृक्थं पित्रा तस्मात्रि पुत्रप्रतिसन्धानार्थं समर्पितम्। अन्ये तु यो यस्य पिता, तद्धनं स गृह्णीयादिति श्रुत्यैव वदन्ति।

अनेकपितृकाणान्तु पितृतो भागकल्पना।
यद्यस्य पैतृकं रिक्थं स तद्गृह्णीत नेतरः ॥

अनेकपितृकाणामेकस्यां† योषिति बहुभिः संजातानाम्।

यदा व्याधिपरिचर्य्यया‡ व्याधिचिकित्सापरिचयाद्वा विधिना क्षेत्रज उत्पादिते औषधादिसेवया व्याध्यपगमे औरस उत्पन्नः, तदा किं क्षेत्रजस्य प्रतिसन्धानमात्रं वा भागी वा, विभागपक्षे कीदृशस्तस्य भाग इत्यत्र मनुः।

षष्ठन्तु क्षेत्रजस्यांशं प्रदद्यात्पैतृकाद्धनात्।
औरसो विभजन्दायं पित्र्यं पञ्चममेव वा ॥

---

* विभक्तधनस्येति पाठान्तरम्।

† एकस्येति पाठान्तरम्।

‡ व्याध्यपरिचर्य्ययेति व्याध्यपरिचयाद्वेति च पाठान्तरम्।

सोऽयं पञ्चमषष्ठभागविकल्पः क्षेत्रजस्य गुणवत्तागुणवत्ताभ्यां व्यवस्थितः।

तथा।

औरसक्षेत्रजौ पुत्रौ पितृऋक्थस्य भागिनौ।

दशापरे तु क्रमशो गोत्रऋक्थांशभागिनः॥

अत्रादमर्द्धं पूर्व्वोक्तविध्यनुवादः। दश दत्तकादयः क्रमशः पूर्व्वपूर्व्वाभावे गोत्रभागिनो ज्ञातिकार्य्यकारिणः* इत्यसहाया-चार्य्यः। ऋक्थांशभागिनः पितृऋक्थांशभागिनः। एत-च्चौरसपुत्रिकाक्षेत्रजानामभावे।

पुत्रं प्रकृत्य वशिष्ठः।

तस्मिंश्चेत्प्रतिगृहीत औरसः पुत्र उत्पद्यते, स चतुर्थ-भागभागी स्यात्, यदि नाभ्युदयिकेषु प्रयुक्तं स्यात्।

तस्मिन्नौरसे पुत्रे† स प्रतिगृहीतः पुत्रः। यदि स्यात्प्रभूतं धनमिति शेषः। यदि नाभ्युदयिकेषु प्रयुक्तं स्याद्यदि‡ धनं नाभ्युदयिकेषु यज्ञादिषु प्रयुक्तं विनियुक्तं स्यादित्यर्थः।

कात्यायनः।

उत्पन्ने त्वौरसे पुत्रे तृतीयांशहराः स्मृताः।

---

* ज्ञातिकार्य्यभागिन इति पाठान्तरम्।

† तस्मिन्नौरसे पुत्रे प्रतिगृहीते इति, तस्मिन्नौरसे पुत्रे प्रतिगृहीते प्रतिगृहीत पुत्रो यदि स्यादिति च पाठान्तरम्।

‡ यद्यौरसेनेति पाठान्तरम्।

सवर्णास्त्ववर्णास्तु* ग्रासाच्छादनभागिनः ॥

औरसे पुत्रे जाते दत्तकादयस्तृतीयांशभागिनः सवर्णा इत्यर्थः। अत्र पूर्वपरिगृहीतपुत्रे चतुर्थांश उक्तः अनेन तु तृतीयांशभागित्वम्। तदिदमगुणवत्त्वगुणवत्त्वाभ्यां व्यवस्थाप्यम्। एतद्वाक्यद्वयं† शेषाणामानृशंस्यार्थं प्रदद्यात्तु प्रजीवनमिति मनुवाक्येऽपि असवर्णानामेव पुत्राणां भरणमात्रविधानम्।

अत्र बृहस्पतिः।

क्षेत्रजाद्याः सुताश्चान्ये‡ पञ्चषट्सप्तभागिनः।

क्षेत्रजाद्याः क्षेत्रजकानीनपौनर्भवाः यथासंख्यं पञ्चषट्सप्तभागिन इत्यर्थः।

हारीतः।

विभजिष्यमाण एकविंशं कानीनाय दद्यात्, विंशं पौनर्भवाय, एकोनविंशमामुष्यायणाय, अष्टादशं क्षेत्रजाय, सप्तदशं पुत्रिकापुत्राय, इतरानौरसाय दद्युः।

आमुष्यायणो गूढोत्पन्नः। इतरान् षोडशभागान्।

ब्रह्मपुराणे।

समग्रधनभोक्ता स्यादौरसोऽपि जघन्यजः।
त्रिभागं क्षेत्रजो भुङ्क्ते चतुर्थं पुत्रिकासुतः॥
कृत्रिमः पञ्चभागन्तु षड्भागं गूढसम्भवः।

---

* सवर्णा असवर्णास्त्विति पाठान्तरम्।

† एतद्वंशाद्येति पाठान्तरम्।

‡ सुतास्त्वन्ये इति पाठान्तरम्।

सप्तांशकञ्चापविद्धः कानीनश्चाष्टमांशकम् ॥
नवभागं सहोढ़स्तु क्रीतो दशममश्नुते ।
पौनर्भवस्तु परतो द्वादशं स्वयमागतः ॥
त्रयोदशं स्वभागन्तु* शूद्रीभुङ्क्ते पितुर्धनात् ॥

बृहस्पतेः कानीने षड़ंशवादो हारीतस्य तत्रैव विंशभागवादः ब्रह्मपुराणस्य तत्रैवाष्टमभागवादः अतिगुणवत्त्वनिर्गुणत्व†-मध्यमगुणवत्त्वेनैवाविरोधनीयः। पौनर्भवे बृहस्पतेः सप्तमांशवादः, ब्रह्मपुराणीयः पौनर्भवे एकादशभागवादः, तत्रैव हारीतोक्तविंशभागवादः अतिगुणवत्त्वगुणवत्त्वनिर्गुणत्वैरविरोधनीयः। तथा चैत्रजोऽपि न गूढोत्पन्नानामित्युक्तम्। अत्र च त्रयोदशस्तु पुत्रेष्वन्यतम उत्पन्नः पितुः किं‡ लभते इत्याकाङ्क्षायां ब्रह्मपुराणम्। विभजिष्यमाण इत्यादि हारीतवाक्यं, षट्सु दायादेषु विकल्प इत्यादि शङ्खलिखितवचनञ्च सुते पितरि षण्णां सवर्णानां दायादानां§ विभागबोधकम्। तत्र प्रथममौरसापेक्षया षण्णां मन्दगुणत्वे, द्वितीयन्तु औरसेन सह¶ समानगुणवत्त्वे।

पुनः शङ्खलिखितौ।

---

* त्रयोदशम भाग स्वति पाठान्तरम्।

† सर्व्वथा निर्गुणत्वेति पाठान्तरम्।

‡ पितुः स्वकक्ष्यमिति पाठान्तरम्।

§ बन्धुदायादानामिति पाठान्तरम्।

¶ सह तेषामिति पाठान्तरम्।

रोसभोऽधिको* ज्येष्ठस्य तस्याभावे क्षेत्रजपुत्रिकासुत†-
योस्तयोरप्यभावे त्रयाणामितरेषां, तेषामभावे सवर्णानामदायादानां‡ सर्व्वेरिक्थग्रहणम्।

अत्र अदायादानामपि पूर्व्वपूर्व्वाभावे रिक्थग्रहणं बोद्धव्यम्।

तथा।

अपविद्धः सहोढो दत्तः क्रीतः शूद्रापुत्र उपनतश्च स्वयमित्यदायादाः षडेव पुत्रास्तेषां सारासारतोऽत्र महर्षीणां परस्परविरुद्धभागग्रहणवादो निर्गुणत्वगुणवत्त्वतदधिकगुणवत्त्वैरविरोधनीय इति§।

शङ्खलिखितौ।

षट् तु दायादेषु विकल्पः, औरसः क्षेत्रजः पुत्रिकापुत्रः पौनर्भवः कानीनो गूढोत्पन्नश्चेति षट् पुत्रा बन्धुदायादाः पितृपितामहानामेकगोत्राः रिक्थपिण्डौ सापिण्ड्यञ्च¶ तेषामर्थं दशधा कुर्यात्, द्वौ भागौ पितुर्द्वावौरसस्य, त्रीन् क्षेत्रजपुत्रिकापुत्रयोरेकैकमितरेषाम्।

विकल्पोऽयमव्यवस्था। बन्धुदायादाः गोत्रपिण्डोदकभाज रिक्थभाजश्च। एतदेव विवृतं पितृपितामहानामित्यादिना।

---

* ऋषभोऽधिक इति ऋषभोऽधिक इति च पाठान्तरम्।

† पुत्रेति पाठान्तरम्।

‡ सर्वासदायादानामिति।

§ भवतिनिर्गुणत्वतदधिकगुणवत्त्वतदधिकगुणवत्त्वैरविरोधनीय इतीति पाठान्तरम्।

¶ बन्धुरिक्थाभा इति, रिक्थपिण्डोदकभागात्वादिति च पाठान्तरम्।

अनेन दशधा कृते साधारणेऽर्थे द्वौ भागौ पितुः द्वावौरसस्य, सार्द्धः सार्द्धो भागः क्षेत्रजस्य पुत्रिकापुत्रस्य चोक्तः। एक एको भागः पौनर्भवकानीनगूढ़जेभ्यो देयः। एतेभ्यः प्रजीवनमितश दायादेषु पुत्रेषु षट्सु सत्सु।

गौतमः।

> पुत्रा औरसक्षेत्रजदत्तापविद्धकृत्रिमगूढ़ोत्पन्ना रिक्थभाजः कानीनसहोढ़पौनर्भवपुत्रिकापुत्रस्वयंदत्तक्रीता गोत्रभाजश्चतुर्थांशिनः औरसाद्यभावे।

गोत्रभाजः गोत्रं भजन्ते पिण्डोदकदानक्रियादिभिः पुत्रकार्य्यं कुर्व्वन्तीति तथोच्यन्ते। एतच्च कानीनादीनां गोत्रमात्रभाक्त्वचनमौरसादीनामेकतरस्यापि सम्भवे*ऽंशहरत्वप्रतिषेधार्थम्। चतुर्थांशिन औरसाद्यभावे पितरि सति, असति तु पितरि औरसाद्यभावक्रमेण सर्व्वरिक्थग्राहका एव। एतच्चतुर्थांशभागित्वमेषां गुणवत्त्वे† ब्रह्मपुराणस्थामीषां मन्दगुणत्वे इत्यविरोधः। शङ्खलिखितवाक्ये पौनर्भवकानीनयोरंशहारित्वाभिधानं गौतमीयस्य‡ तन्निषेधनं सवर्णासवर्णविषयत्वेन व्यवस्थाप्यम्। असवर्णास्तु ग्रासाच्छादनभागिन इति कात्यायनवाक्यात्§। एवं शङ्खलिखितयोरपि अपविद्धे दत्ते चादाया-

---

* सम्भवे इति पाठान्तरम्।

† मन्दगुणवत्त्वे इति पाठान्तरम्।

‡ गौतमीये इति पाठान्तरम्।

§ कात्यायनवचनादिति पाठान्तरम्।

।भिधानं गौतमस्य तत्रैव दायादत्वाभिधानमप्येवं* विषय-
स्यैव विशेषणीयम्†।

रसौढ़दत्तकक्रीतस्वयमुपागतापविद्धशूद्रापुत्रानभिधाय औरः
दीन् परामृश्य पुनर्वशिष्ठः।

यस्य तु पूर्व्वेषां वर्गाणां‡ न कश्चिद्दायादः स्यादेते तस्य
भागं हरेयुः।

हारीतः।

षड्बन्धुदायादाः, साध्व्यां स्वयमुत्पादितः क्षेत्रजः पौन-
र्भवः कानीनः पुत्रिकापुत्रो गूढ़ोत्पन्नश्चेति बन्धुदायादाः।
दत्तः क्रीतोऽपविद्धः सहोढ़ः स्वयमुपागतः सहसादृष्ट-
श्चेत्यबन्धुदायादाः।

विभाक्त्वेन बन्धुत्वं दायादत्वञ्च। लक्ष्मीधरस्तु बन्धुदाया-
ादद्दते इति बन्धुदायादा इत्याह। तात्पर्यञ्च पूर्व्वषट्कोत्तर-
षट्कयोः प्राधान्याप्राधान्ययोः समानम्।

मनुः।

पुत्रान्द्वादश यानाह नृणां स्वायम्भुवो मनुः।
तेषां षड्बन्धुदायादाः षड़दायादबान्धवाः॥
औरसः क्षेत्रजश्चैव दत्तः कृत्रिम एव च।
गूढ़ोत्पन्नोऽपविद्धश्च दायादा बान्धवास्तु षट्॥

---

* एवविधेति पाठान्तरम्।

† अविरोधनीयमिति पाठान्तरम्।

‡ यषां पूर्व्वेषामिति पाठान्तरम्।

कानीनश्च सहोढ़श्च क्रीतः पौनर्भवस्तथा ।
स्वयन्दत्तश्च शौद्रश्च षड्दायादबान्धवाः ।

बौधायन. ।

औरसं पुत्रिकापुत्र क्षेत्रजं दत्तकृत्रिमौ ।
गूढ़श्चैवापविद्धश्च ऋक्थभाजः प्रचक्षते ॥
कानीनश्च सहोढ़श्च क्रीतं पौनर्भवं तथा ।
स्वयंदत्तश्च शौद्रश्च* गोत्रभाजः प्रचक्षते ॥

औरसपुत्रिकापुत्रक्षेत्रजकानीनगूढोत्पन्नापविद्धसहोढ़पौनर्भव-दत्तकस्वयमुपागतकृत्रिमक्रीतानभिधाय देवलः ।

एते द्वादश पुत्रास्तु सन्तत्यर्थमुदाहृताः ।
आत्मजाः परजाश्चैव लब्धा यादृच्छिकास्तथा ॥
तेषां षड्बन्धुदायादाः पूर्व्वेऽन्ये पितुरेव षट् ।
विशेषश्चापि पुत्राणामानुपूर्व्याद्विशिष्यते ॥
सर्व्वे चानौरसस्यैते† पुत्रा दायहराः स्मृताः ।
औरसे पुनरुत्पन्ने तेषु ज्यैष्ठं न विद्यते‡ ॥
तेषां सवर्णा ये पुत्रास्ते तृतीयांशभागिनः ।
हीनास्तमुपजीवेयुर्ग्रासाच्छादनसम्भृताः§ ॥

---

* स्वयदत्तं निषादश्चेति पाठान्तरम् ।

† सर्व्वे ह्यनौरसस्यैते इति पाठान्तरम् ।

‡ निवर्त्तते इति पाठान्तरम् ।

§ हविताः इति पाठान्तरम् ।

औरसक्षेत्रजपुत्रिकापुत्रपौनर्भवकानीनगूढोत्पन्नसहोढदत्तक्रीत स्वयमुपागतापविद्धयत्रक्वचनोत्पादितानभिधाय विष्णु ।

एतेषां पूर्व्वः पूर्व्वः श्रेयान्, स एव दायहर, स चान्यान् बिभृयात् ।

नारद ।

औरस क्षेत्रजश्चैव पुत्रिकापुत्र एव च ।
कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥
पौनर्भवोऽपविद्धश्च दत्त' क्रीत कृतस्तथा ।
स्वयञ्चोपागत पुत्रा द्वादशैते प्रकीर्त्तिता ॥
तेषां षड्बन्धुदायादा षड्दायादबान्धवा ।
पूर्व्वः पूर्व्वः स्मृतो श्रेष्ठो जघन्यो यो य उत्तर ॥
क्रमादेते प्रवर्त्तन्ते मृते पितरि तद्धने ।
ज्यायसो ज्यायसोऽभावे जघन्यो यो य आप्नुयात् ।

औरसपुत्रिकापुत्रक्षेत्रजकानीनपौनर्भवदत्तकक्रीतकृत्रिमस्वय न्दत्तसहोढापविद्धानभिधाय याज्ञवल्क्य ।

पिण्डदोंऽशहरश्चैषां पूर्व्वाभावे पर पर ।

अत्र चैकस्यैव केनचिद्बन्धुदायादत्वमुक्त केनचिदबन्धुदायादत्व यदुक्त तत्सगुणनिर्गुणत्वे अपेक्ष्याविरोधनीयम् । यापि यथा पूर्व्वश्रेष्ठत्वज्ञापनार्थं द्वादशानामुपक्रमणे पौर्व्वापर्य्यवैकल्पिकोक्ति* सा पूर्व्वोक्तस्य सगुणत्वे यथादुक्तस्य निर्गुणत्वे ज्ञेया ।

---

* पौर्व्वापर्य्यधर्म्मोक्तिरिति पौर्व्वापर्य्यवैषम्योक्तिरिति च पाठान्तरम् ।

एवमन्यत्राप्यनयैव दिशाऽविरोध ऊहनीयः* ।

मनुः ।

न भ्रातरो न पितरः पुत्रा ऋक्थहराः स्मृताः ।

तथा ।

श्रेयसः श्रेयसोऽभावे पापीयान्रिक्थमर्हति ॥

बहवश्चेत्तु सदृशाः सर्व्वे ऋक्थस्य भागिनः ।

सदृशा गुणवत्तया तदुपाधिना वा ।

शङ्खलिखितौ ।

श्रेयसः श्रेयसोऽभावे पापीयान्रिक्थमर्हति ।

श्रेयसः श्रेयसः औरसादेरभावे पापीयान्न्यूनः क्षेत्रजादिरिति तात्पर्य्यार्थः ।

बृहस्पतिः ।

दत्तोऽपविद्धः क्रीतश्च कृतः शौद्रस्तथैव च ।

जातिशुद्धाः कर्म्मशुद्धा मध्यमास्ते सुता मताः ॥

क्षेत्रजो गर्हितः सद्भिस्तथा पौनर्भवः सुतः ।

कानीनश्च सहोढश्च गूढोत्पन्नस्तथैव च ॥

हारीतः ।

शूद्रापुत्राः स्वयंदत्ता ये चैते क्रीतकास्तथा ।

सर्व्वे ते शौद्रिकाः पुत्राः काण्डपृष्ठा न संशयः ॥

स्वकुलं पृष्ठतः कृत्वा यो वै परकुलं व्रजेत् ।

तेन दुश्चरितेनासौ काण्डपृष्ठो न संशयः ॥

---

* चहैव इति पाठान्तरम् ।

आपन्नतो*ऽभ्युपगतो यश्च स्याद्वैष्णवीसुतः।
सर्व्वे ते मनुना प्रोक्ताः काण्डपृष्ठास्त्रयः सुताः॥

वैष्णवी अत्र शूद्रा।

इति विवादरत्नाकरे पुत्रान्तरविभागतरङ्गः।



## अथौरसपुत्रलक्षणम्।

तत्र वशिष्ठः।

द्वादश* त्वेव† पुत्राः पुराणदृष्टाः, स्वयमुत्पादितः स्वे क्षेत्रे संस्कृते औरसः प्रथमः।

विष्णुः।

अथ द्वादश पुत्रा भवन्ति, स्वे क्षेत्रे‡ स्वयमुत्पादितः प्रथमः।

मनुः।

संस्कृतायान्तु भार्य्यायां स्वयमुत्पादयेत्तु यम्।
तमौरसं विजानीयात्पुत्रं प्रथमकल्पितम्॥

---

* आपन्नात इति पाठान्तरम्।

---

* सवर्णा मन्त्रपूता द्वादशेति पाठान्तरम्।

† द्वादशएवेति पाठान्तरम्।

‡ स्वक्षेत्रे इति पाठान्तरम्।

देवलः ।

संस्कृतायान्तु भार्य्यायां स्वयमुत्पादितो हि यः ।
औरसो नाम पुत्रः स प्रधानं पितृवंशधृक् ॥

याज्ञवल्क्यः ।

औरसो धर्म्मपत्नीजः ।

आपस्तम्बः ।

सवर्णामपूर्व्वां शास्त्रविहितां यथर्त्तुं* गच्छतः पुत्रास्तेषां कर्म्मभिः सम्बन्धः दायेनाव्यतिक्रमश्च ।

अपूर्व्वां न पूर्व्वः पतिर्यस्याः, वाग्दत्तापि या न भवतीत्यर्थः इति प्रकाशकारः। शास्त्रविहितां शास्त्रेण पाणिग्रहणकर्म्मणा विहितां संस्कृतां, कर्म्मभिरग्निहोत्रादिभिः, दायेनाव्यतिक्रमः सम्पूर्णदायेनाव्यतिक्रमस्तेषामेव कर्त्तव्य इत्यर्थः ।

बौधायनः ।

सवर्णायां संस्कृतायां स्वयमुत्पादितमौरसं विद्यादिति । अथाप्युदाहरन्ति, अङ्गादङ्गात्सम्भवति हृदयादभिजायसे । आत्मा वै पुत्रनामासि सञ्जीव शरदः शतमिति ।

सवर्णा द्विजस्य द्विजा, शूद्रस्य शूद्रा, नतु ब्राह्मणस्य ब्राह्मणी क्षत्रियस्य क्षत्रिया, अन्यथा ब्राह्मणपरिणीतक्षत्रियापुत्रादेर्द्वादशपुत्रान्तर्भावो न स्यादिति पारिजातः ।

शङ्खलिखितौ ।

ब्राह्मणस्तु सवर्णायाः पाणिं गृह्णीयात्, तस्यां पिता-

---

* यथार्त्तमिति पाठान्तरम् ।

मन्त्राणां तनवोऽनुसृयन्ते, पुत्रोपचारेणात्मानं सम्मन्त्रयेत् एवं ह्याह अङ्गादङ्गादित्यादि। आधत्त पितरो गर्भं कुमारं पुष्करस्रजम्। यथेह पुरुषस्यात्मा तथा* त्वमभिजायसे॥ आत्मा पुत्र इति प्रोक्तः पितुर्मातुरनुग्रहात्। पुन्नाम्नस्त्रायते यस्मात्पुत्रस्तेनासि संज्ञितः॥

इति विवादरत्नाकरे औरसपुत्रलक्षणतरङ्गः।



## अथ क्षेत्रजः।

तत्रौरसानन्तरं वशिष्ठः।

तदभावे नियुक्तायां क्षेत्रजो द्वितीयः।

नियुक्तायां पत्या वा गुरुभिर्वा, द्वितीयः औरसादीपन्यून,।

विष्णुः।

नियुक्तायां सपिण्डेनोत्तमवर्णेन वोत्पादितः* क्षेत्रजो द्वितीयः।

मनुः।

यस्तल्पजः प्रमीतस्य क्लीबस्य व्याधितस्य वा।

* तस्मादिति पाठान्तरम्।

* सवर्णेनोत्पादित इति पाठान्तरम्।

स्वधर्म्मेण नियुक्तायां स ज्ञेयः क्षेत्रजः सुतः ॥

तल्पो भार्य्या। व्याधितस्य वेत्यत्र व्याधिरप्रतिकार्य्यो विवक्षितः। स्वधर्म्मेण घृताभ्यक्तत्वादिना।

याज्ञवल्क्यः।

क्षेत्रजः क्षेत्रजातस्तु सगोत्रेणेतरेण वा।

सगोत्रेण स्वकुलोद्भवेन इतरेण उत्कृष्टवर्णेन।

बौधायनः।

मृतस्य च प्रसूतो यः क्लीबस्य व्याधितस्य वा। अन्येनानुमते स्वक्षेत्रे स क्षेत्रजः स एव द्विपिता द्विगोत्रश्च द्वयोरपि स्वधारिक्थभाग्भवति।

अन्येनापुत्रेण* देवरादिना प्रसूतो य इत्यन्वयः। द्विपितेति कपोऽभावः समासान्तविधेरनित्यत्वात्† स द्विगोत्रो द्वयोरपि गोत्रभाक्। स्वधा पितृकर्म्म।

याज्ञवल्क्यः।

अपुत्रेण परक्षेत्रे नियोगोत्पादितः सुतः।

उभयोरप्यसावृक्थी पिण्डदाता प्रकीर्त्तितः॥

यदा तु स्वयं पुत्रवान्देवरादिः क्षेत्रिपुत्रार्थं प्रवृत्तः तदा क्षेत्रिण एव पुत्रो न बीजिनः। यत्र तु सपुत्रोऽपि आवयोरपत्यमिदं समानं भविष्यतीति संविद्रूपं क्रियाभ्युपगममाश्रित्योत्पादयति तत्र द्वयोरप्यसौ पुत्रो भवतीति।

---

* अन्येनानुमतेनेति पाठान्तरम्।

† द्विपितेति मतान्तरं, समते विधेरनित्यत्वादिति पाठान्तरम्।

आह मनुः ।

क्रियाभ्युपगमार्थेन* बीजार्थं यत्प्रदीयते ।
तस्येह भागिनौ दृष्टौ बीजी क्षेत्रिक एव च ॥

नारदकात्यायनौ ।

क्षेत्रिकानुमते बीजं यस्य क्षेत्रे प्रजायते ।†
तदपत्यं तयोरेव बीजिक्षेत्रिकयोर्मतम् ॥

शङ्खलिखितौ ।

मन्त्रसंस्कारकर्त्तुरपत्यमित्यङ्गिरसो बीजिक्षेत्रिकयोरनुमते यद्बीजं प्रकीर्य्यते तद्द्विधा शस्यमित्युशना ।

मन्त्रसंस्कारकर्त्तुः पाणिग्राहकस्य । तद्द्विधा द्वयोरपि, शस्यं क्षेत्रफलम् ।

हारीतः ।

जीवति क्षेत्रजमाहुरस्वातन्त्र्यात्‡ मृते द्व्यामुष्यायणमनुप्तबीजत्वात्§ नाबीजं क्षेत्रं फलति नाक्षेत्रं बीजं प्ररोहति इत्युभयदर्शनादुभयोरपत्यमित्येके । तेषामुत्पादयितुः प्रथमपिण्डो भवति, द्वौ पिण्डौ निर्वपेन्निर्व्वापेऽथवैकपिण्डे द्वावनुकीर्त्तयेत् । द्वितीये पुत्रं तृतीये पौत्रं लेपिनय नीत्वाचचाण आसप्तमादित्येके ।

---

* क्रियाभ्युपगमादेवेति पाठान्तरम् ।

† प्रकीर्य्यते इति पाठान्तरम् ।

‡ क्षेत्रजौ मातुरस्वातन्त्र्यादिति पाठान्तरम् ।

§ अनुप्तबीजत्वादिति पाठान्तरम् ।

जीवति चेत्रजमन्यजमपि भर्त्तुरेव, कुतः अख्यातत्वात्स्त्रिया इति शेषः। मृते च भर्त्तरि* अपुत्रा शयनं भर्त्तुरित्यादिदर्शनादाद्यप्यख्यातत्वं स्त्रिया अविशिष्टं, तथापि द्व्यामुष्यायणं द्वयोरपत्यमित्याहुः, कुतः अनूढबीजत्वात्† क्षेत्रस्येति शेषः। जीवति हि बीजवतास्त्रीति न परस्परफलयोगोऽपत्यस्य कारणमित्याह‡ नाबीजमिति उभयोर्बीजिक्षेत्रिणोः। निरूप्यते अस्मिन्निति निर्वापः पितृयज्ञः। एकपिण्डे द्वाविति एकैकस्मिन् पिण्डे द्वाविति वीप्सा मन्तव्या। यदि द्विपिता स्यादेकस्मिन् पिण्डे द्वौ द्वावुपलक्षयेदित्यापस्तम्बानुसारात्। द्वितीये पुत्रमित्यादि, द्वितीये§ पुत्रमारभ्येत्यर्थः। लेपिनश्च चीनाचचारो द्वौ द्वावनुकीर्त्तयेत्¶।

नारदः।

द्व्यामुष्यायणका दद्युर्द्वाभ्यां पिण्डोदके पृथक्।
ऋक्थादर्द्धं समादद्यु‖र्बीजिक्षेत्रिकयोस्तथा॥

---

* पितरीति पाठान्तरम्।

† अनूढबीजत्वात् क्षेत्रिणा स्वस्यैव मदीयत्वार्थे अनु पश्चादीभवने अनुमतत्वादिति भावः।

‡ जीवत्यपि भर्त्तरि तस्मात् पुत्राभिसन्धाने द्व्यामुष्यायणत्वमिति भावः।

§ द्वितीये पितामहपिण्डे पुत्र पितामहस्येति भावः, तेन पितरमित्यर्थः। एवं तृतीये प्रपितामहपिण्डे पौत्र तस्येति भावः, तेन पितरमारभ्येत्यर्थ इति निष्कर्षः।

¶ द्वावनुकीर्त्तयेदित्यर्थ इति पाठान्तरम्।

‖ ऋक्थादर्द्धं समाददुरिति पाठान्तरम्।

अत्र वीजिन औरसोऽस्ति वैजिणोऽपि कथञ्चित्पश्चादौरसो जातस्तद्विषयमिदम्। अपुत्रयोस्तु द्वयोरपि क्षेत्रमर्थं गृह्णीयात्।
बौधायनः।

अथाप्युदाहरन्ति। द्विपितुः पिण्डदानं स्यात्पिण्डे पिण्डे च नामनी। त्रयश्च पिण्डाः षणां स्युरेवं कुर्वन्न मुह्यति॥

न मुह्यति न दुष्यतीत्यर्थः।

इति विवादरत्नाकरे पैत्रकतरङ्गः।



## अथ पुत्रिका-तत्पुत्रौ।

तत्र वशिष्ठः।

तृतीयः पुत्रिका विज्ञायते, अभ्रातृका हि पुंसः पितृनभ्येति प्रतीचीनं गच्छति पुत्रत्वम्।

तृतीयः पुत्रः पुत्रिका औरसपुत्रतुल्या तत्कार्य्यकारित्वात्प्रतीचीन गच्छति प्रत्यावृत्तं पुत्रत्व पितृवंशाभिमुखं* गच्छतीत्यर्थः।

शङ्खलिखितौ।

पुत्रिका पुत्रवदिति प्रचेतसः। तस्यापत्यं पुत्रिकासुतो

* पितृकुलाभिमुखमिति पाठान्तरम्।

मातामहपितामहाभ्यां पिण्डदः। पुत्रदौहित्रयो-
र्लोके न विशेषोऽस्त्यनुग्रहे। तस्मात्तु संशयाद्विशेषेणाद-
भ्रातृकां स्त्रियम्॥

अनुग्रहे पुत्रामनरकोद्धारे। संशयादियं पुत्रत्वेन परिगृहीता न वेत्याकारात्।

औरसानुवृत्तौ याज्ञवल्क्यः।

तत्समः पुत्रिकासुतः।

देवलः।

तत्तुल्यः पुत्रिकापुत्रो दायादः सोऽथवा भवेत्।
पितुर्मातामहस्यापि निरपत्यस्य पुत्रवत्॥

विद्यादित्यनुवृत्तौ बौधायनः।

अभ्युपगम्य दुहितरि जातं पुत्रिकापुत्रमन्यं दौहित्रम्।

अभ्युपगम्य संविदमस्यां यो जायते पुत्रः स मे पुत्र इत्याकारां* कृत्वा, दौहित्रं दुहितुरपत्यं पुत्रिकापुत्रसंज्ञकं पुत्रं विद्यात्। अन्यमिति औरसापेक्षया। अस्यामिति कल्पतरौ पाठः, स तु सुगम एव।

मनुः।

दौहित्रो ह्यखिलं रिक्थमपुत्रस्य पितुर्हरेत्।
दौहित्र एव स हरेदपुत्रस्याखिलं धनम्॥

अपुत्रस्य औरसपुत्रशून्यस्य, उत्तरार्द्धोऽनुवाद इति प्रकाशः। हेतुवन्निगदोऽयमिति मनुटीकायामुदयकरः।

* पुत्रोऽस्त्वित्याकारामिति पाठान्तरम्।

औरसानुवृत्तौ देवलः ।

तत्तुल्यः पुत्रिकापुत्रो दायादः सोऽथवा भवेत् ।
स एव दद्यात्पिण्डन्तु पित्रे मातामहाय च ॥
पौत्रदौहित्रयोर्लोके न विशेषोऽस्ति धर्मतः ।
तयोर्हि मातापितरौ सम्भूतौ तस्य देहतः ॥
अकृता वा कृता वापि यं विन्देत्सदृशात्सुतम् ।
पुत्री मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

अपुत्रस्यौरसपुत्रशून्यस्य । दौहित्रोऽत्र कृताकृतपुत्रिकासुतः* ।

कृतदुहित्रधिकारे बृहस्पतिः ।

यथा पितृधने स्वाम्यं तस्याः सत्स्वपि बन्धुषु ।
तथैव तत्सुतोऽपीष्टे मातृमातामहे धने ॥

शङ्खलिखितौ ।

स्त्रीधनं† कन्या लभते, तदपत्यस्य च द्रव्यं कन्याभाग एव ।

तच्छब्देन कन्यामातुः परामर्शः । तत्पुत्रस्योत्तरकालजन्मनोऽपुत्रस्यातीतस्य धनं कन्याभाग एव पुत्रिकाभाग एव, तस्याः सोदरतुल्यत्वादिति भावः ।

मनुः ।

अपुत्रोऽनेन विधिना सुतां कुर्व्वीत पुत्रिकाम् ।
यदपत्यं भवेदस्यां तन्मम स्यात्स्वधाकरम् ॥

---

* पुत्र इति पाठान्तरम् ।

† स्त्रीधनमिति पाठान्तरम् ।

स्वधाकरं श्राद्धादिकरम् ।

वशिष्ठः ।

अभ्रातृकां प्रदास्यामि तुभ्यं कन्यामलङ्कृताम् ।
अस्यां यो जायते पुत्रः स मे पुत्रो भवेदिति* ॥

गौतमः ।

पितोत्सृजेत्पुत्रिकामनपत्योऽग्निं प्रजापतिञ्चेष्ट्वास्मदर्थ-
मपत्यमिति संवाद्याभिसन्धिमात्रात्पुत्रिकेत्येकेषाम् ।

अग्निं प्रजापतिञ्चेष्ट्वेति, आग्नेयीं प्राजापत्याञ्चेष्टिं कृत्वा एकाग्निमपि स्मार्त्ते यागमावसथ्ये, तदभावे पूजामात्रमपीति हरिहरः । संवाद्य परिभाष्य, अभिसन्धिमात्रात्—एतच्च पूर्व्वविध्यनुवादता ।

बृहस्पतिः ।

अग्निं प्रजापतिञ्चेष्ट्वा क्रियते गौतमोऽवदत् ।
अन्ये त्वाहुरपुत्रस्य चिन्तिता पुत्रिका भवेत् ॥

चिन्तितेयमेव पुत्रिकेत्यनुध्याता ।

विष्णुः ।

यस्त्वस्याः पुत्रः स मे पुत्रो भवेदिति ।

या पित्रा दत्ता पुत्रिकाविधिना प्रतिपादिता पितृभ्रातृहीना, पुत्रिकैव ।

ब्रह्मपुराणे ।

---

* भवत्यसीति पाठान्तरम् ।

अपुत्रेण तु या कन्या मनसा पुत्रवत्कृता।
राजाग्निमान्यवैश्यय समर्थं वाच कुत्रचित्॥
प्राग्गर्भमथवा शुल्कमुक्ता दत्ता वराय या।
मृते पितरि वा दत्ता सा विज्ञेया तु पुत्रिका।
पितुरर्द्धांशसमं भागं लभते तादृशी सुता॥

मनुः।

मातुः प्रथमतः पिण्डं निर्व्वपेत्पुत्रिकासुतः।
द्वितीयन्तु पितुस्तस्यास्तृतीयन्तु पितुः पितुः॥

अस्याः* इत्यनुषङ्गः।

इति विवादरत्नाकरे पुत्रिकासुतनुतरङ्गः।



## अथ पौनर्भवः।

तत्र विष्णुः।

चतुर्थः पौनर्भवः।

मनुः।

या तु पत्या परित्यक्ता विधवा वा स्वयेच्छया।
उत्पादयेत्पुनर्भूत्वा स पौनर्भव उच्यते॥

---

* पितुस्तस्या इति पाठान्तरम्।

उत्पादयेत्तस्यामिति शेषः। पुनर्भूत्वा पुरुषान्तरेणात्मानं विवाह्येत्यर्थः।

याज्ञवल्क्यः।

अक्षतायां क्षतायां वा जातः पौनर्भवः सुतः।

कात्यायनः।

क्लीबं विहाय पतितं या पुनर्लभते पतिम्।
तस्यां पौनर्भवो जातो व्यक्तमुत्पादकस्य सः॥

इति विवादरत्नाकरे पौनर्भवतरङ्गः।

---

## अथ कानीनः।

तत्र वशिष्ठः।

कानीनः पञ्चमः। यं पितृगृहे स्वयमसंस्कृता कामादुत्पादयेत्स कानीनो मातामहसुतो* भवतीत्याहुः†।

---

• लिखितपाठान्तरम्।

* मातामहपुत्र इति पाठान्तरम्।

† भवतीत्य इति पाठान्तरम्।

अत्राप्युदाहरन्ति, अप्रदत्ता सुता* यस्य पुत्रं विन्देत
तुल्यतः । पुत्री† मातामहस्तेन दद्यात्पिण्डं हरेद्धनम् ॥

कामात्स्वच्छन्दात्, अप्रदत्ता‡ असंस्कृता, तुल्यतः समानजातीयात् ।

बौधायनः ।

असंस्कृतामनतिसृष्टो यामुपगच्छेत्, तस्यां यो जातः
स कानीनः ।

असंस्कृता परिणयसंस्कारशून्या, अनतिसृष्टा अदत्ता ।

ब्रह्मपुराणे ।

अदत्तायान्तु यो जातः सवर्णेन पितुर्गृहे ।
स कानीनः सुतस्तस्य यस्मै सा दीयते पुनः ॥

नारदः ।

कानीनश्च सहोढश्च गूढायां यश्च जायते ।
तेषां वोढा पिता ज्ञेयस्ते च भागहराः स्मृताः ॥

सहोढो गर्भजातः । अत्रापुत्रो यदि मातामहस्तदा तस्य पुत्रः कानीनः सहोढश्च । सपुत्रश्चेत्तदा वोढुः, उभयोरपुत्रत्वे चोभयोरिति पारिजातः ।

इति विवादरत्नाकरे कानीनतरङ्गः ।

---

* कन्या दुहितेति पाठान्तरम् ।

† पौत्रेति पाठान्तरम् ।

‡ अदत्तेति पाठान्तरम् ।

## अथ गूढोत्पन्नः ।

तत्र विष्णुः ।

गूढोत्पन्नः षष्ठः, यस्य तल्पजस्तस्यासौ ।

मनुः ।

उत्पद्यते गृहे यस्य न च ज्ञायेत कस्य सः ।

स गृहे गूढउत्पन्नस्तस्य स्याद्यस्य तल्पजः ॥

तल्पजो भार्य्याजातः । बीजिनोऽपरिचयात्मात्वजातीयएव चासौ, हीनजातीयसङ्गमशङ्काभावे चैवं, तच्छङ्कायां कार्य्यानुपयुक्तः प्रतिलोमज एव जायत इति ।

इति विवादरत्नाकरे गूढोत्पन्नप्रकरणं ।



## अथ सहोढः ।

तत्र विष्णुः ।

सहोढः सप्तमः ।

गर्भिणी या संस्क्रियते तस्याः पुत्रः स तु पाणिग्राहस्य, तत्र* प्रकाशकृता गर्भिण्याः कन्यात्वं पुरस्कृत्य पाणिग्रहणिका मन्त्राः

* अत्रेति पाठान्तरम् ।

त्यास्येव प्रतिष्ठिता इति संस्कार आक्षिप्तः। आथर्व्वणीयकेन विधिना पुन.संस्कारविधिः श्रुतावस्तीत्यन्ये इति सिद्धान्तदृशा लिखितम्। वस्तुतस्तु पाणिग्रहणिकमन्त्रजसंस्कारातिरिक्तहोमादिकर्म्मसंस्काराभिप्रायं संस्क्रियतेपदमिति।

मनुः।

या गर्भिणी संस्क्रियते ज्ञाताज्ञातापि वा सती।
वोढुः स गर्भो भवति सहोढ़ इति चोच्यते॥

इति विवादरत्नाकरे सहोढतरङ्गः।

---

## अथ दत्तकः।

तत्र विष्णुः।

दत्तश्चाष्टमः, स च मात्रा पित्रा वा यस्य दत्तः।

तस्य स्यादिति शेषः।

मनुः।

माता पिता वा दद्यातां यमद्भिः पुत्रमापदि।
सदृशं प्रीतिसंयुक्तौ* स ज्ञेयो दत्त्रिमः सुतः॥
उपपन्नो गुणैः सर्व्वैः पुत्रो यस्य तु दत्त्रिमः।

---

* प्रीतिसंयुक्तमिति पाठान्तरम्।

स हरेत्तैव* तद्रिक्थं संप्राप्तोऽप्यन्यगोत्रतः† ॥
गोत्ररिक्थे जनयितुर्न हरेद्दत्त्रिमः सुतः ।
गोत्ररिक्थानुगः पिण्डो व्यपैति ददतः स्वधा ॥

आपदि प्रतिग्रहीतुः पुत्राभावे, सदृश सवर्णम् । मेधातिथिस्तु न जातितः, किन्तु कुलानुरूपैर्गुणैरित्याह । प्रीतिसंयुक्तौ भयाद्युपाधिरहितौ । गुणैर्जातिविद्याचारैः । पुत्रत्वादेव रिक्थहरत्वे प्राप्ते उपपन्नो गुणैरिति वचनं यथाज्जाते चौरसे‡ सगुणस्य दत्त्रिमस्यांशप्राप्त्यर्थं, निर्गुणस्य भरणमात्रप्राप्त्यर्थञ्च। गोत्रमार्षेयं§ काश्यपादि प्रसिद्धम् । उत्सर्गतो गोत्ररिक्थानुयायित्वात् पिण्डदानमपि निवर्त्तते । स्वधाशब्दः श्राद्धादिपरः ।

वशिष्ठः ।

शुक्रशोणितसम्भवः पुत्रो¶ मातापितृनिमित्तकस्तस्य दानविक्रयत्यागेषु मातापितरौ प्रभवतः । नत्वेकं पुत्रं दद्यात्प्रतिगृह्णीयाद्वा, स हि सन्तानाय पूर्व्वेषाम्, न तु स्त्री दद्यात्प्रतिगृह्णीयाद्वान्यत्रानुज्ञानाद्भर्त्तुः । पुत्रं प्रतिग्रहीष्यन्बन्धूनाहूय राजनि चावेद्य‖ निवेशनस्य

---

* हरेतैवेति पाठान्तरम् ।

† सम्प्राप्तोऽन्यस्य गोत्रज इति, सम्प्राप्तोऽप्यन्यगोत्रज इति च पाठान्तरम् ।

‡ यथाज्जातेऽप्यौरसे इति पाठान्तरम् ।

§ गोत्रमार्षमिति पाठान्तरम् ।

¶ पुरुष इति पाठान्तरम् ।

‖ निवेद्येति पाठान्तरम् ।

मध्ये व्याहृतिभिर्हुत्वाऽदूरबान्धवमसन्निकृष्टमेव* प्रतिगृह्णीयात्, सन्देहे चोत्पन्ने दूरबान्धवं शूद्रमिव स्थापयेत्। विप्रायते ह्येकेन बहूंस्त्रायते† इति।

दानवद्विक्रयपरित्यागावपि न कार्यौ। विक्रय आपदि भरणासामर्थ्ये त्यागः। सन्तानोच्छेदे हि पिण्डोदकक्रियानिवृत्तिर्महान्दोष इति प्रकाशः। पितुर्मातुश्च द्वयोरपि प्रत्येकमपि दानेऽधिकारः। इयांस्तु विशेषः, यत्सति पितरि, तदनुज्ञानान्मातुर्दातृत्वमसति तदभावेऽपि। बन्धूनाहूय दत्तकस्वांशमाप्त्यर्थं स्वदायादान्सन्निधाप्य। अदूरबान्धवं सन्निहितात्मीयमातुलादिकम्, एतन्नामजात्यादिज्ञापनार्थं तस्य बान्धवस्याभावे तदसन्निकृष्टमपि प्रमाणान्तरेण दृढेन नामगोत्रज्ञापनात्प्रतिगृह्णीयात्। असन्निकृष्टमेवेत्येवकारोऽप्यर्थः। सन्देहे चोत्पन्ने इति अथ कथञ्चिद्दूरस्थबान्धवं गृहीतवतो ब्राह्मणादेः संशयः स्यात्, तदा शौद्रपुत्रमिव भरणमात्रोपयुक्तं कृत्वा स्थापयेत्। एकेन बहूंस्त्रायते, यतः कथञ्चिदेकेन पुत्रेण बहून् पूर्वजांस्त्रायते। तस्मादसन्दिग्धजात्यादिकमेव परिगृह्णीयादित्यर्थः।

इति विवादरत्नाकरे दत्तकतरङ्गः।

---

* अदूरबान्धव बन्धसन्निकृष्टमेवेति पाठान्तरम्।

† कुलं त्रायत इति पाठान्तरम्।

## अथ क्रीतः।

तत्र विष्णुः।

क्रीतश्च नवमः।

बौधायनः।

मातापित्रोर्हस्तादन्यतरस्य वा योऽपत्यार्थं गृह्यते स क्रीतः।

मनुः।

क्रीणीयाद्यस्त्वपत्यार्थं मातापित्रोर्यमन्तिकात्।
स तु क्रीतः सुतस्तस्य सदृशोऽसदृशोऽपि वा॥

सदृशः सवर्णः, तदभावे असदृशः असवर्णः इति पारिजातः। प्रकाशकारस्तु सत्यामप्यसदृशस्मृतौ न हीनजातीयेनोत्तमजातीयः पुत्रत्वेन ग्राह्यः, उत्तमेन न हीनोऽपि पुत्रत्वेन ग्राह्यः। सदृशासदृशोक्तिस्तु गुणापेक्षया सजातीयेष्वेवेति मेधातिथिरित्याह।

इति विवादरत्नाकरे क्रीततरङ्गः।

---

## अथ स्वयमुपागतः।

तत्र विष्णुः।

स्वयञ्चोपागतो दशमः।

स च यस्योपगतस्तस्येति शेषः।

मनुः।

मातापितृविहीनो यस्त्यक्तो वा स्यादकारणात्।
आत्मानं सर्पयेद्यस्तु स्वयं दत्तस्तु स स्मृतः॥

अकारणादनपराधात्* आत्मानं सर्पयेद्दद्यात्ते पुत्र इति आत्मानं दद्यात्।

इति विवादरत्नाकरे स्वयमुपागततनयः।

---

## अथापविद्धः।

तत्र विष्णुः।

अपविद्धस्त्वेकादशः। स मात्रा पित्रा वा परित्यक्तो येन गृहीतः।

तस्य पुत्र इति शेषः।

मनुः।

मातापितृभ्यामुत्सृष्टं तयोरन्यतरेण वा।
यं पुत्रं परिगृह्णीयादपविद्धस्तु स स्मृतः॥

उत्सृष्टं त्यक्तम्। त्यागश्चात्यन्तदुर्गत्या भरणासामर्थ्येन, केनचिद्वा

---

* अकारणादन्यापराधादिति पाठान्तरम्।

द्दोपयोगेन। परिग्रहश्च पुत्रधिया न तु जीवितवासनया।

वशिष्ठः।

> अपविद्धः पञ्चमोऽयं, मातापितृभ्यान्तु त्यक्तं गृह्णीयात्पुत्रत्वेनेति।

पञ्चमत्वेनोक्तिरुत्तरपुत्रषट्के पञ्चमत्वमादायेति।

इति विवादरत्नाकरे अपविद्धतरङ्गः।



## अथ कृत्रिमः।

तत्र मनुः।

> सदृशं यं प्रकुर्व्वीत गुणदोषविचक्षणम्।
> पुत्रं पुत्रगुणैर्युक्तं स विज्ञेयस्तु कृत्रिमः॥

तत्रापि सदृशः सदृशगुण इति मेधातिथिः। गुणदोषविचक्षणं मातापित्रोरौर्द्ध्वदैहिककरणे गुणोऽकरणे दोषस्तद्विचक्षणम्*। पुत्रगुणैः शुश्रूषादिभिर्युक्तम्।

बौधायनः।

> सदृशं सकामं यं कुर्य्यात्स कृत्रिमः।

* दक्ष इति गुणदोषौ, तद्विचक्षणमिति पाठान्तरम्।

सकामं सह कामेन वर्त्तेत इति, अस्याहं पुत्रो भविष्यामि यदि मामयं पुत्रत्वेन ग्रहीष्यतीति मन्यमानं सदृशं सवर्णम्।

तत्र* याज्ञवल्क्यः।

कृत्रिमः स्यात्स्वयं कृतः।

तथा।

सजातीयेष्वयं प्रोक्तस्तनयेषु मया विधिः।

सति सवर्णे इति शेषः। कानीनगूढोत्पन्नसहोढपौनर्भवाणां सवर्णत्वं जनकद्वारेण न स्वरूपतः† तेषां‡ सवर्णजत्वजातिलक्षणाभावादिति प्रकाशः।

इति विवादरत्नाकरे कृत्रिमपुत्रतरङ्गः।

---

## अथ शूद्रापुत्रः।

तत्र विष्णुः।

यत्रक्वचनोत्पादितस्तु द्वादशः।

यत्रक्वचन ऊढायामनूढायां वा शूद्रायाम्*।

---

* अत्रेति पाठान्तरम्।

† सवर्णत्वञ्जनकत्वपरिगणनस्वरूपत इति पाठान्तरम्।

‡ एतेषामिति पाठान्तरम्।

---

* शूद्राविषयमिति पाठान्तरम्।

वशिष्ठः ।

शूद्रापुत्र एव षष्ठो भवतीत्याहुः ।

षष्ठत्वमत्राप्युत्तरषट्कापेक्षया, औरसापेक्षया द्वादशत्वमेव। आहुरिति विप्रतिपत्तिसूचकम्*। सा च धनग्रहणविषया, मनुर्हि शौद्रमादायेदमाह। अतो गुणवदगुणवत्त्वापेक्षया विकल्पः।

मनुः ।

यं ब्राह्मणस्तु शूद्रायां कामादुत्पादयेत्सुतम् ।
स पारयन्नेव शवस्तेन पारशवः स्मृतः ॥

पारयन् पितृत्वाभिमतस्य किञ्चिदुपकुर्व्वन् शवः न्यूनोपकारकत्वात्†।

बौधायनः ।

द्विजातिप्रवराच्छूद्रायां जातः कामात्पारशव इति ।

अथ मनुः ।

क्षेत्रजादीन्सुतानेतानेकादश यथोदितान् ।
पुत्रप्रतिनिधीनाहुः क्रियालोपान्मनीषिणः ॥
यत्र तेऽभिहिताः पुत्राः प्रसङ्गादन्यबीजजाः ।
यस्यैते बीजतो जातास्तस्य ते, नेतरस्य तु ॥

पुत्रप्रतिनिधीनौरसपुत्रिकापुत्रप्रतिनिधीनेतदभावे तत्कार्य्यकारिण आहु. अग्निमद्गृहस्मृतिवाक्यानुसारात्। यत्र हेतुः

* सूचनमिति पाठान्तरम् ।

† न्यूनोपकारित्वादिति, मनागुपकारित्वादिति च पाठान्तरम् ।

क्रियालोपात्क्रियाया अपत्यमुत्पादयितव्यमिति विधेर्लोपा-
लोपप्रसङ्गात्। नित्यो ह्ययं विधिः, स यथाकथञ्चिदुप-
पाद्यते इति अग्रिमवाक्ये यस्यैते इत्यादिखण्डेन तेषां मुख्यत्व-
निषेधेन प्रतिनिधित्वमेव द्योत्यते। नेतरस्य मुख्यातिदेशः।

बृहस्पतिः।

पुत्रास्त्रयोदश प्रोक्ता मनुना येऽनुपूर्व्वशः।
सन्तानकारणं तेषामौरसः पुत्रिका तथा॥
आज्यं विना यथा तैलं सद्भिः प्रतिनिधीकृतम्।
तथैकादश पुत्रास्तु पुत्रिकौरसयोर्विना॥

ब्रह्मपुराणे।

दत्तकश्च स्वयंदत्तः कृत्रिमः क्रीत एव च।
अपविद्धश्च ये पुत्रा भरणीयाः सदैव हि॥
भिन्नगोत्राः पृथक्पिण्डा भिन्नवंशकराः स्मृताः।
सूतके मृतके वापि त्र्यहाशौचस्य भागिनः॥

एतेनैषां प्रसङ्गात्त्र्यहाशौचभागित्वमुक्तम्।

तथा।

अपि* वस्त्रावदातॄणां क्षेत्रबीजवतान्तथा।
शूद्रो दासः पारशवो स्त्रियाश्चां विद्यते क्वचित्॥
दासान्तु ब्रापदध्माना नित्यं चयवतान्तथा।
अर्थे†सग्रामशीलानां कदाचिद्वा भवन्ति ते॥

---

* तथेति पाठान्तरम्।

† चन्विति पाठान्तरम्।

एतेनैषां* पुत्राणामसम्भवशङ्का निराक्रियते ।

तथा ।

> औरसो यदि वा पुत्रस्त्वथवा पुत्रिकासुतः ।
> विद्यते तत्र तेषान्तु विज्ञेयाः क्षेत्रजादयः ॥
> एकादश पृथग्गोत्रा वंशमात्रकरास्तु ते ।
> श्राद्धादि दासवत्सर्व्वं तेषां कुर्व्वन्ति नित्यशः ॥

पुत्रिका चासौ सुतश्चेति पुत्रिकासुतः । क्षेत्रजादय इत्यनेन औरसपुत्रिकाभ्यामन्ये पुत्रा उच्यन्ते† । औरसो यदि पुत्रो यदि वा पुत्रिका, तदा क्षेत्रजादयो वंशमात्रकरा इत्यन्वयः । दासवद्दासेतिकर्त्तव्यतया ।

तथा ।

> गूढोत्पन्नश्च कानीनः सहोढः क्षेत्रजस्तथा ।
> पौनर्भवश्च वैश्यानां राजदण्डभयादपि ।
> वर्जिता. पञ्च धनिनां ज्ञेयाः सर्व्वे भवन्त्यपि ॥

अनेनाप्यमुख्यसुतानां वैश्यसम्भव उक्तः । तदेवं ब्राह्मणे राजनि वैश्ये चामुख्यपुत्रत्वं सम्भवत उक्तम्‡ ।

अथ शूद्रे प्रभुपरतन्त्रे स्वयं पुत्रोत्पादनं दुर्लभमित्याह ।

> शूद्राणां दासवृत्तीनां परपिण्डोपजीविनाम् ।
> परायत्तशरीराणां न क्वचित्पुत्र इत्यपि ।

---

* चैतेषामिति पाठान्तरम् ।

† अन्ये पुत्र उच्यन्त इति पाठान्तरम् ।

‡ चामुख्यपुत्रत्वसम्भव उक्त इति पाठान्तरम् ।

तत्किं दासात्पुत्र एव नोत्पद्यते तत्राह।

तस्माद्दासाच्च दास्याश्च* जायते दास एव हि।

दास एव प्रभुपरतन्त्वपुत्रो जायते, न तु पुत्रार्थक्रियायां क्वचि-त्स्वतन्त्र इत्यर्थः।

इति विवादरत्नाकरे षट्षष्ठितमस्तरङ्गः।



## अथ पुत्रत्वविचारः।

तत्र वशिष्ठः।

क्षेत्रिणः पुत्रो जनयितुः पुत्र इति विवदन्ते।

आपस्तम्बः।

अप्रमत्ता रक्ष तन्तुमेतं मा च क्षेत्रे परबीजानि वाप्सुः जनयितुः पुत्रो भवति। साम्पराये मोघं वत्ता कुरुते तन्तुमेतमिति।

अप्रमत्ताः प्रमादमनवधानमकुर्व्वन्तः, तन्तुं पुत्रपौत्रादिपरम्पराम्। मा क्षेत्रे परस्य बीजानि वाप्सुः सिक्तानि भवन्तु। जनयितुर्बीजिनः पुत्रो भवति उपकारक इति शेषः। साम्पराये पारलौकिकफले, मोघं निष्फलम्*।

---

* शूद्राद्धि तस्माद्दासाच्चेति पाठान्तरम्।

* निष्फलत्वादिति पाठान्तरम्।

अत्र गाथा वायुगीताः कीर्त्तयन्ति पुराविदः ।
यथा न बीजं वप्तव्यं पुंसा* परपरिग्रहे ॥
नश्यतीषुर्यथा विद्धः खे विद्धमनुविध्यतः ।
तथा नश्यति वै क्षिप्तं बीजं परपरिग्रहे ॥

खे विद्धमृगस्य घातकस्य मृगमनुविध्यत इषुर्नश्यति, पूर्व्वहन्तुरेव मृग उक्तः† ।

एतावानेव पुरुषो यज्जायात्मा प्रजेति च ।
विप्राः प्राहुस्तथा चैतद्योभर्त्ता सा स्मृताङ्गना ॥

जाया आत्मा प्रजेति यथा त्रयं पुरुषोऽभिधीयते तथा भर्त्ता-भार्य्येति च द्वयमङ्गना ।

न च क्रीतापि अन्यस्यापि भार्य्या, तेन विक्रीता त्यक्ता वा अन्यस्य भार्य्या भवतीति‡ शङ्कां निराकर्त्तुमाह ।

न निष्क्रयविसर्गाभ्यां भर्त्तुर्भार्य्या विमुच्यते ।

निष्क्रयोऽत्र विक्रयः, विसर्गस्त्यागः ।

तथा ।

यथा गवोष्ट्रदासीषु§ अजाविमहिषीषु च ।
नोत्पादकः प्रजाभागी तथैवान्याङ्गनास्वपि ॥

---

* साक्षिति पाठान्तरम् ।

† पूर्व्वस्य हन्तुरेव मृगभाक्त्वादिति, पूर्व्वहन्तुरेव मृगभाक्त्वादिति च पाठान्तरम् ।

‡ भविष्यतीति पाठान्तरम् ।

§ गोऽश्वोष्ट्रदासीष्विति पाठान्तरम् ।

ये क्षेत्रिणो वीजवन्तः परक्षेत्र*प्रवापिणः ।
ते वै शस्यस्य जातस्य न लभन्ते फलं क्वचित् ॥
यद्यन्यगोषु वृषभो वत्सानां जनयेच्छतम् ।
गोमिनामेव ते वत्सा मोघं स्कन्दितमार्षभम्† ॥
तथैवाक्षेत्रिणो वीजं परक्षेत्र‡प्रवापिणः ।
कुर्वन्ति क्षेत्रिणामर्थं न वीजी लभते फलम् ॥

एतदेव विशेषेण श्रुतमालोक्य विशेषयति§ ।

फलन्त्वनभिसन्धाय क्षेत्रिणां वीजिनां तथा ।
प्रत्यक्षं क्षेत्रिणामर्थ¶ वीजाद्योनिर्गरीयसी ॥

यत्र क्षेत्रिवीजिनौ न भवतः, तत्र क्षेत्रिण एव, नतु वीजिन इत्यर्थः ।

एतदेव स्फुटयति‖ ।

ओघवाताहृतं वीजं यस्य क्षेत्रे प्ररोहति ।
तत्क्षेत्रं क्षेत्रिकस्यैव न वीजी लभते फलम् ॥

तथैव** प्रकृतेऽपि क्षेत्रप्राधान्यमित्यर्थः । ओघः प्रवहज्जलं, आहृतं नीतम् ।

---

* परक्षेत्रे इति पाठान्तरम् ।

† न च विन्दति सार्षभ इति पाठान्तरम् ।

‡ परक्षेत्रे इति पाठान्तरम् ।

§ यवत इति पाठान्तरम् ।

¶ अर्थ इति पाठान्तरम् ।

‖ स्फुटयतीति पाठान्तरम् ।

** तत्रैवेति अत्रैवेति च पाठान्तरम् ।

उपसंहरति।

एष धर्म्मो गवाश्वस्य दास्युष्ट्राजाविकस्य च।
विहङ्गमहिषीणाञ्च विज्ञेयः प्रसवं प्रति॥

एष धर्म्मो न बीजी फलभागिति।

शङ्खलिखितौ।

क्षेत्रिकस्याविज्ञानेन यद्बीजं प्रकीर्य्यते तत्क्षेत्रिकस्यैव।

गौतमः।

क्षेत्रियः पारदारिको न विभागमर्हतीति*।

नियोगविधौ गौतमः।

नातिद्वितीयं जनयितुरपत्यं समयादन्यच्च† जीवतश्च क्षेत्रे परस्मात्तस्य स्यथात्‡ भर्त्तुरेव द्वयोर्वा।

नातिद्वितीयं नियोगी§ द्वितीयमपत्यमतिक्रम्य तृतीयादिकमपत्यं नियोक्ता नोत्पादयेत्। यद्युत्पादयेज्जनयितुस्तस्य¶ समयादन्यत्र समयाभ्युपेतात्तदपत्यं सर्व्वमेव‖ भवति। सङ्केतादन्यत्र क्षेत्रिणो भवतीत्यर्थः। जीवतश्च क्षेत्रे जीवतः प्रजनासमर्थस्य पत्युः क्षेत्रे भार्य्यायां यदपत्यमुत्पद्यते, तत्तृती-

---

* पारदारिको दायो वा भागमर्हतीति पाठान्तरम्।

† समयादन्यथादिति पाठान्तरम्।

‡ तस्मादयथादिति पाठान्तरम्।

§ नियोगीति पाठान्तरम्।

¶ जनयितुस्तु तस्यार्हादिति पाठान्तरम्।

‖ सर्वेदमिति पाठान्तरम्।

यमपि क्षेत्रिणो विनापि समयेन परस्मात्तस्य, यदि तु परो वीजी क्षेत्रस्य भरणं कुरुते, तदा प्रथममपत्यं वीजिन एव, द्वितीयं तु भर्त्तुः । यदि तु भर्त्तैव भरणं कुरुते तदा क्षेत्रिण एव । द्वयोर्वा यत्र* द्वावप्यपत्यार्थिनौ तत्र द्वयोरपत्यमसौ भवतीत्यर्थः ।

नारदः ।

> न स्यात्क्षेत्रं विना शस्यं न वीजञ्च विनास्ति तत् ।
> अतोऽपत्यं द्वयोर्दृष्टं पितुर्मातुश्च धर्म्मतः ॥

शङ्खलिखितौ ।

> नियतं क्षेत्रिणामपत्यमिति च वेदवादो मातुरपत्यमित्येके ऋषयो† वदन्ति, द्व्यामुष्यायणमनुमन्वयत इति ।

द्व्यामुष्यायणो द्विपितृकमपत्यं अनुमन्वयते द्वावपि पितरौ एकत्र पिण्डे अनुकीर्त्तयति ।

दृष्टान्तमाह ।

> यश्चिल्वकश्यपयोर्जलगतयोरुदवासादुत्तीर्य्य‡ एकः प्रजामुत्पादयत्यविज्ञातो लोकानाम् ।

उदवासाज्जलवासादेकः अन्यतरः अन्यतरस्य क्षेत्रे उत्पादयति ।

---

* यत्र त्विति पाठान्तरम् ।

† मुनय इति पाठान्तरम् ।

‡ उदवासमुत्तीर्य इति पाठान्तरम् ।

ततः किमित्यत आह ।

एवं तयोर्द्विधा सन्तानः ।

विशेषान्तरमाह ।

यस्मात्कुलधर्म्मपरिग्रहरिक्थपिण्डोदकानि चैकतः कृत्वा परत्रैवोत्पन्ना अपि प्रयच्छन्ति ।

यतः कुलधर्म्माणां परिग्रहो ग्रहणमनुष्ठानमृक्थस्य ग्रहणम् । पिण्डोदकानि च एकत एकस्मै चैत्रिकाय* दत्वा परत्रैवोऽपि उत्पन्ना बीजिनोऽपि पिण्डोदकं प्रयच्छन्ति† ।

इति विवादरत्नाकरे पुत्रविभागतरङ्गः ।

## अथ पुत्रातिदेशः* ।

तत्र मनुः ।

भ्रातृणामेकजातानामेकश्चेत्पुत्रवान्भवेत् ।
सर्व्वे ते तेन पुत्रेण पुत्रिणो मनुरब्रवीत् ॥
सर्व्वासामेकपत्नीनामेका चेत्पुत्रिणी भवेत् ।
सर्व्वास्तास्तेन पुत्रेण प्राह पुत्रवतीर्मनुः ॥

---

* चैकिकायेति पाठान्तरम् ।

† उत्पन्नो बीजिनोऽपि पिण्डोदकं प्रयच्छन्तीति पाठान्तरम् ।

---

* पुत्रातिदेश इति पाठान्तरम् ।

बृहस्पतिः।

यद्येकजाता बहवो भ्रातरस्तु सहोदराः।
एकस्यापि सुते जाते सर्व्वे ते पुत्रिणः स्मृताः॥
बह्वीनामेकपत्नीनामेष एव विधिः स्मृतः।
एका चेत्पुत्रिणी तासां सर्व्वासां पिण्डदस्तु सः॥

सर्व्वे तेन पुत्रेण, अत्रासहायेनोक्तं पुंसां सति भ्रातृजे, स्त्रीणां सपत्नीपुत्रे चेत्रजादयः प्रतिनिधयो न कर्त्तव्या इति। पारिजातोऽप्येवमाह। मनुटीकायामुदयकरोऽप्येवम्।

इति विवादरत्नाकरे पुत्रातिदेशतरङ्गः *।

---

# अथ पुत्रनिरुक्तादि।

तत्र मनुविष्णू।

पुन्नाम्नो नरकाद्यस्मात्पितरं त्रायते सुतः।
तस्मात्पुत्र इति प्रोक्तः स्वयमेव स्वयम्भुवा॥

हारीतः।

पुन्नामा निरयः प्रोक्तश्छिन्नतन्तुश्च नैरयः।
तत्र वै त्रायते यस्मात्तस्मात्पुत्र इति स्मृतः॥

---

* पुत्रातिदेशतरङ्ग इति पाठान्तरम्।

बृहस्पतिः ।

पुन्नाम्नो नरकात्पुत्रः पितरं त्रायते यतः ।
मुखसन्दर्शनेनापि तदुत्पत्तौ यतेत सः ॥*
पौत्रोऽथ पुत्रिकापुत्रः स्वर्गप्राप्तिकरावुभौ ।
ऋक्थपिण्डप्रदानेन समौ सम्परिकीर्त्तितौ† ॥

मनुवशिष्ठौ ।

ऋणमस्मिन्सन्नयति अमृतत्वञ्च विन्दति ।
पिता पुत्रस्य जातस्य पश्येच्चेज्जीवतो मुखम् ॥

शङ्खलिखितपैठीनसयः ।

यत्र क्वचन जातेन पिता पुत्रेण नन्दति ।
तेन चानृणतां याति पितॄणां पिण्डदेन वै ।

हारीतः ।

यस्य पुत्रः शुचिर्दक्षः पूर्व्वे वयसि धार्म्मिकः ।
नियन्ता चात्मदोषाणां स तारयति पूर्व्वजान् ॥

शङ्खलिखितौ ।

अग्निहोत्रं त्रयो वेदा यज्ञाश्च शतदक्षिणाः‡ ।
ज्येष्ठपुत्रप्रसूतस्य कलां नार्हन्ति षोड़शीम् ॥
पुत्रपौत्रप्रतिष्ठस्य बहुपुत्रस्य जीवतः ।

---

* पुत्रस्योत्पादनं प्रोक्तं यत्नेन स्वयम्भुवेति पाठान्तरम् ।

† सम्परिकल्पिताविति पाठान्तरम् ।

‡ दक्षेति पाठान्तरम् ।

अलुप्त*वेदयज्ञस्य हस्तप्राप्तं त्रिपिष्टपम् ॥

अलुप्त†वेदयज्ञस्य अलुप्तवेदयज्ञस्य।

शङ्खलिखितविष्णुवशिष्ठहारीताः।

पुत्रेण लोकाञ्जयति पौत्रेणानन्त्यमश्नुते।

अथ पुत्रस्य पौत्रेण ब्रध्नस्याप्नोति पिष्टपम् ॥

ब्रध्नस्य सूर्य्यस्य।

याज्ञवल्क्यः।

लोकानन्त्यं दिवः प्राप्तिः पुत्रपौत्रप्रपौत्रकैः।

तस्मात्पूज्याः स्त्रियः सेव्या भर्त्तव्यास्तु सुरक्षिताः ॥

वशिष्ठः।

अनन्ताः पुत्रिणो लोका नापुत्रस्य लोकोऽस्तीति श्रूयते,

अप्रजाः सन्त्वदनाः‡।

अप्रजा अपुत्राः सन्तु भवन्तु अदनाः अदनशीलाः राक्षसाः। नूनमयं महानपकारो येन राक्षसो नाम गम्यत इति तात्पर्य्यम्। शत्रूणामपुत्रत्वं हि महान्विनाशः, तेनाशास्यते।

अन्यदप्याह।

प्रजाभिरग्नेऽमृतत्वमश्यामित्यपि निगमो भवति।

प्रजाभिः पुत्रैरमृतत्वमश्यां प्राप्नुयामित्यभिप्रायः। पूर्व्वोऽभि-

* अलुप्तेति पाठान्तरम्।

† अलुप्तेति पाठान्तरम्।

‡ सन्त्वद्य इति पाठान्तरम्।

शापः शत्रुविषयः, उत्तरस्त्वाशीःस्वरूपः, आत्मविषय इति प्रकाशकारः ।

तथा ।

पौत्रोऽथ पुत्रिकापुत्रः स्वर्गयःप्राप्तिकरावुभौ ।
ऋक्थपिण्डाम्बुदाने च समौ सम्परिकल्पितौ ॥
अपुत्रेण सुतः कार्य्यो यादृक् तादृक् प्रयत्नतः ।
पिण्डोदकक्रियाहेतोर्नामसङ्कीर्त्तनाय* च ॥
काङ्क्षन्ति पितरः पुत्रान्नरकापातभीरवः ।
गयां यास्यति यः कश्चित्सोऽस्मान् सन्तारयिष्यति ॥
वृषोत्सर्गं गयाश्राद्धमिष्टापूर्त्तं तथैव च ।
पालयिष्यति वार्द्धक्ये श्राद्धं दास्यति चान्वहम् ॥
यथा जलं कुप्लवेन तरन्मज्जति मानवः ।
तथा पिता कुपुत्रेण तमस्यन्धे निमज्जति ॥

इति विवादरत्नाकरे पुत्रादिदायादनिर्णयः ।

---

## अथ निन्दिताः ।

तत्र मनुः ।

अनियुक्तासुतश्चैव पुत्रिण्याप्तश्च देवरात् ।
उभौ तौ नार्हतो भागं जारजातककामजौ ॥

---

* नामसङ्कीर्त्तनस्येति पाठान्तरम् ।

† पुत्रस्येति पाठान्तरम् ।

अनियुक्तासुतो भर्त्तभावे गुर्व्वननुज्ञातायां यं समुत्पादयति स उच्यते। भागं वैचियक्तरिक्थादिविभागम्*। एतच्च पिण्ड-दानादेरप्युपलक्षणम्। शुल्कान्नाहृतदेवोत्पन्नविषयमेतत्, अयिमनारदवचनानुसारात्।

तथा।

निपुक्तायामपि पुमान्नार्य्यां जातोऽविधानतः।
नैवार्हः पैतृकं ऋक्थं पतितोत्पादितो हि यः†॥

अविधानतो नियोगविहितधर्म्माभावेन।

गौतमः।

देवरवत्यामन्यजातमभागम्।

वर्त्तमानदेवरायामन्यजातमपत्यं न भागभागि।

नारदः।

जाता ये त्वनियुक्तायामेकेन बहुभिस्तथा।
अरिक्थभाजस्ते सर्व्वे वीजिनामेव ते सुताः॥
दद्युस्ते वीजिने पिण्डं माता चेच्छुल्कतो हृता।
अशुल्कोपनतायाञ्च‡ पिण्डदा वोढुरेव ते॥

अनियुक्तायां स्वैरिण्याम्। अरिक्थभाजः वैचित्रक्तरिक्थं न लभन्ते§, मातृवैचित्रिकमातामहादीनां न ऋक्थं भजन्ते इति तु

* वैचियक्तरिक्थादिविभागमिति पाठान्तरम्।

† स इति पाठान्तरम्।

‡ अशुल्कोपगतायाश्चेति पाठान्तरम्।

§ भजन्ते इति पाठान्तरम्।

प्रकाशकारः।

किमविशेषेण पिण्डदानमित्याह*

दद्युस्ते बीजिने पिण्डं माता चेच्छुल्कतो हृता।

यदि क्षेत्रिणः शुल्कं मूल्यं दत्त्वा बीजिना माता हृता।

अशुल्कोपनतायामित्यादि† युक्तम्।

पुनः पुनर्भूस्वैरिण्यधिकारे नारदः।

अपत्यमुत्पादयितुस्तासां‡ याः शुल्कतो हृताः।

अशुल्कोपनतायान्तु§ क्षेत्रिकस्यैव तत्फलम्॥

मनुः।

द्वौ तु यौ¶ विवदेयातां द्वाभ्यां जातौ स्त्रिया धने।

तयोर्यद्यस्य पित्र्यं स्यात्तत्स गृह्णीत नेतरः॥

अत्र स्त्री वेश्यापुनर्भूस्वैरिणीतरेति|| पारिजातः।

इति विवादरत्नाकरे निन्दितपुत्रतरङ्गः।

—:—

* पिण्डदानेनेत्याहेति पाठान्तरम्।

† अशुल्कोपनतायामित्यादीति पाठान्तरम्।

‡ अपत्यमुत्पादयितुस्तासामिति पाठान्तरम्।

§ अशुल्कोपनतायान्त्विति पाठान्तरम्।

¶ पुत्राविति पाठान्तरम्।

|| एवेति पाठान्तरम्।

## अथापुत्रधनविभागः।

तत्र मनुः।

संस्थितस्यानपत्यस्य सगोत्रात्तनुमाहरेत्।
तत्र यद्रिक्थजातं स्यात्तत्तस्मै प्रतिपादयेत्॥

अनपत्यस्य मृतस्य पत्नी सगोत्राद्देवरसपिण्डयोरन्यतरस्मात् अपत्यमुत्पाद्य अस्मै* मृतस्वामिस्वत्वोपलक्षितरिक्थजातं दद्यान्न स्वयमाददीतेति पारिजातः। प्रकारान्तरस्तु राजैव सगोत्रद्वारा तमाहूय† तस्मै दद्याच्चेत्याह। फलतोऽत्र न कश्चिद्विशेषः।

वृद्धमनुः।

अपुत्रा शयनं भर्त्तुः पालयन्ती व्रते स्थिता।
पत्न्येव दद्यात्तत्पिण्डं कृत्स्नमंशं‡ लभेत च॥

अपुत्रस्य द्वादशविधपुत्रशून्यस्य। व्रते विधवानियमे।

बृहस्पतिः।

आम्नाये स्मृतितन्त्रे च लोकाचारे च सूरिभिः।
शरीरार्द्धं स्मृता जाया पुण्यापुण्यफले समा॥
यस्य नोपरता भार्य्या देहार्द्धं तस्य जीवति।
जीवत्यर्द्धशरीरेऽर्थं कथमन्यः समाप्नुयात्॥

---

* तस्यै इति पाठान्तरम्।

† तमाहूयेति पाठान्तरम्।

‡ कृत्स्नमंशमिति पाठान्तरम्।

सकुल्यैर्विद्यमानैस्तु पितृमातृसनाभिभिः।
असुतस्य* प्रमीतस्य पत्नी तद्भागहारिणी॥
पूर्व्वं प्रमीता†ग्निहोत्र मृते भर्त्तरि तद्धनम्।
विन्देत्पतिव्रता नारी धर्म्म एष सनातनः॥
जङ्गमं स्थावरं हेम कुप्यं धान्यं रसाम्बरम्।
आदाय दापयेच्छ्राद्धं मासषाण्मासिकादिकम्॥
पितृव्यगुरुदौहित्रान् भर्त्तुः स्वस्त्रीयमातुलान्।
पूजयेत्कव्यपूर्त्ताभ्यां वृद्धानाथातिथीन् स्त्रियः॥

केचित्स्त्रियाः पार्व्वणमप्याहुस्तन्निषेधाय‡ श्राद्धानि§ परिगणयति मासषाण्मासिकादिकमिति, अत्र मासशब्देन द्वादशमासिकान्युच्यन्ते। षाण्मासिकशब्देन द्वे ऊनषाण्मासिके। आदिशब्देन एकादशसपिण्डनप्रत्यब्दकर्त्तव्यक्षयाहश्राद्धानि गृह्यन्ते। अतो नान्यत्कुर्य्यात्, अन्यथा वचनान्तरैरेव एतेषां श्राद्धानां सिद्धत्वाद्वचनमिदमनर्थकं स्यादिति। तथा दापयेदिति स्वार्थे णिच्, रामो राज्यमकारयदितिवत्। पतिव्रता साध्वी। उदयकरस्तु मनुटीकायां पतिव्रताशब्दं मुख्यार्थं विवक्षन्ननुमरणान्तत्वात्पातिव्रत्यस्य दापयेदिति पारार्थ-

मेवाह। एवञ्च पतिव्रतालेतरगुणसम्पन्नानामप्यधिकारो* न स्यादिति बहवो नाद्रियन्ते। एवमपुत्रधने विद्यमानायां साध्व्यां भार्य्यायां तस्या अधिकारः।

तदभावे तु विद्यमानाया दुहितुरधिकार इत्याह नारदः।

पुत्राभावे तु दुहिता तुल्यसन्तानदर्शनात्।
पुत्रश्च दुहिता चोभे पितुः सन्तानकारिके॥

मनुः।

यथैवात्मा तथा पुत्रः पुत्रेण दुहिता समा।
तस्यामात्मनि जीवन्त्यां कथमन्यो हरेद्धनम्†॥

अत्र बृहस्पतिः।

अङ्गादङ्गात्सम्भवति पुत्रवद्दुहिता नृणाम्।
तस्याः पितृधनन्त्वन्यः कथं गृह्णीत मानवः॥
सदृशी सदृशेनोढ़ा साध्वी शुश्रूषणे रता।
कृताकृता वा पुत्रस्य पितुर्धनहरी तु सा॥

अथ बृहस्पतिः।

भार्य्यासुतविहीनस्य तनयस्य मृतस्य च॥
माता रिक्थहरी ज्ञेया भ्राता वा तदनुज्ञया॥

तदनुज्ञया मातुरनुज्ञया।

तत्र मनुः।

अनपत्यस्य पुत्रस्य माता दायाद्यमाप्नुयात्।

---

* पतिव्रतालेतरगुणसम्पूर्णानामप्यधिकार इति पाठान्तरम्।

† धनं हरेदिति पाठान्तरम्।

*मातर्य्यपि च वृत्तायां पितुर्माता हरेद्धनम् ॥*

अनपत्यत्वमत्र पुत्रपत्न्यादिशून्यत्वं विवक्षितम्। पितामह्यधिकारः पितृभ्रातृसपिण्डाभावे द्रष्टव्यः। मातुरभावे* पित्रादीनामधिकारस्य स्थितत्वात्। दायार्थं दायादग्राह्यमृक्थम्।

गौतमः।

असंसृष्ट†विभागः प्रेतानां ज्येष्ठस्य।

असंसृष्टानां विभक्तानां भ्रातॄणां मध्ये योऽनपत्यः प्रैति, तस्य भागो ज्येष्ठस्यैव भवतीत्यर्थः। एतदपि पत्नीमातापितृसत्त्वे बोद्धव्यम्।

मनुः।

पिता हरेदपुत्रस्य ऋक्थं भ्रातर एव वा।
त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते।
चतुर्थः सम्प्रदातैषां पञ्चमो नोपपद्यते ॥
अनन्तरः सपिण्डाद्यस्तस्य तस्य धनं भवेत्।
अत ऊर्द्ध्वं सकुल्यः स्यादाचार्य्यः शिष्य एव वा ॥

अपुत्रस्य मुख्यामुख्यपुत्रशून्यस्य, अनन्तरः सन्निहितः, धनमपुत्रस्य, सकुल्योऽत्र समानोदकः।

पैठीनसिः।

अपुत्रस्य भ्रातृगामि द्रव्यं तदभावे मातापितरौ लभेताम्। पत्नी वा ज्येष्ठा सगोत्रशिष्यसब्रह्मचारिणः।

---

* मात्रभावे इति पाठान्तरम्।

† असंसृष्टीति पाठान्तरम्।

अज्येष्ठा पतिव्रतात्वान्यस्वल्पविधवाकर्त्तव्यनियमवती, न तु सर्व्वतत्कर्त्तव्यवती, तस्या भ्रात्रपेक्षया पतिस्तक्थग्रहणे मुख्यत्वात्। नापि व्यभिचारिणी, तस्या निर्वास्यत्वात्। सब्रह्मचार्य्येव सहाध्यायी, यच* भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवितक्षयात्। रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु च† इति भरणमात्रं शङ्खेनोक्तं तद्वैधव्यव्रतादिरहिताव्यभिचारिणीमात्रविषयम्‡। यत्तु याज्ञवल्क्येन, पितरौ भ्रातरस्तथेति भ्रातृसद्भावे पित्रोरेवाधिकार उक्तः, स पितृपितामहाद्यर्ज्जितधनविषयः। यच्च पितृद्रव्याविरोधेनार्ज्जितं, तत्पित्रोः सद्भावे भ्रातॄणामेव।

देवलः।

तती दायमपुत्रस्य विभजेरन्§ सहोदराः।
तुल्या दुहितरो वापि ध्रियमाणः पितापि वा॥
सवर्णा भ्रातरो माता भार्य्या चेति¶ यथाक्रमम्।
एषामभावे गृह्णीयुः कुल्यानां सहवासिनः॥

तुल्याः सोदर्य्याः। पिता ध्रियमाणः सस्पृहश्चेति शेषः। अत्र हलायुधेन यथाक्रमं यथायाज्ञवल्क्यादिक्रममिति विरोधमा-

---

* यत्त्विति पाठान्तरम्।

† तर्दिति पाठान्तरम्।

‡ वैधव्यव्रतादिबहिर्भूताव्यभिचारिणीमात्रविषयमिति पाठान्तरम्।

§ भजेरन्निति पाठान्तरम्।

¶ भार्य्या माता चैतीति पाठान्तरम्।

शङ्खः परिहृतम्, अत्रेद शास्त्रतत्त्वमित्युपक्रम्य* लिखितञ्च पत्नी मारभ्य श्रोत्रियपर्य्यन्तस्यापुत्रब्राह्मणधने† राजपर्य्यन्तस्या‡पुत्रा ब्राह्मणधनेऽधिकारित्वम्। एतद्दर्शनाच्च शङ्खलिखितवचनेऽपि व्यवहित§कल्पना कार्य्येति देवलवचने अलब्धक्रमे याज्ञवल्क्य विष्णूक्त क्रमोऽन्वेतीति देवलवचनलिखनानन्तर याज्ञवल्क्य विष्णुवचने लिखितवत कल्पतरुकारस्याभिप्रेतम्। वस्तुतस्तु पैठीनसिवाक्ये¶ अपुत्रस्य प्रमीतस्य भ्रातृगामि द्रव्यमिति पितृ पितामहाद्यर्जितधनेतरधने, तदभावे मातापितरावित्यपि अन्यत्र खण्डे क्रमादर्शनमेवेति न विरोध ।

याज्ञवल्क्य ।

पत्नी दुहितरश्चैव पितरौ भ्रातरस्तथा।
तत्सुतो गोत्रजोबन्धु शिष्य सब्रह्मचारिण ॥
एषामभावे पूर्व्वस्य धनभागुत्तरोत्तर ।
स्वर्यातस्य ह्यपुत्रस्य सर्व्ववर्णेष्वय विधि ॥

एषा पत्नीदुहितृजननीजनकभ्रातृतत्सुतगोत्रजबन्धुशिष्यसब्रह्मचारिणा पूर्व्वस्य पूर्व्वस्य अभावे धनभागुत्तरोत्तरो भवतीत्यर्थं । पत्नी चात्रोत्तमगुणा विवक्षिता। अपुत्रत्वमत्र पौत्रप्रपौत्र

* शास्त्रमित्यपक्रम्येति पाठान्तरम् ।

† पर्य्यन्तमपुत्रब्राह्मणधन इति पाठान्तरम् ।

‡ कुल्या इति पाठान्तरम् ।

§ व्यवस्थितेति पाठान्तरम् ।

¶ वचन इति पाठान्तरम् ।

शून्यत्वमपि विवक्षितमिति प्रकाशकारेण द्योतितम् । युक्तञ्चै-तद्व्यवस्थाविकल्पात् । यद्यपि पितराविति समुचितनिर्देशेन समुचिताधिकार आपाततो भातिः* तथापि भार्य्यासुतविहीनस्य तनयस्य मृतस्य च । माता रिक्थहरी स्येवेति पितुरपेक्षयैव भार्य्यासुताभावे मातुरधिकारबोधनान्मात्रभावे पित्रधिकारबोधनमनेनेति ।

विष्णुः ।

> अनपत्यस्य धनं पत्न्यभिगामि, तदभावे दुहितृगामि, तदभावे मातृगामि, तदभावे पितृगामि, तदभावे भ्रातृगामि, तदभावे भ्रातृपुत्रगामि, तदभावे बन्धुगामि, तदभावे सकुल्यगामि, तदभावे सहाध्यायिगामि, तदभावे ब्राह्मणधनवर्जं राजगामि ।

बन्धुरत्र सपिण्डः, सकुल्यः, सगोत्र इति मिश्राः ।

दुहितृदौहित्रानन्तरं बृहस्पतिः ।

> तदभावे भ्रातरस्तु भ्रातृपुत्राः सनाभयः ।
> सकुल्या बान्धवाः शिष्याः श्रोत्रियाश्च धनाईकाः ।
> मृतोऽनपत्यभार्य्यश्चेद्भ्रातृपितृमातृकः ।
> सर्व्वे† सपिण्डास्तद्दायं विभजेरन्यथांशतः ॥
> समुत्पन्नाद्धनादर्द्धं तदर्द्धं स्थापयेत्पृथक् ।
> मासषाण्मासिके श्राद्धे वार्षिके वा प्रयत्नतः ॥

---

* भवतीति पाठान्तरम् ।

† भक्ता इति पाठान्तरम् ।

बहवो ज्ञातयो यत्र सकुल्या बान्धवास्तथा ।
यो ह्यासन्नतरस्तेषां सोऽनपत्यधनं हरेत् ॥

मासषाण्मासिके इत्यादौ निमित्तसप्तमी ।

अनपत्यमुद्दिश्यापस्तम्बः ।

पुत्राभावे प्रत्यासन्नः सपिण्डस्तदभावे आचार्य्यस्तदभावे अन्तेवासी, हृत्वा तदर्थं चोपयोजयेत्तद्दुहिता वा ।

बौधायनः ।

प्रपितामहः, पितामहः पिता स्वयं सोदर्य्या भ्रातरः सवर्णायाः पुत्रः पौत्रः प्रपौत्र एतानविभक्तदायादान्* सपिण्डानाचक्षते विभक्तदायादान् सकुल्यानाचक्षते असत्स्वङ्गजेषु† तद्गामी ह्यर्थो भवति‡ सपिण्डाभावे सकुल्यस्तदभावेऽप्याचार्य्योऽन्तेवासी, ऋत्विग्वा हरेत्, तदभावे राजा ।

इयञ्च परिभाषा दायविषया नत्वशौचादिविषया§ तत्र समानपिण्डाः सपिण्डाः, तेन विभक्तदायादा अपि सपिण्डाः, ते च विभक्तदायादा अत्रासपिण्डाः । अङ्गजेष्वौरसादिषु, तद्गामी सपिण्डादिगामी ।

---

* तानविभक्तदायादानिति पाठान्तरम् ।

† असत्स्वङ्गकेष्विति पाठान्तरम् ।

‡ भवतीतीति पाठान्तरम् ।

§ नत्वाशौचादिविषयेति पाठान्तरम् ।

नारदः ।

अभावे तु दुहितॄणां सकुल्या बान्धवास्तथा ।
ततः सजात्याः* सर्व्वेषामभावे राजगामि तत् ॥
अन्यत्र ब्राह्मणात्किन्तु† राजा धर्म्मपरायणः ।
तत्स्त्रीणां जीवनं दद्यादेष दायविधिः स्मृतः ॥

सकुल्याः पितृव्यपुत्रादयः, सजात्या एकजातीयाः, किन्त्वित्यादि निर्द्धनब्राह्मणस्त्रीविषयम् ।

मनुः ।

सर्व्वेषामप्यभावे तु ब्राह्मणा ऋक्थभागिनः ।
त्रैविद्याः शुचयो दान्तास्तथा धर्म्मो न हीयते ॥
अहार्य्यं ब्राह्मणधनं राज्ञा नित्यमिति स्थितिः ।
इतरेषान्तु वर्णानां सर्व्वाभावे हरेन्नृपः ॥
सर्व्वत्रादायकं राजा हरेद्ब्रह्मस्ववर्ज्जितम् ।
अदायकञ्च ब्रह्मस्वं श्रोत्रियेभ्यः प्रदापयेत् ॥

अदायकं दायादशून्यम् ।

बौधायनः ।

ब्रह्मस्वं पुत्रपौत्रघ्नं हन्यादेकाकिनं विषम् ।
तस्माद्राजा ब्राह्मणस्वं नाददीत कथञ्चन ॥

परमं ह्येतद्विषं यद्ब्राह्मणस्वमिति ।

वृहस्पतिः ।

---

* तत्सजात्यार्थेति पाठान्तरम् ।

† ब्राह्मणधनादिति पाठान्तरम् ।

येऽपुत्राः चत्रविट्शूद्राः पत्नीभ्रातृविवर्ज्जिताः ।
तेषां धनं हरेद्राजा सर्व्वस्याधिपतिर्हि सः ॥

शङ्खलिखितौ ।

परिपन्नामि या श्रोत्रियद्रव्यं न राजगामि, न हार्य्यं राज्ञा देवब्राह्मणसंस्थितम्* । सनिक्षेपोपनिधिक्रमागतं न बालस्त्रीधनानि एवं ह्याह न हार्य्यं स्त्रीधनं राज्ञा तथा बालधनानि च । नार्य्याः षड़ागमं वित्तं बालानां पैतृकं† धनम् ।

परिपन्नाम्नणाः । उपनिधिर्निक्षेपविशेषः । पारिजाते क्रमागतं पितृपरम्परया आगतम् । षड़ागममध्यग्न्यादि षड़ागमलब्धम् ।

मनुः ।

बालदायागतं रिक्थं तावद्राजानुपालयेत् ।
यावत्स स्यात्समावृत्तो यावद्वातीतशैशवः ॥

बालदायागतं बालस्वामिकमनुपालयेद्दायादेभ्यो रक्षयेत्‡ ।

विष्णुः ।

बालानाथस्त्रीधनानि राजा परिपालयेत् ।

शङ्खलिखितौ ।

---

* सञ्चितमिति पाठान्तरम् ।

† पितृकमिति पाठान्तरम् ।

‡ रक्षेदिति पाठान्तरम् ।

रक्षेद्राजा बालानां धनान्यप्राप्तव्यवहाराणां श्रोत्रिय-
वीरपत्नीनां नष्टस्वामिकानि राजगामीनि भवन्ति ।

श्रोत्रियवीरपत्नीनां श्रोत्रिये वीरे प्रोषितेऽपगते वा तत्पत्नीनाम् ।

पुत्राधिकारे बौधायनः ।

तेषामप्राप्तव्यवहाराणां सोपचयानंशान् सुगुप्तान्* निद-
ध्यादाव्यवहारप्रापणात् ।

सोपचयान् सवृद्धिकान्, सुगुप्तान्† सुरक्षितान् । आङ् अभि-
विधौ, तेन सप्तदशवर्षात्प्राक् ।

कात्यायनः ।

प्रोषितस्य तु यो भागो रक्षेयुः सर्व्व एव तम् ।
बालपुत्रे मृते रक्थं रक्ष्यं तत्तन्तु बन्धुभिः‡ ॥
पौगण्डाः§ परतस्तन्तु विभजेरन्यथांशतः ।

बालपुत्रे बालः पुत्रो यस्य तस्मिन्, पौगण्डोऽतिबालो व्यवहारा-
नभिज्ञः ।

विष्णुः ।

यश्चांशहरः स पिण्डदायी ।

स्मृतिः ।

यो धनमाददीत, स तस्मै श्राद्धं कुर्य्यात्, पिण्डञ्च

---

* स्वनिगुप्तानिति पाठान्तरम् ।

† स्वनिगुप्तानिति पाठान्तरम् ।

‡ रक्षितव्यन्तु बन्धुभिरिति पाठान्तरम् ।

§ पौगण्डा इति पाठान्तरम् ।

त्रिपुरुषं दद्यात्* ।

अत्र श्राद्धशब्देन प्रीमितैकोद्दिष्टान्युच्यन्ते इति प्रकाशकारः ।

बृहस्पतिः ।

भ्राता वा भ्रातृपुत्रो वा सपिण्डः शिष्य एव वा ।
सहपिण्डक्रियां कृत्वा कुर्य्यादभ्युदयं ततः ॥

वशिष्ठः ।

पुत्रः पितृवित्तालाभेऽपि पिण्डं दद्यात् ।

अथ विष्णुः ।

वानप्रस्थधनमाचार्य्यो गृह्णीयाच्छिष्यो वा ।

याज्ञवल्क्यः ।

वानप्रस्थयतिब्रह्मचारिणामृक्थभागिनः ।
क्रमेणाचार्य्यसच्छिष्यधर्म्मभ्रात्रेकतीर्थिनः ॥

क्रमेण प्रतिलोमक्रमेण, तेन ब्रह्मचारिणो नैष्ठिकस्य धनमाचार्य्यो गृह्णीयात्, यतेर्धनं सच्छिष्योऽध्यात्मशास्त्रश्रवणधारणतदर्थानुष्ठानदक्षः । वानप्रस्थधनं धर्म्मभ्रात्रेकतीर्थी गृह्णाति, धर्म्मभ्राता भ्रातृत्वेन प्रतिपन्नः, एकतीर्थी एकाश्रमी । यद्यप्येवं नाश्रमान्तरम्† इति वशिष्ठवचनेन विरोधः तथापि यथाकथञ्चिद्दनवत्त्वमादाय समाधेयमिदम् ।

इति विवादरत्नाकरे अपुत्रधनविभागतरङ्गः ।

---

* सपिण्डस्त्रिपुरुष कुर्य्यादिति, पिण्डत्रिपुरुष कुर्य्यादिति च पाठान्तरम् ।

† सोऽश्वाश्रमान्तर इति पाठान्तरम् । आश्रमान्तरगतस्य वानप्रस्थादेर्धनमस्य नास्तीति भाव ।

## अथ संसृष्टिविभागः ।

तत्र मनुः ।

विभक्ताः सह जीवन्तो विभजेयुः पुनर्यदि ।
समस्तत्र विभागः स्याज्ज्यैष्ठ्यं तत्र न विद्यते ॥

सह जीवन्तः संसृज्य* जीवन्तः, समस्तत्र विभागो ज्येष्ठांशारादिकं† न स्यादित्यर्थः ।

तथा ।

येषां ज्येष्ठः कनिष्ठो वा हीयेतांशप्रदानतः ।
म्रियेतान्यतरो वापि तस्य भागो न लुप्यते ॥

संसृष्टानां भ्रातॄणां मध्ये यदि कश्चित्प्रव्रज्यादिना हीयेत म्रियेत वा, तदा तस्य भागो न लुप्यते ।

कस्तर्हि तं गृह्णीयादित्यत आह ।

सोदर्या विभजेरंस्तं समेत्य सहिताः समम् ।
भ्रातरो ये च संसृष्टा भगिन्यश्च सनाभयः ॥

सोदर्या भ्रातरइत्यन्वयः‡ । तेन भ्रातृणामेव मध्ये संसृष्टाः सोदरत्वसंसृष्टत्वरूपोभयप्रयोजकविशेषणवन्तस्तमंशं गृह्णीयुरित्यर्थः । भगिन्यश्च सनाभयः, सनाभयः सोदराः ताश्चाप्रदत्ताः, प्रदत्ताः पुनः पतिगोत्रमासादयन्तीति प्रकाशः ।

---

* संसृष्टा इति पाठान्तरम् ।

† ज्येष्ठोद्धारकर्षादिकमिति ज्येष्ठोत्कर्षादिकमिति च पाठान्तरम् ।

‡ इत्यर्थ इति पाठान्तरम् ।

बृहस्पतिः ।

संसृष्टौ यौ पुनः प्रीत्या तौ परस्परभागिनौ ।

तथा ।

विभक्ता भ्रातरो ये तु सम्प्रीत्यैकत्र संस्थिताः ।
पुनर्विभागकरणे ज्यैष्ठं तेषां* न विद्यते ॥
कदाचिद्वा प्रमीयेत प्रव्रजेद्वा कथञ्चन ।
न लुप्यते तस्य भागः सोदरस्य विधीयते ॥
या तस्य भगिनी सा तु ततोऽंशं लब्धुमर्हति ।
अनपत्यस्य धर्म्मोऽयमभार्य्यापितृकस्य च ॥
संसृष्टानान्तु यः कश्चिद्विद्याशौर्य्यादिनाधिकम् ।
धनं प्राप्नोति तत्रास्य द्व्यंशः शेषाः समांशिनः ॥

विद्याशौर्य्यादिना असाधारणप्रयोजकरूपयदन्येन ।

नारदः ।

संसृष्टानान्तु यो भागस्तेषामेव स इष्यते ।
अतोऽन्यथांशभाजस्तु† निर्वीजेष्वितरान्वियात् ॥

अतोऽन्यथा संसृष्टिनामभावे, निर्वीजेषु सन्तानरहितेषु, इतरानंशभाजोऽसंसृष्टिनो भाग इयाद्गच्छेत् । प्रकाशकारस्तु अतोऽन्यथा पुत्रवत्त्वेऽपि त एवांशभाजः । निर्वीजेषु सन्तानरहितेषु भ्रातॄन् भाग इयाद्गच्छेदित्याह । पारिजाते तु

---

* तयेति पाठान्तरम् ।

† अंशभाज पुत्रादीनित्यर्थः ।

अतोऽन्यथा अनंशभाज इति पठितं, तत्तु बहुग्रन्थविसंवादात्यक्तम् ।

शङ्खः ।

भ्रातॄणामप्रजाः प्रेयात्कश्चिद्वेत्प्रव्रजेत* वा ।
विभजेरन्धनं† तस्य शेषास्ते स्त्रीधनं विना ॥
भरणञ्चास्य कुर्व्वीरन् स्त्रीणामाजीवनक्षयात्‡ ।
रक्षन्ति शय्यां भर्त्तुश्चेदाच्छिन्द्युरितरासु तत्§ ॥
या तस्य दुहिता तस्याः पित्रंशो भरणे मतः ।

स्त्रियोऽत्र वैधव्यव्रतादिरहिताव्यभिचारिण्यः । अभार्य्यापित्रंकस्य चेत्यत्र भार्य्याशब्दो वैधव्यव्रतादिसहिताव्यभिचारिणीपरः¶ । पारिजाते तु स्त्रियोऽत्र सवर्णा इत्युक्तम् । तेन तन्मते भार्य्याशब्दः पूर्व्वसवर्णभार्य्यापर इति लभ्यते । इतरासु शय्यामरक्षन्तीषु । आसंस्काराद्विवाहमभिव्याप्य तावन्तं भागं हरेद्यावता विवाहस्य निष्पत्तिरिति कल्पतरुः ।

याज्ञवल्क्यः ।

संसृष्टिनस्तु संसृष्टी सोदरस्य तु सोदरः ।

---

* प्रव्रजेतेति पाठान्तरम् ।

† धनमिति पाठान्तरम् ।

‡ स्त्रीणामाजीवितक्षयादिति पाठान्तरम् ।

§ चेति पाठान्तरम् ।

¶ वैधव्यव्रतादिसहिताव्यभिचारिणीतिपर इति पाठान्तरम् ।

दद्यादपहरेद्भागं* जातस्य च मृतस्य च ॥

संसृष्टिनो मृतस्य तु धनं संसृष्टी हरेत्† नत्वंशहरः सोदरस्य तु सोदरः। सोदरासोदरसंसर्गे सोदर एव गृह्णीयादित्यर्थः।

इदानीं सोदरस्यासंसृष्टस्य वैमात्रेयस्य संसृष्टस्य सद्भावे संसृष्टिनि मृते यद्भवति तदाह।

अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यो धनं‡ हरेत्।

असंसृष्ट्यपि चादद्यात्संसृष्टो नान्यमातृजः ॥

नान्योदर्य्यो धनं§ हरेदसंसृष्टीति¶ श्लोकच्छेदः। अनेनान्वयव्यतिरेकतोऽन्योदर्य्यसंसृष्टित्वं‖ धनहरणकारणमित्युक्तं** न तु संसृष्टीति परेणापि सम्बध्यते तेन संसृष्ट्यपि धनमाददीत, कोऽसावित्याकाङ्क्षायामुक्तं, संसृष्टः एकशुक्रशोणितसम्भवः सोदर इति यावत्, अनेन चासंसृष्टस्यापि धनग्रहणे सोदरत्वमपि हेतुरुक्तः। तेनोभयोरेव धनग्रहणहेतुमत्त्वादुभयोरपि धनग्राहकत्वमुक्तम्। यत्तु कल्पतरौ नान्योदर्य्यधनं हरेदिति

---

* दद्यादपहरेद्यांशमिति पाठान्तरम्।

† अंशहरो भवेदिति पाठान्तरम्।

‡ नान्योदर्य्यधनमिति पाठान्तरम्।

§ नान्योदर्य्यधनमिति पाठान्तरम्।

¶ हरेदसंसृष्टीति पाठान्तरम्।

‖ अन्योदर्य्यस्यासंसृष्टित्वमिति पाठान्तरम्।

** नांशकारणमित्युक्तमिति पाठान्तरम्।

पाठस्तथापि स एवार्थः*। अन्योदर्य्यस्य धनं अन्योदर्य्यधनं तेन अन्योदर्य्यस्य संसृष्टिनो धनमन्योदर्य्यः संसृष्टी† न हरेदित्यर्थः। अन्ये तु अन्योदर्य्यस्तु संसृष्टी नान्योदर्य्यधनं‡ हरेदिति ऋजुमेवार्थमनुमन्यन्ते§।

कात्यायनः।

संसृष्टानान्तु संसृष्टाः पृथक्स्थानां पृथक्स्थिताः।
अभावेंऽशहरा ज्ञेया निर्वीजान्योन्यभागिनः॥

संसृष्टानां मृतानां संसृष्टा अंशहराः, पृथक्स्थानां मृतानां पृथक्स्थिता अंशहरा ज्ञेयाः, अभावे भार्य्याद्यभावे। निर्वीजान्योन्यभागिन इति द्वन्द्वसमासः।

बृहस्पतिः।

विभक्तो यः पुनः पित्रा भ्राता वैकत्र¶ संस्थितः।
पितृव्येनाथवा प्रीत्या स तु संसृष्ट उच्यते॥

अनाख्यायां वाकारः, तेन पितृव्यजेनार्य्यमिना कृतविभाग-

---

* पाठो दृश्यते स मूलभूतयाज्ञवल्क्यमिताक्षरापारिजातमदनरत्नादिषु नान्योदर्य्यो धनं हरेदिति पाठदर्शनाभावाद्गुरुभिर्व्याख्यादर्शनाच्च लिपिप्रमाद इति विभाव्यम्। वस्तुतस्तु अन्योदर्य्यधनं हरेदिति पाठेऽपि स एवार्थ इति पाठान्तरम्।

† अन्यसंसृष्टीति पाठान्तरम्।

‡ नान्योदर्य्यस्य धनमिति पाठान्तरम्।

§ वाच्यमेवानुमन्यन्ते इति पाठान्तरम्।

¶ चैकत्रेति पाठान्तरम्।

एकत्रस्थितः संसृष्टः सर्व्वलोके परिगृहीतो लभ्यते । प्रकारे तु वचनबलेन नियम एवेत्युक्तम् ।

इति विवादरत्नाकरे संसृष्टविभागतरङ्गः ।

---

## अथ विभागनिर्णयः ।

तत्र नारदः ।

*विभागधर्मसन्देहे दायादानां विनिर्णयः ।*
ज्ञातिभिर्भागलेख्येन पृथक्कार्य्यप्रवर्त्तनात् ॥
भ्रातृणामविभक्तानामेको धर्मः प्रवर्त्तते ।
विभागे सति धर्म्मोऽपि* भवेत्तेषां पृथक् पृथक् ॥
दानग्रहणपश्वन्नगृहक्षेत्रपरिग्रहाः ।
विभक्तानां पृथग्ज्ञेयाः पाकधर्मागमव्ययाः† ॥
साक्षित्वं प्रातिभाव्यञ्च दानं ग्रहणमेव वा ।
विभक्ता भ्रातरः कुर्य्युर्नाविभक्ताः परस्परम् ॥
येषामेताः‡ क्रिया लोके प्रवर्त्तन्ते स्वरिक्थतः§ ।

---

* धर्मोऽस्तीति पाठान्तरम् ।
† पाकधर्म्मोऽन्यथा इति पाठान्तरम् ।
‡ विभक्ता इति पाठान्तरम् ।
§ वर्त्तन्तेऽथ स्वरिक्थतिति पाठान्तरम् ।

विभक्तानवगच्छेयुर्लेख्यमप्यन्तरेण तान् ॥

विभागरूपो धर्म्मः विभागधर्म्मः तस्य संशये जातौ न वेत्याकारे दायादानां ज्ञातिभिः निर्णयः कर्त्तव्यः। भागलेख्यं विभागज्ञापकं लेख्यं, पृथक्कार्य्यप्रवर्त्तनात् पृथगायव्ययादिकार्य्यप्रवृत्तिदर्शनात्। धर्म्मो वैश्वदेवादिक्रियाकलापः। आगमोऽर्थप्राप्तिः, व्ययस्त्यागः, अनन्यथासिद्धौ* तात्पर्य्यम्।

याज्ञवल्क्यः।

विभागनिह्नवे ज्ञातिबन्धुसाक्ष्यभिलेखितैः।
विभागभावना ज्ञेया गृहक्षेत्रैश्च यौतकैः† ॥

यौतकैः पृथग्भूतैः सु मिश्रण इति धात्वनुसारात्।

तथा।

भ्रातॄणामथ दम्पत्योः पितुः पुत्रस्य चैव हि।
प्रातिभाव्यमृणं साक्ष्यमविभक्ते न तु‡ स्मृतम् ॥

परस्परमिति शेषः। यद्यपि जायापत्योऽ§र्विभागो न विद्यते इत्यापस्तम्ब., तथापि यदि कुर्य्यात्समानंशान् पत्नाः कार्य्याः समांशिका इति वचनाद्याज्ञवल्क्येन पत्न्या अपि¶ स्वामिना

* अन्यथा असिद्धाविति पाठान्तरम्।

† गृहक्षेत्रैर्यौतकैरिति पाठे अयौतकैः पृथग्भूतैरित्यर्थो युज्यते, यौतकैः पृथग्भूतैरिति प्रमादकृतोऽयं इति प्रतिभाति युधातोर्मिश्रणार्थत्वादिति सुधीभिर्भाव्यम्।

‡ अविभक्तैर्न त्विति पाठान्तरम्।

§ भार्य्यापत्योरिति पाठान्तरम्।

¶ जायाया अपीति तथा अपीति च पाठान्तरम्।

सह क्वापि विभागो बोधित इति, तदभिप्रायेण दम्पत्योरिति याज्ञवल्क्यवचनं नेतव्यमित्यविरोधः ।

बृहस्पतिः ।

पृथगायव्ययधनाः कुसीदश्च परस्परम् ।
वणिक्पथश्च ये कुर्य्युस्ते विभक्ताः परस्परम् ॥

परस्परं साहित्यं विना अन्योन्यनैरपेक्ष्येणेति यावत् । पृथगायव्ययधना इति पृथक्पदमुत्तरत्रापि सम्बध्यते ।

इति विवादरत्नाकरे विभागनिर्णयतरङ्ग ।

---

## अथ विभक्तकृत्यम् ।

तत्र नारदः ।

यद्येकजाता बहवः पृथग्धर्म्माः पृथक्क्रियाः ।
सम्यक्‌*कर्म्मगुणोपेता न चेत्कार्येषु† सङ्गताः ॥

एकजातत्व बहुत्वञ्चाविवक्षितम्‡ । पृथग्धर्म्माः भिन्नभिन्नमहायज्ञादियुक्ताः । पृथक्क्रियाः पृथक्कुसीदादिवृत्तिमन्तः ।

---

* पृथगिति पाठान्तरम् ।

† कार्य्येष्विति पाठान्तरम् ।

‡ एकवीर्यजातत्वं विवक्षितमिति पाठान्तरम् ।

पृथक्कर्मगुणोपेताः पृथक्प्रजारवणकृषिशुश्रूषादियुक्ताः। न चेत्कृत्येषु सङ्गताः न चेत्सम्भूयकारिण इत्यर्थः।

अस्योक्तस्य फलमाह।

स्वभागान्यदि ते दद्युर्विक्रीणीयुरथापि वा।
कुर्य्युर्यथेष्टं तत्सर्व्वमीशास्ते स्वधनस्य वै॥

अत्र वाक्यान्तरपरामर्शात्सर्व्वपदं सङ्कोच्यम्। सङ्कोचकानि च दत्तप्रदानिकप्रकरणस्थबृहस्पत्यादिबहुवाक्यानि* विभक्ता अविभक्ता वेत्यादीनि तत्रैवानुसन्धेयानि।

बृहस्पतिः।

येनांशो यादृशो भुक्तस्तस्य तन्न विचालयेत्।
स्वेच्छाकृतविभागो यः पुनरेव विसंवदेत्।
स राज्ञांशे स्वके स्थाप्यः शासनीयोऽनुबन्धकृत्॥

स्वेच्छाकृतविभागेन येनांशो यादृशो भुक्तस्तस्य स एव भागः, न तु विचालयेदिति स्थैर्य्यार्थमुक्तं स्वेच्छाकृतविभाग इत्यादिनानुबन्धकृदित्यन्तेन।

इति विवादरत्नाकरे विभक्तकृत्यतरङ्गः।

---

* अविवाक्यानीति पाठान्तरम्।

## अथ द्यूतसमाह्वयः ।

तत्र नारदः ।

अक्षवध्रशलाकाद्यै*र्देवनं जिह्मकारितम् ।
पणक्रीडा वयोभिश्च पदं द्यूतसमाह्वयः ॥

अक्षाः† पाशकाः, वध्राश्चर्मपट्टिकाः, शलाकाः‡ दन्तादिघटिताश्चतुरस्रा देवनविशेषात्मिकाः । आद्यशब्देन चतुरङ्गादिसाधनानां करितुरगादीनां ग्रहणम् । अक्षवध्रशलाकाद्यैः§ देवनं द्यूतं वयोभिश्च पणक्रीडा समाह्वयः । वयःशब्दः पक्षिवाची प्राण्यन्तरमप्युपलक्षयति ।

अत्रैव मनुः ।

अप्राणिभिर्यत्क्रियते तल्लोके द्यूतमुच्यते ।
प्राणिभिः क्रियते यस्तु स विज्ञेयः समाह्वयः ॥

बृहस्पतिः ।

अन्योन्यं परिगृहीताः पक्षिमेषमृगादयः ।
प्रहरन्ते कृतपणास्तं वदन्ति समाह्वयम् ॥

मनुः ।

---

* अक्षवध्र शलाकाद्यैरिति पाठान्तरम् ।

† अक्ष पाशक, वध्रश्चर्मपट्टिका, शलाका दन्तादिघटिता चतुरस्रा देवनविशेषात्मिकेति पाठान्तरम् ।

‡ अक्षवध्रशलाका इति पाठान्तरम् ।

§ अक्षवध्र शलाकाद्यैरिति पाठान्तरम् ।

द्यूतं समाह्वयञ्चैव राजा राष्ट्राद्विवासयेत् ।
राष्ट्रान्तकरणावेतौ द्वौ दोषौ* पृथिवीक्षिताम् ॥
प्रकाशमेतत्तास्कर्य्यं यद्देवनसमाह्वयौ ।
तयोर्नित्यं प्रतीघाते नृपतिर्यत्नवान्भवेत् ॥
द्यूतं समाह्वयञ्चैव यः कुर्य्यात्कारयेत् ।
तान्सर्व्वान्घातयेद्राजा शूद्रांश्च द्विजलिङ्गिनः ॥
द्यूतमेतत्पुराकल्पे दृष्टं वै विकृतं† महत् ।
तस्माद्द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥
प्रच्छन्नं वा प्रकाशं वा तन्निषेवेत यो नरः ।
तस्य दण्डविकल्पः स्याद्यथेष्टं नृपतेस्तथा ॥

दण्डविकल्पो दण्डप्रकारः । यथेष्टं नृपतेर्नृपतेरिच्छानुसारेण ।

कात्यायनः ।

द्यूतं नैव तु सेवेत क्रोधलोभविवर्द्धनम् ।
असाधुजननं क्रूरं नराणां द्रव्यनाशनम् ॥
ध्रुवं द्यूतालालिर्यस्मादियं सर्व्वसुखाद्रिव ।
तस्माद्राजा निवर्त्तेत विषये व्यसनं हि तत् ॥
वर्त्तेत चेत्प्रकाशन्तु द्वारावस्थिततोरणम् ।
असम्मोहार्थमार्य्याणां कारयेत्सत्कारप्रदम् ॥

बृहस्पतिः ।

द्यूतं निषिद्धं मनुना सत्यशौचधनापहम् ।

---

* दोषौ तावेति पाठान्तरम् ।

† वैरकरमिति पाठान्तरम् ।

तत्प्रवर्त्तितमन्यैश्च राजभागसमन्वितम् ॥

सभिकाधिष्ठितं कार्य्यं तस्करज्ञापकं हि तत् ॥

अस्यायमर्थः—द्यूतं तावद्राज्ञा सर्व्वथा निवर्त्तनीयम्। यदि तु तस्करज्ञापनाय क्रियते तदा उक्तक्रमेणेति।

याज्ञवल्क्यः।

द्यूतमेकमुखं कार्य्यं तस्करज्ञानकारणात्।

एष एव विधिर्ज्ञेयः प्राणिद्यूतसमाह्वये ॥

एकमुखमेकराजाध्यक्षप्रधानपुरुषरूपसभिकाधिष्ठितं कार्य्यमित्यर्थः। अस्यैव प्राणिद्यूतसमाह्वये एष एवेत्यनेनातिदेशः।

बृहस्पतिः।

सभिको ग्राहकस्तस्य दद्याज्जेत्रे* नृपाय च।

कात्यायनः।

सभिकः कारयेद्द्यूतं देयं दद्यात्† स्वयं नृपे।

दशकन्तु शतं वृद्धिं गृह्णीयाच्च पराजये ॥

जेतुर्द्दद्यात्स्वयं द्रव्यं जितं ग्राह्यं विपक्षकम्‡।

सद्यो वा सभिकेनैव कितवादनसंशयेृ§ ॥

नारदः।

सभिकः कारयेद्द्यूतं देयं दद्याच्च तत्कृतः।

---

* द्रव्यमेवं इति पाठान्तरम्।

† स्वयदिति पाठान्तरम्।

‡ विपक्षकमिति पाठान्तरम्।

§ कितवान् न संशय इति, कितवादि न संशय इति च पाठान्तरम्।

दशकन्तु शतं वृद्धिस्तस्य स्याद्द्यूतकारिता ॥
अथवा कितवो राज्ञे दत्त्वा भागं यथोदितम् ।
प्रकाशदेवनं कुर्य्यादेवं दोषो न विद्यते ॥

याज्ञवल्क्यः ।

ग्लहे* शतिकवृद्धेस्तु सभिकः पञ्चकं शतम् ।
गृह्णीयाद्धूर्त्तकितवादितराद्दशकं शतम् ॥

पञ्च पणा अधिका यस्मिन् शते† तत्पञ्चकं शतम्, इतरा-दपरिपूर्णशतवृद्धेर्दशकं शतं गृह्णीयादिति मिताक्षरा । कल्पतरुस्तु शतिका शतपरिमाणा यस्य‡ वृद्धिः स§ शतिकवृद्धिः येन शतमेकं जितमिति यावत्, तस्मात्पञ्चकं शतं सभिको गृह्णीयादितराद्दशकं शतं येन शतमेकं पराजितं तस्माद्दशकं शतं गृह्णीयादित्यर्थ इत्याह ।

तथा ।

स सम्यक् पालितो दद्याद्राज्ञे भागं यथाकृतम् ।
जितमुद्ग्राहयेज्जेत्रे दद्यात्सत्यवचाः क्षमी ॥

सभिको धूर्त्तकितवो राज्ञा रक्षितो राज्ञे यथाकृतं भागं दद्यात् जितञ्चोद्ग्राहयेज्जेत्रे, सत्यवाक् क्षमी सन्दद्यात्सत्यवचा¶ इति

---

* ग्रहे इति, ग्रहे इति च पाठान्तरम् ।
† आयो यस्मिन् पञ्चशते इति पाठान्तरम् ।
‡ यः चेति पाठान्तरम् ।
§ चेति पाठान्तरम् ।
¶ सत्यवच इति पाठान्तरम् ।

दृष्टमूलभूतयाज्ञवल्क्यमिताक्षरयोर्दृष्टं, तत्र जितं सत्यवचाय जेत्रे दद्यादित्यर्थः। इति फलतो न विशेषः*।

नारदः।

द्विरभ्यस्ताः पतन्त्यक्षा ग्लहे† यस्याक्षदेविनः।
जयन्तस्यापरस्याहुः कितवस्य पराजयम्॥

कात्यायनः।

एकरूपा द्विरूपा वा द्यूते यस्याक्षदेविनः।
दृश्यते‡ च जयस्तस्य यस्मिवधा व्यवस्थिता॥

बृहस्पतिः।

द्वन्द्वयुद्धे तु यः कश्चिदवसादमवाप्नुयात्।
तत्स्वामिना पणो देयो यस्तत्र परिकल्पितः॥

द्वन्द्वयुद्धे मल्लमेषादिद्वन्द्वयुद्धे, अवसादं पराजयम्।

नारदः।

अशुद्धः कितवो नान्यदाश्रयेद्द्यूतमण्डलम्।
प्रतिहन्यान्न कितवं दापयन्तं स्वमिच्छतः§॥

अशुद्धोऽशोधितहारितधनः¶, स्वं स्वलभ्यमर्थमित्यर्थः।

याज्ञवल्क्यः।

---

* विशेष इति पाठान्तरम्।

† यष्टे इति यष्टे इति च पाठान्तरम्।

‡ दृश्यन्ते इति पाठान्तरम्।

§ स्वमिष्टम इति पाठान्तरम्।

¶ अशोधिती हारितधन इति पाठान्तरम्।

प्राप्ते नृपतिभागे तु प्रसिद्धे द्यूतमण्डले* ।
जितं ससभिके स्थाने दापयेदन्यथा न तु ।

नारदः ।

अनिर्दिष्टन्तु यो राज्ञा द्यूतं कुर्व्वीत मानवः ।
परिहासकृतं यच्च यच्चाप्यविदितं नृपे ॥
न स तं प्राप्नुयात्काममथवा नाथमाप्तयोः ।

अथवेति समुच्चये ।

न स तं प्राप्नुयात्कामं विनयञ्चैव सोऽर्हति ।

तेन परिहासकृते अविदितकृते च सभिकोऽपि तं कामं तयोः पार्श्वे नाप्नुयात्, तत्तयोरिति पाठे तु तत्सलभ्यमित्यर्थः† ।

तथा ।

भक्ष्यभोज्यान्नपानानि खल्वान्यन्यानि कानिचित् ।
प्रीत्या तु सकृदाजीवेत्प्रसङ्गन्तु विवर्जयेत् ॥

आजीवेदुपजीवेत् । तेन सभिको भक्ष्यभोज्यादीनि स्वल्पानि कितवपार्श्वे गृह्णीयान्न तु बहूनि प्रीत्यापीत्यर्थः ।

कात्यायनः ।

प्रसह्य दापयेद्द्रव्यं तस्मिन्स्थाने न चान्यथा ।
जितं वै सभिकस्तत्र सभिकप्रत्ययात्क्रिया ॥

तत्र स्थाने राष्ट्रान्तरीक्ष‡धूर्त्तमण्डले तेन तस्मिन्स्थाने जितं

---

* स्वप्रसिद्धे धूर्त्तमण्डले इति पाठान्तरम् ।

† सुलभ्यमित्यर्थ इति पाठान्तरम् ।

‡ सुयन्तरीक्षेति पाठान्तरम् ।

यदि, तदा सभिको दापयेत्। यतस्तत्र स्थाने सभिकप्रत्ययो देवनक्रियाविश्वासहेतुः।

तथा।

अनभिज्ञो जितोमोच्योऽभिज्ञो वापि जितो रहः।
सर्व्वस्वेऽपि जितेऽभिज्ञं न सर्व्वस्वं प्रदापयेत्॥

बृहस्पतिः।

रहोजितोऽनभिज्ञश्च कूटाचैः कपटेन वा।
मोच्योऽभिज्ञोऽपि सर्व्वस्वं जितं सर्व्वं न दापयेत्॥

नारदः।

कूटाक्षदेविनः पापान्निर्हरेद्द्यूतमण्डलात्।
कण्ठेऽक्षमालामासज्य स ह्येषां विनयः स्मृतः॥

बृहस्पतिः।

कूटाक्षदेविनः पापा राजभागहराश्च ये।
गणनावञ्चकाश्चैव दण्ड्यास्ते कितवाः स्मृताः॥

गणनावञ्चकाः गणनायां वञ्चकाः असम्यग्गणनाकारिणः* इत्यर्थः।

तथा।

ग्लहः† प्रकाशः कर्त्तव्यो निर्वास्याः कूटदेविनः।

याज्ञवल्क्यः।

---

* यथाक्रमगणनाकारिण इति पाठान्तरम्।

† षड इति पाठान्तरम्।

राज्ञा सचिह्नं निर्वास्याः कूटाक्षोपधिदेविनः* ।

कूटाक्षा अक्षाभासाः, उपधिर्वञ्चनहेतुर्मणिमन्त्रादिचिह्नं नारदोक्तमेव ज्ञेयम् ।

विष्णुः ।

द्यूते कूटाक्षदेविनां† करच्छेद उपधिदेविनां सन्दंशच्छेदः ।

सन्दंशोऽङ्गुष्ठतर्जन्यौ ।

नारदः ।

कितवेष्वयतिष्ठेरन्‡ कितवाः संशयं प्रति ।
त एव तत्र द्रष्टारस्तत्र चैते तु साक्षिणः ॥

बृहस्पतिः ।

स एव साक्षी सन्दिग्धौ सभ्यैश्चान्यैस्त्रिभिर्वृतः ।

कात्यायनः ।

विग्रहे च जये लाभे करणे कूटदेविनाम् ।
प्रमाणं सभिकस्तत्र शुचिः स्यात्§ सभिको यदि ॥
म्लेच्छश्वपाकधूर्त्तानां कितवानां तपस्विनाम् ।
तत्कृताचारभेत्तॄणां निश्चये न तु राजनि¶ ॥

---

* क्षीविन इति पाठान्तरम् ।

† क्षीविनामिति पाठान्तरम् ।

‡ कितवा व्यवतिष्ठेरन्निति पाठान्तरम् ।

§ शुचिश्चेति पाठान्तरम् ।

¶ विद्यमाने इति शेषः ।

बृहस्पतिः ।

उभयोरपि सन्दिग्धौ कितवास्तु परीक्षकाः ।
यदा विद्वेषिणस्ते तु तदा राजा विचारयेत् ॥
एवं वादिकृतान्वादान् प्रपश्येत्प्रत्यहं नृपः ।
नृपाश्रयास्तथा चान्ये विद्वद्भिर्ब्राह्मणैः सह ॥

मनुः ।

अनेन विधिना राजा मिथो विवदतां नृणाम् ।
साक्षिप्रत्ययसिद्धानि कार्य्याणि समतां नयेत् ॥
उदितो विस्तरेणायं मिथो विवदमानयोः ।
अष्टादशसु मार्गेषु व्यवहारविनिर्णयः ॥
एव कार्य्याणि सर्व्वाणि कुर्व्वन् सम्यङ्महीपतिः ।
देशानलब्धांल्लिप्सेत लब्धांश्च परिपालयेत् ॥

इति विवादरत्नाकरे द्यूतसमाह्वयतरङ्गः ।



# अथ क्रियाभेदः ।

तत्र बृहस्पतिः ।

विवादोऽष्टादशोपेतः पूर्व्वोत्तरविशेषितः* ।
व्याख्यातस्त्वधुना सम्यक्क्रियाभेदान्निबोधत ॥

* विशेषत इति पाठान्तरम् ।

साधारण्यपरस्वत्वोपलक्षणफलेनोत्पत्तिप्रतिबन्धात्*। व्यवहारोऽप्येवमेव।

यत्र तूत्तर आधिन्यासं दत्त्वा कृतो विक्रयो वा मूल्यं गृहीत्वा कृतः, पूर्व्वौ तु न तथा, तत्रोत्तराधिविक्रयौ बलवन्तावित्याह† बृहस्पतिः।

उत्तरोत्तरबन्धेन प्राग्बन्धः‡ शिथिलो भवेत्।
यः पश्चिमः क्रियाकारः स पूर्व्वाद्बलवत्तरः॥
न्यासं कृत्वा ततश्चाधिं गृहीत्वाधिं करोति यः§।
विक्रयं वा क्रिया तत्र पश्चिमा बलवत्तरा॥

उत्तरोत्तरबन्धेनेत्यत्र बन्धशब्दस्य क्रयेऽपि तात्पर्य्यमग्रे तस्याप्युपसंहारात्तदेतत्कर्म्म दिनव्यवधाने।

यत्र त्वेकस्मिन्नेव दिवसे कदाचित्कार्य्यतया एकस्यैव वस्तुनः कस्यचिदाधिं कस्यचिद्विक्रयं कस्यचिद्दानं कुर्य्यात्तदा किं भवतीत्याकाङ्क्षामुद्दिश्य निर्णयं कुरुते बृहस्पतिरेव।

कृतश्चेदेकदिवसे विक्रयाधिप्रतिग्रहम्।
त्रयाणामपि सन्देहे कथं तत्र विचारणा॥
त्रीण्येव हि प्रमाणानि विभजेरन्¶ यथांशतः।

---

* स्वत्वोपलक्षणफलेनोत्पत्तिप्रतिबन्धादिति पाठान्तरम्।

† सिद्धावित्याहेति पाठान्तरम्।

‡ बन्धक इति बन्धन इति च पाठान्तरम्।

§ न्यासं कृत्वा परत्राधिं कृत्वा चाधिं करोति य इति पाठान्तरम्।

¶ भजेरंश्च इति पाठान्तरम्।

उभौ चार्धानुरूपेण त्रिभागेण प्रतिग्रहः ॥

बीत्येव प्रमाणानीति, तत्तत्क्रियाकर्त्तारो यथासम्भवं तत्त-द्रव्यं विभजेरन् । तत्रापि विशेषमाह उभौ चेत्यादिना, तेन तृतीयभागं प्रतिग्रहीता गृह्णीयात्, भागद्वये च एकमाधाता एकं विक्रेता, द्वावप्युभयस्तु आधेरबलवत्त्वेनाधिग्रहीतुर्न्यून भाग-माहः* ।

इति विवादरत्नाकरे क्रियाभेदतरङ्गः ।

---

## अथ प्रकीर्णकम् ।

तत्र बृहस्पतिः ।

एष वादिकृतः प्रोक्तो व्यवहारः समासतः ।
नृपाश्रयं प्रवक्ष्यामि व्यवहारं प्रकीर्णकम् ॥

नारदः ।

प्रकीर्णकः पुनर्ज्ञेयो व्यवहारो नृपाश्रयः ।
राज्ञामाज्ञाप्रतीघातस्तत्कर्मकरणन्तथा ।
पुरप्रधानसम्भेदः प्रकृतीनां तथैव च ।
पाषण्डिनैगमश्रेणिगणधर्मविपर्य्ययाः ॥
पितृपुत्रविवादश्च प्रायश्चित्तव्यतिक्रमः ।
प्रतिग्रहविलोपश्च लोप आश्रमिणामपि ॥

---

* आधेरबलवत्त्वेनाधिग्रहीतुर्न्यूनं भागमिच्छतीति पाठान्तरम् ।

वर्णसङ्करदोषश्च तद्वृत्तिनियमस्तथा ।
न दृष्टं यच्च पूर्व्वेषु सर्व्वं तत्स्यात्प्रकीर्णकम् ॥

पुरशब्दश्च* पुरवासिलोकपरः । नैगमा वणिजः, श्रेण्यः अन्यदेशपण्योपजीविनो वणिजः, तद्वृत्तिनियमस्तेषां वर्णानां वृत्तिनियमः,† पूर्व्वेषु विवादपदेषु यत्किञ्चिद्विधेयं निषेध्यञ्च पूर्व्वं नोक्तं, तत्प्रतिपादनाय प्रकीर्णकमारभ्यते ।

कात्यायनः ।

पूर्व्वोक्तादुक्तशेषं स्यादधिकारच्युतञ्च यत् ।
आहृत्य परतन्त्रार्थनिबद्धमसमञ्जसम्‡ ॥
दृष्टान्तत्वेन शास्त्रान्ते पुनरुक्तक्रियास्थितम्§ ।
अनेन विधिना यच्च वाक्यं तत्स्यात्प्रकीर्णकम् ॥
राजधर्म्मान्स्वधर्म्मांश्च सन्दिग्धानाञ्च भाषणम् ।
पूर्व्वोक्तादुक्तशेषञ्च सर्व्वं तत्स्यात्प्रकीर्णकम् ॥
सङ्घागकरशुल्कञ्च गर्त्ते देयं तथैव च¶ ।
सग्रामचौरभेदी च‖ परदाराभिमर्द्दनम्** ॥

---

* पुरशब्द इति पाठान्तरम् ।

† प्रवृत्तिनियम इति पाठान्तरम् ।

‡ तन्त्र तन्त्रार्थनिबन्धमसमञ्जसमिति परतन्त्राव निबन्धमसमञ्जसमिति च पाठान्तरम् ।

§ पुनरुक्तक्रियान्वितमिति पाठान्तरम् ।

¶ पुत्रसङ्गागशुल्कञ्च पितुर्देयं तथैव चेति पाठान्तरम् ।

‖ संग्रामचौरभेदश्चेति पाठोयुज्यते ।

** परदाराभिमर्द्दनं इति पाठान्तरम् ।

गोब्राह्मणजिघांसा च शस्यव्याघातकृत्तथा।
एतान्दशापराधांस्तु नृपतिः स्वयमन्विषेत्॥
निष्कृतीनामकरणमाम्नायेषु व्यतिक्रमः।
वर्णाश्रमविलोपश्च वर्णसङ्करलोपनम्॥
निधिर्निष्फल*वित्तञ्च† दरिद्रस्य धनागमः।
एतांश्चारैः सुविदितान्स्वयं राजा निवारयेत्॥
अनाम्नातानि कार्य्याणि क्रियावादांश्च वादिनाम्।
प्रकृतीनां प्रकोपश्च सङ्केतश्च परस्परम्॥
अशास्त्रविहितं यच्च प्रजायां सम्प्रवर्त्तते।
उपायैः सामभेदाद्यैरेतानि शमयेन्नृपः॥

याज्ञवल्क्यः।

कुलानि जातीः श्रेणीश्च गणाञ्जानपदानपि।
स्वधर्माच्चलितान्राजा विनीय स्थापयेत्पथि॥

कुलानि ब्राह्मणादीनां, जातिर्मूर्द्धाभिषिक्ताद्या। गणास्ताम्बूलिकादीनां, जानपदाः कारुकादयः‡। विनीय यथापराधं दण्डयित्वा।

नारदः।

राजा त्ववहितः सर्व्वानाश्रमान् परिपालयेत्।

---

* निष्फलेति पाठान्तरम्।

† निष्फलत्वञ्चेति पाठान्तरम्।

‡ कारवादय इति पाठान्तरम्।

उपायैः शास्त्रविहितैश्चतुर्भिः प्रकृतीस्तथा ॥
यो यो वर्णोऽवहीयेत* यश्चोद्रेकमनुव्रजेत् ।
तं तं दृष्ट्वा स्वतो मार्गोऽप्रच्युतं स्थापयेत्पथि ॥

पथि स्वमार्गे ।

वर्णाश्रमाणां संस्थानमानुपूर्व्व्यानुपूर्व्वशः ।
तेषां हेतुरवस्थाने राजा स्वप्रस्थितो† यदि ॥
राजमूलमिदं राष्ट्रं ब्रह्मचत्रपुरोगमम् ।
स्थिते राजनि तद्धर्म्मे दुराचाराश्च कुर्व्वते‡ ॥

देवीपुराणे ।

वेश्यादिभवने यस्य राष्ट्रे भुञ्जीत संयमी ।
ब्रह्मचारी व्रती यच्च वेश्यादिहयलीलतम् ॥
अत्र भुञ्जीत वै तत्र जायते लोकसंचयः ।
मद्याद्यैर्गर्हितैर्यंच सङ्करश्चैव योगिनाम्§ ॥
नृपराष्ट्रभयं तत्र कारणस्यान्यथागमः ॥
काषायवस्त्रभूयिष्ठो यतिवेशो यतिव्रतम् ।
सङ्गं वेश्यादिभिः कुर्य्यात्तदा लोकभयं भवेत् ॥
तस्माद्राजा समाचारं धर्म्माधर्म्मे व्यवस्थितः ।
सिद्धान्तवेदशास्त्राणां पालनाय नियोजयेत् ॥

---

* विहीयेतेति पाठान्तरम् ।

† सुप्रस्थित इति पाठान्तरम् ।

‡ उपचारान्निति पाठान्तरम् । कुर्व्वत इत्यार्थम् ।

§ सङ्कर श्चियोगिनामिति पाठान्तरम् ।

मनुः।

यद्यपि धर्म्मसमयात्प्रच्युतो धर्म्मजीवनः।
दण्डेनैव समाप्लोषयेत्स्वकाद्धर्म्माद्धि विच्युतम्*॥
वाणिज्यं कारयेद्वैश्यं कुसीदं कृषिमेव च।
पशूनां रक्षणञ्चैव शूद्रं दास्यं द्विजन्मनाम्†॥
वैश्यशूद्रौ प्रयत्नेन स्वानि कर्म्माणि कारयेत्।
तौ हि च्युतौ स्वकर्म्मभ्यः क्षोभयेतामिदं जगत्॥

समयः शास्त्राणां मर्य्यादा‡। धर्म्मजीवनो ब्राह्मणादिः। आप्लो-षयेद्दण्डेत्पीडयेदिति यावत्।

यमः।

यत्किञ्चित्कुरुते राजा शुभं वा यदि वाशुभम्।
भृत्यास्तदनुकुर्व्वन्ति नर्त्तको नर्त्तनं यथा।
तस्मात्पौराणिकान्धर्म्मान्निपुणैर्मन्त्रिभिः सह।
प्रणिधायानृपतिः सम्यग्ब्रह्मचक्रविवृद्धये॥

गौतमः।

द्वौ लोके धृतव्रतौ राजा ब्राह्मणश्च बहुश्रुतः। तयो-श्चतुर्विधस्य मनुष्यस्य चलनपतनसर्पिणामायत्तं§ जीवनं प्रसूतिरक्षणमसङ्करो धर्म्मः।

---

* स्वकाद्धर्म्माद्विच्युतमिति पाठान्तरम्।

† पशूनां रक्षणं शूद्रं दास्यञ्चैव द्विजन्मनामिति पाठान्तरम्।

‡ शास्त्रमर्य्यादेति पाठान्तरम्।

§ चलनपतनसमर्पणानामायत्तमिति पाठान्तरम्।

द्वौ राजबहुश्रुतब्राह्मणौ धृतव्रतौ परेषां धर्म्मरक्षणव्रतसङ्कल्पौ, चतुर्विधस्य ब्राह्मणादिभेदवतः, चलनाः सङ्करजातयः, पतनाः पक्षिजातयः, सर्पिणः* कीटजातयः ।

वशिष्ठः ।

> त्रयो वर्णा ब्राह्मणस्य निदेशे वर्त्तेरन् ब्राह्मणो धर्म्मान्
> प्रब्रूयाद्राजा चानुशिष्यात् ।

वर्णग्रहणमुपनयनादपि प्राङ्गिदेशवर्त्तित्वप्राप्त्यर्थम् । निदेश-आज्ञा ।

हारीतः ।

> *निग्रहानुग्रहपालनेषु च पर्य्यः सर्व्वेषाममर्य्यादिनां†*
> परदारपरद्रव्यापहारिणां राजा शास्ता भवत्येवं
> ह्याह गुरुरात्मवतां राजा शास्ता दुरात्मनाम् । अथ
> प्रच्छन्नपापानां‡ शास्ता वैवस्वतो यमः । गुरुभिर्येन
> शास्यन्ते राज्ञा वा गूढकिल्बिषाः । ते नरा यमदण्डेन
> शास्ता यान्त्यधमां गतिम् ॥

पर्य्यप्रधानमिति शेषः, मर्य्यादाभेदनस्यैव परद्रव्याद्यपहरण-प्रपञ्चः । आत्मवान् कृतान्यायाचरणे सानुशयः, गुरुश्च प्रतिकाराधिकृतः§ ।

---

* सर्पणा इति पाठान्तरम् ।

† मर्य्यादाभेदिनामिति पाठान्तरम् ।

‡ प्रच्छन्नपापानामिति पाठान्तरम् ।

§ प्रतिकारकोऽधिकृत इति पाठान्तरम् ।

तमः।

शास्त्रैरधिकृतानामिन्द्रियदौर्बल्ये* विप्रतिपन्नानां शास्ता निर्द्दिशमादिशेद्यथाकर्म्म यथोक्तं तस्य चेच्छास्त्रमतिवर्त्तेरन् राजानं गमयेद्राजपुरोहितं धर्म्मार्थकुशलं सुब्राह्मणं नियुञ्ज्याद्बलविशेषेण परदारस्वर्ज्जं नियमैरुपसान्त्वयेत्†। इतरेषां वर्णानामाप्राणवियोगात्समवेक्ष्य तेषां कर्म्माणि राजा दण्डं प्रणयेत्। शास्ता समावर्त्तनात्प्रागाचार्य्यः, ऊर्द्ध्वं पिता पुत्रस्य, यस्य तु शुश्रूषां करोति स शास्ता।

शं प्रायश्चित्तं, यथाकर्म्म कर्म्मानुरूपं, महत्यपराधे महान्त-
'चाल्पम्। . शास्त्रं शासनोपायभूतं वचनम्। स पुरोहितं
ाणं नियुञ्ज्यान्निर्द्दिशं कारयेत्।

ाज्ञवल्क्यः।

ज्ञात्वापराधं देशञ्च कालं बलमथापि वा।
वयः कर्म्म च वित्तञ्च‡ दण्डं दण्ड्येषु कल्पयेत्॥

नुः।

अनुबन्धं परिज्ञाय कालदेशौ च तत्त्वतः।
सारापराधौ चालोक्य दण्डं दण्ड्येषु पातयेत्॥

---

* इन्द्रियदौर्बल्यादिति पाठान्तरम्।

† उपशीक्षयेदिति उपशोषयेदिति च पाठान्तरम्।

‡ चरित्रञ्चेति पाठान्तरम्।

सारपदं शक्तिपरम्* । अनुबन्धी मन्दक्रियावृत्तिः ।

विष्णुः ।

द्वितीयेऽपराधे न कस्यचित्क्षमेत ।

मनुः ।

पिताचार्य्यः सुहृन्माता भार्य्या पुत्रः पुरोहितः ।
नादण्ड्यो नाम राज्ञोऽस्ति यः स्वधर्म्मे न तिष्ठति ॥

याज्ञवल्क्यः ।

ऋत्विक्पुरोहितामात्यपुत्रसम्बन्धिबान्धवाः ।
धर्म्माद्विचलिता दण्ड्या निर्वास्या राजहिंसकाः ॥

शङ्खलिखितौ ।

अदण्ड्यौ मातापितरौ स्नातकपुरोहितौ परिव्राजकवानप्रस्थौ जन्मकर्म्मश्रुतशीलशौचाचारवन्तश्च एते हि धर्म्मप्रतिकरा† राज्ञः स्त्रीबालवृद्धास्तपस्विनस्तेभ्यः क्रोधं नियच्छेत् ।

जन्म शुद्धकुलता, कर्म्म अग्निहोत्रादि, श्रुतं वेदवेदाङ्गगोचरं ज्ञानम्, शौचं बाह्यमाभ्यन्तरञ्च, एतद्युक्ता एतेऽप्यदण्ड्याः । यतस्ते राज्ञो धर्म्मप्रतिकराः षड्भागरूपधर्म्मार्जनेनोपकुर्व्वन्ति । स्त्रीबालवृद्धा इत्यनेन स्नातादीनामप्यबालानामदण्ड्यत्वमुक्तम् ।

कात्यायनः

आचार्य्यस्य पितुर्मातुर्बान्धवानां तथैव च ।

---

* शक्तिमात्रपरमिति पाठान्तरम् ।

† धर्म्मप्रतीकारा इति पाठान्तरम् ।

एतेषामपराधे तु दण्डोनैव विधीयते ॥

एवञ्चात्र पित्रादीनां यद्दण्ड्यत्वाभिधानं तद्वाग्दण्डमात्रमाश्रित्य, यच्चादण्ड्यत्वाभिधानं तदर्थशरीरदण्डाभावाभिप्रायमित्यविरोधः* ।

तथाच बृहस्पतिः ।

गुरून् पुरोहितान् पूज्यान् वाग्दण्डेनैव दण्डयेत् ।
विवादिनोनरांश्चान्यान्दोषिणोऽर्थेन दण्डयेत् ॥
महापराधयुक्तांश्च† वधदण्डेन शासयेत् ।

कात्यायनः ।

मित्रादिषु प्रयुञ्जीत वाग्दण्डं धिक् तपस्विनि ।
यथोक्तं तस्य तत्कुर्य्यादनुक्तं साधु कल्पितम् ॥

बृहस्पतिः ।

वाग्धिग्दण्डं वधश्चैव चतुर्द्धा कल्पितं दमम् ।
पुरुषं दोषविभवं ज्ञात्वा सम्परिकल्पयेत् ॥
स्वल्पेऽपराधे वाग्दण्डं धिग्दण्डं पूर्व्वसाहसे ।
मध्ये तु रोधनं‡ दण्डं§ राजद्रोहे च बन्धनम् ॥
निर्व्वासनं विरोधेऽपि कार्य्यमात्महितैषिणा ।
योज्याः समस्ताश्चैकस्य महापातककारिणः ॥

---

* तदर्थशरीरदण्डाभिप्रायमिति पाठान्तरम् ।

† महापराधे युक्तांश्चेति पाठान्तरम् ।

‡ रोधनमिति पाठान्तरम् ।

§ मध्ये मरेद्धनदण्डमिति पाठान्तरम् ।

मनुः ।

वाग्दण्डं प्रथमं कुर्य्याद्धिग्दण्डं तदनन्तरम् ।
तृतीयं धनदण्डञ्च वधदण्डमतः परम्* ॥
वधेनापि यदा त्वेनं निग्रहीतुं न शक्नुयात् ।
तदैव† सर्व्वमेवैतत्प्रयुञ्जीत चतुष्टयम् ।

वाग्दण्डो न त्वयेदं सम्यक्कृतमित्यादि । धिग्दण्डो धिक् त्वां पापीयांसमकार्य्यकारिणमित्यादि । वधेनापीति ताडनेनापीत्यर्थः ।

बृहस्पतिः ।

वाग्दण्डश्चैव धिग्दण्डो विप्रायत्तावुभौ स्मृतौ ।
अर्थदण्डवधावुक्तौ राजायत्तावुभावपि ॥

विप्रायत्तौ प्राड्विवाकायत्तौ ।

मनुः ।

अधार्म्मिकं त्रिभिर्न्यायैर्निगृह्णीत प्रयत्नतः ।
निरोधनेन बन्धेन विविधेन वधेन च ॥
बन्धनानि च सर्व्वाणि राजमार्गे निवेशयेत् ।
दुःखिता यत्र दृश्येरन्विकृताः पापकारिणः ॥
दश स्थानानि दण्डस्य मनुः स्वायम्भुवोऽब्रवीत् ।
त्रिषु वर्णेषु यानि स्युरक्षतो ब्राह्मणो व्रजेत् ॥
उपस्थमुदरं जिह्वा हस्तौ पादौ च पञ्चमम् ।

* वधदण्डमनन्तरमिति पाठान्तरम् ।
† तदैषिति पाठान्तरम् ।

ुर्नासा च कर्णौ च धनं देहस्तथैव च ॥
प्रकरणतयोरं, न्यायैर्नियामकैः। निरोधनं बन्ध-
। धारणम्, बन्धो निगड़ादिभिरस्वातन्त्र्यापादानं,
वधेन ताड़नादिरूपेण, बन्धनानि बन्धगृहाणि
[। स्थानशब्दो विषयोपलक्षकः। अथवा शरीरपीड़ा-

।

तः।
हस्ताङ्घ्रिलिङ्गनयनं जिह्वाकर्णौ च नासिका।
ग्रीवापादांसस्कन्धललाटौष्ठगुदं कटिः॥
स्थानान्येतानि दण्डस्य निर्दिष्टानि चतुर्दश।
ललाटाङ्को ब्राह्मणस्य नान्यो† दण्डो विधीयते॥
ानानि वदतो मनोरधिकस्थानव्यवच्छेदे न तात्पर्य्यम्।

।
सर्व्वेषामेव वर्णानामन्योन्यस्यापराधिनाम्।
शरीरं धनसंयुक्तं धर्म्मे दण्डं प्रकल्पयेत्॥
जगत्सर्व्वमिदं हन्याद्ब्राह्मणस्य न तत्समम्।
तस्मात्तस्य वधं राजा मनसापि न चिन्तयेत्॥
अवध्यान् ब्राह्मणानाहुः सर्व्वापात्स्वयं विधिः।

रीतः।
न त्वङ्गच्छेदं विप्रस्य प्रवदन्ति मनीषिणः।

* शरीरभेदाभिदयस्य इति शरीरपीडाभिदयस्य इति च पाठान्तरम्।

† नान्य इति पाठान्तरम्।

तपसा चेष्टया चैव ब्राह्मणः पूयते सदा ॥

मनुः ।

न जातु ब्राह्मणं हन्यात्सर्व्वपापेष्वपि स्थितम्* ।
राष्ट्रादेनं बहिः कुर्य्यात्समग्रधनमक्षतम् ॥
न ब्राह्मणवधाद्भूयानधर्म्मो भुवि विद्यते ।
तस्मादस्य वधं राजा मनसापि न चिन्तयेत् ॥

बृहस्पतेर्ब्राह्मणे ललाटाङ्काभिधानं मनोश्च तस्यैव निर्व्वासनाभिधानञ्च विकल्पेन समाधेयम् ।

गौतमः ।

स एव बहुश्रुतो भवति वेदवेदाङ्गविद्याविद्वाकोवाक्येतिहासपुराणेषु कुशल†स्तदपेक्षस्तद्वृत्तिश्चत्वारिंशत्संस्कारैः संस्कृतस्त्रिषु कर्म्मस्वभिरतः षट्सु समयाचारेष्वभिविनीतः षड्भिः परिहार्य्यो राज्ञावध्यश्चादण्ड्यश्चावहिः कार्य्यश्चापरिवाद्यश्चापरिहार्य्यश्चेति ।

वाकोवाक्यमुक्तिप्रत्युक्तिमद्वाक्यं‡ तदपेक्षस्तद्विरोध्याचारशून्यः§ तद्वृत्तिः विरोधिव्यापाराशीलः.चत्वारिंशत्संस्काराः—गर्भाधानं १

---

* सर्व्वपापेष्ववस्थितमिति सर्व्वपापेष्ववस्थितमिति च पाठान्तरम् ।

† वाकोवाक्येतिहासपुराणे कुशल इति वाकोवाक्येतिहासपुराण कुशल इति च पाठान्तरम् ।

‡ वाकोवाक्यं वाक्यमुक्तिप्रयुक्तिमद्वाक्यमिति उक्तिप्रत्युक्तिमद्वाक्यमिति च पाठान्तरम् ।

§ तद्विरोधाचारशून्य इति पाठान्तरम् ।

पुंसवनं २ सीमन्तोन्नयनं ३ जातकर्म्म ४ नामकरणं ५ अन्नप्राशनं ६ चौड़ं* ७ उपनयनव्रतं ८ चत्वारि वेदव्रतानि १२ सहधर्म्मचारिणीसंयोगः १३ पञ्चानां यज्ञानामनुष्ठानमेतदेव पितृमनुष्यभूतब्राह्मणानाम् १४ एतेषाञ्चाष्टकाः १७ पार्व्वणश्राद्धम् १८ श्रावण्याग्रहायणीचैत्राश्वयुजीति पाकयज्ञसंस्थाः २२ अग्न्याधेयं २३ अग्निहोत्रं २४ दर्शपौर्णमासौ २५ चातुर्म्मास्यानि २६ आग्रायणेष्टिः २७ रूढ़पशुबन्धः २८ सौत्रामणीति सप्तहविर्यज्ञसंस्थाः† २९ अग्निष्टोमः ३० अग्निष्टोमोक्थ्यौ षोड़शी ३१ वाजपेयः ३२ अतिरात्रः ३३ आप्तोर्याम इति सप्तसंस्थाः ४० चत्वारिंशत्संस्कारा इति गौतमवाक्ये द्रष्टव्याः‡ ब्रह्मचारिकाण्डे। त्रिषु दानाध्ययनयागेषु। षट्सु यज्ञाध्ययनदानयाजनाध्यापनप्रतिग्रहेषु। षड्भिर्वधादिभिः परिहार्य्यो वधाद्यर्होऽपि न वधादिना शास्यः। एतच्च प्रमादकृतपातकादिविषयमिति पारिजातः।

तथा।

*राजा सर्व्वस्येष्टे ब्राह्मणवर्ज्जम्।*

वशिष्ठः।

ब्राह्मणो वेदमाढ्यं करोति, ब्राह्मण आपद उद्धरति, तस्माद्ब्राह्मणोऽनाद्यः सोमो राजा भवतीति ह प्रेत्य

* चूड़ाकरणमिति पाठान्तरम्।

† सप्तविध संस्था इति सप्तहविर्यज्ञसंस्था इति च पाठान्तरम्।

‡ गौतमोक्तं द्रष्टव्यमिति पाठान्तरम्।

चाभ्युदयिकमितीह विज्ञायते ।

आपद उद्धरति आपदो मोगध्यात्* । तदुक्तं मोगध्यं† सर्व्वापदां निष्ठेति । अनाद्यः अनादिः क्वचिन्नाध इति पाठः तत्राप्युपरिवर्त्तीत्यर्थः ।

शङ्खलिखितौ ।

सर्व्वत्र त्रयाणां वर्णानां धनहारकारावधबन्धाः क्रियास्वोपरोधौ महत्स्वपि पातकेषु विवासोऽङ्ककरणं ब्राह्मणस्य प्रायश्चित्तानि वा शोधनमपीड्यो हि ब्राह्मणः ।

धनहारो दण्डः, कारा बन्धनगृहम्, उपरोधो धारणम् । प्रायश्चित्तपचे अङ्काकरणता अपीड्यता च‡ ।

बृहस्पतिः ।

महापातकयुक्तोऽपि न विप्रो वधमर्हति ।
निर्व्वासनाङ्कन मौण्ड्य तस्य कुर्य्यान्नराधिपः ॥

मनु ।

ब्रह्महा च सुरापश्च तस्करो गुरुतल्पग. ।
एते सर्व्वे पृथग्ज्ञेया महापातकिनो नराः ॥
चतुर्णामपि चैतेषां प्रायश्चित्तमकुर्व्वताम् ।
शरीरधनसंयुक्तं§ धर्म्म्य दण्ड प्रकल्पयेत् ॥

* मौग्ध्यादिति पाठान्तरम् ।

† मौग्ध्यमिति पाठान्तरम् ।

‡ अङ्ककरणादपीड्यत्वेति पाठान्तरम् ।

§ शारीरं धनसंयुक्तमिति पाठान्तरम् ।

गुरुतल्पे भग' कार्य्यं, सुरापाने सुराध्वजः।
स्तेये तु श्वपदं कार्य्यं ब्रह्महण्यशिराः पुमान्॥
असंभोज्या असंयाज्या असपाठ्याविवाहिनः।
चरेयुः पृथिवीं सर्व्वां दाप्यास्तूत्तमसाहसम्*।
ज्ञातिसम्बन्धिभिस्त्वेते त्यक्तव्याः क्षतलक्षणाः।
निर्दया निर्नमस्कारास्तन्मनोरनुशासनम्॥
प्रायश्चित्तन्तु कुर्व्वाणाः पूर्व्वे वर्णा यथोदितम्।
नाङ्क्या राज्ञा ललाटेषु दाप्यास्तूत्तमसाहसम्॥
आगःसु ब्राह्मणस्यैव कार्य्यो मध्यमसाहसः।
विवास्यो वा भवेद्राष्ट्रात्सद्रव्यः सपरिच्छदः॥
इतरे कृतवन्तस्तु पापान्येतानि धर्म्मतः।
सर्व्वस्वहानिमर्हन्ति कामतस्तु प्रवासनम्॥

तस्करोऽत्र सुवर्णस्तेयी, पृथक् प्रत्येकम्। गुरुतल्पग† इत्यादौ सर्व्वत्र ललाटे इत्यध्याहार्य्यम्। असंभोज्यास्तैर्मिलिता भोगगोष्ठी‡ न कार्य्येत्यर्थः। असम्पाठ्या अध्यापनानर्हाः§, असंयाज्याः याजनानर्हाः, अविवाहिनः विवाहानधिकारिणः, ज्ञातयः पितृसम्बन्धिनः, सम्बन्धिनो मातृसम्बन्धाः, क्षतलक्षणाः कृताङ्काः, निर्दया व्याधियोगेऽपि सद्भिर्दयाविषयी-

* दीना सर्व्वधर्म्मबहिष्कृता इति पाठान्तरम्।

† गुरुतल्प इति समीचीन पाठ।

‡ भोगपङ्क्तिरिति पाठान्तरम्।

§ अपाठनीया इति पाठान्तरम्।

कर्त्तुमनर्हाः, निर्नमस्कारा ज्येष्ठादिगुणयोगेऽपि नमस्कारानर्हाः।

तथाच विष्णुः।

तस्य च ब्रह्महत्यायामशिरस्कं पुरुषं ललाटे कुर्य्यात् सुराध्वजं सुरापाने श्वपदं स्तेये भगं गुरुतल्पगमने।

यमः।

ब्राह्मणस्यापराधेषु चतुर्व्वेवं विधीयते।
शिरसो मुण्डनं दण्डं पुरान्निर्वासनं तथा॥
प्रख्यापनार्थं ग्रामस्य प्रयाणं गर्दभेन तु।
ललाटे चाङ्ककरणं कुर्य्याद्राजा यथाविधि॥

बौधायनः।

ब्राह्मणस्य भ्रूणहत्यागुरुतल्पसुवर्णस्तेयसुरापानेषु कबन्ध* भगश्वपदध्वजांस्तप्तेनायसेन ललाटेऽङ्कयित्वा स्वविषयान्नि† र्व्वासनम्।

ध्वजः सुराध्वजः।

नारदः।

ब्राह्मणस्यापराधेषु चतुर्ष्वङ्को विधीयते।
गुरुतल्पे सुरापाने स्तेये ब्राह्मणहिंसने॥
गुरुतल्पे भगः कार्य्यः सुरापाने सुराध्वजः।
स्तेये च श्वपदं कृत्वा शिखिनन्तेन पूरयेत्॥

---

* पुरुषेति पाठान्तरम्।

† स्वविषयात्तीर्थमिति पाठान्तरम्।

अशिराः पुरुषः कार्य्यो ललाटे द्विजघातिनः ।
असम्भाष्यस्तु कर्त्तव्यस्तन्मनोरनुशासनम् ॥

आपस्तम्बः ।

नियमातिक्रमिणं ब्राह्मणमन्यं वा रहसि बन्धयेदास-
मापत्तेःॱरसमापत्तौ नाश्यः ।

नियमातिक्रमिणं ब्राह्मणनियमस्यातिक्रमेण विहितस्याकर्त्ता-
ऽन्यमकृत्यकारिणं ब्राह्मणं रहस्स्थाने बन्धयेदासमापत्तेः,
यावदेवं न करिष्यामीति तस्य सम्प्रतिपत्तिर्भवति । असमा-
पत्तौ असम्प्रतिपत्तौ नाश्यः निर्वास्य इत्यर्थः ।

आचार्य्य ऋत्विक् स्नातको राजेति त्राणं स्युरन्यत्र वध्यात्।
आचार्य्यादयो दण्ड्यानां त्राणं त्रातारः स्युर्वध्यं परित्यज्य ।

यमः ।

स्तेनाः सुरापा ब्रह्मघ्ना गुरुदाराभिगामिनः ।
न सन्ति यस्य राष्ट्रेषु स राजा शक्रलोकभाक् ॥

मनुः ।

नाददीत नृपः साधुर्महापातकिनो धनम् ।
आददानस्तु तल्लोभात्तेनाधर्म्मेण लिप्यते ॥
अप्सु प्रविश्य† तं दण्डं वरुणायोपकल्पयेत्‡ ।

* धारयेदासमापत्तेरिति पाठान्तरम् ।
† प्रवेश्येति पाठान्तरम् ।
‡ वरुणायोपपादयेदिति पाठान्तरम् ।

श्रुतविद्योपसम्पन्ने* ब्राह्मणे प्रतिपादयेत् ॥
ईशो दण्डस्य वरुणो राज्ञो दण्डधरो हि सः ।
ईशः सर्व्वस्य जगतो ब्राह्मणो वेदपारगः ॥
यत्र वर्ज्जयते राजा ब्राह्मणेभ्यो धनागमम् ।
तत्र कालेन जायन्ते मानवा दीर्घजीविनः ॥
निष्पद्यन्ते च शस्यानि यथोक्तानि विशाम्पते ।
बालाश्च न प्रमीयन्ते विकृतं जायते न च ॥

विकृतं करचरणादिहीनत्वम् ।

यमः ।

पतितस्य धनं हृत्वा राजा पर्षदि दापयेत् ।
भृत्येभ्योऽन्नं स्मरन्धर्म्मं प्राजापत्यमिति श्रुतिः ॥

इति विवादरत्नाकरे प्रकीर्णकतरङ्गः ।

---

## अथ तरशुल्कः* ।

तत्र वशिष्ठः ।

संयाने दशवाहा वाहिनी द्विगुणकरणा स्याद्दशपुरुष
वती प्रत्येकं प्रपाः स्युः पुंसाञ्चावरार्द्धं वाह वहेत्,

---

* श्रुतविद्योपपन्ने चेति पाठान्तरम् ।

* तरषशुल्क इति पाठान्तरम् ।

अध्यर्द्धाः स्त्रियः स्युस्तरोऽष्टौ* माषाः शरमध्याया अशर-
मध्यायाः पादः कार्षापणस्य निरुदकस्तरो माष्यः ।

संयात्यनेनेति व्युत्पत्त्या संयानशब्दो नदीपरः तत्र वाहिनी नौः, वाहयन्तीति वाहाः, ते दश यस्यां सा दशवाहा, सा चासौ वाहिनी चेति दशवाहावाहिनी†। द्विगुणकरणा द्विगुणानि अरित्रादीनि‡ यस्याः सा नौस्तथा एकविधा नौः कार्या। तथा दशपुरुषवती वाहकादन्ये दश पुरुषाः, तेषां प्रयोजनमाह त एव प्रयाः स्युः त एव दश वाहानां प्रयाः प्रकर्षेण मरि-पालकाः स्युः। अस्यां नावि यावान् भार आरोप्यस्तमाह पुंसामित्यादिना, सा नौर्यावन्तं भारं वहति तदपेक्षयावरार्द्ध-मवरं न्यूनमर्द्धं यस्मिन्वाहे स वाह्यो भारः। तेन यावतः पुरुषानसौ परमविधुरा वहति तावन्न तु समधिकमा-रोप्यमित्यर्थः। अध्यर्द्धाः स्त्रियः पुरुषापेक्षया तासामति-भीरुत्वात्तरः शुल्कः माषः पुराणस्य विंशतितमो भागः। शरमध्यायाः यस्यां नद्यां धनुष्मता क्षिप्तशरो मध्ये पतति तस्याः, अशरमध्याया यां शरोलङ्घयति तस्याः, पादः कार्षापणस्य चतुर्भागः। निरुदकोऽल्पोदकः, माष्यः माषपरिमाणः।

---

* करोऽष्टाविति पाठान्तरम्।

† अत्र समासकरणमनावश्यकं, असमासे च दशवाहवाहिनीति पदं स्यादिति चिन्त्यम्।

‡ अत्र द्विगुणानि करणानि अरित्रादीनि यस्या इति विग्रहो युक्तः। अरित्रादीनि दण्डादीनीति बोध्यम्।

मनुः ।

पणं याने तरं दद्यात्पौरुषेऽर्द्धपणन्तरम् ।
पादं पशुश्च योषिच्च पादार्द्धं रिक्तिकः* पुमान् ॥

यानमत्र रिक्तं रथादि, पौरुषः पुरुषवाह्यो भारः, पादार्द्धं पणस्याष्टमो भागः ।

तथा ।

भाण्डपूर्णानि यानानि तार्य्यं† दाप्यानि सारतः ।
रिक्तभाण्डानि यत्किञ्चित्पुमांसश्चापरिच्छदाः‡ ॥

सारतो द्रव्योत्कर्षापकर्षापेक्षया, यत्किञ्चिदल्पम् ।

तथा ।

दीर्घाध्वनि यथादेशं यथाकालं तरो भवेत् ।
नदीतीरेषु तद्विद्यात्समुद्रे नास्ति लक्षणम् ॥
गर्भिणी तु द्विमासादि§स्तथा प्रव्रजितो मुनिः ।
ब्राह्मणा लिङ्गिनश्चैव न दाप्यास्तारिकं तरे ॥

वशिष्ठः ।

अकरः श्रोत्रियो राजा पुमाननाथः प्रव्रजितो बालवृद्धतरुणप्रजाताः प्रागमिकाः कुमार्यो मृतपत्न्यश्च ।

---

* रिक्तक इति पाठान्तरम् ।

† तरमिति पाठान्तरम् ।

‡ ममाश्चास्यापरिच्छद इति ममाषश्चापरिच्छद इति च पाठान्तरम् ।

§ गर्भिणी प्रविमासादिरिति पाठान्तरम् ।

बाहुभ्यां तरन्* शतगुणं दाप्यः ।

राजा पुमाननाथश्च स्वजनरहितो रोगार्त्तो वा तरुणप्रजाता-श्चिरप्रसूताः प्रागमिको लेखहारकादिः† मृतपत्नी विधवाः ।

विष्णुः ।

तरिकश्च‡ स्थलशुल्कं गृह्णन्दश पणान्दाप्यः । ब्रह्मचारिवानप्रस्थभिक्षुगुर्व्विणीतीर्थानुसारिणां शुल्कमाददानश्च तच्च तेषां जह्यात् ।

तरिकस्तरपण्यशुल्कनियुक्तः, आददानश्च दाप्य इत्यनुषङ्गः, तच्च तरशुल्कं तेषां ब्रह्मचार्य्यादीनां जह्यात् त्यजेत् ।

मनुः ।

यन्नावि किञ्चिद्दासानां विशीर्य्येतापराधतः ।
तद्दासैरेव§ दातव्यं समागम्य स्वतोऽंशतः ।
एष नौयायिनामुक्तो व्यवहारविनिर्णयः ।
दासापराधतस्तोये दैविके नास्ति निग्रहः ॥

दासा नौवाहननियुक्ताः कैवर्त्तादयः ।

इति विवादरत्नाकरे तरशुल्कतरङ्गः ।



* उत्तरन्निति पाठान्तरम् ।

† व्यवहारकादिरिति पाठान्तरम् ।

‡ तरिक इति पाठान्तरम् ।

§ तदा तैरेवेति पाठान्तरम् ।

# अथ निधिः ।

। तत्र मनुः ।

ममायमिति यो ब्रूयान्निधिं सत्येन हेतुतः* ।
तस्याददीत षड्भागं राजा द्वादशमेव वा ॥
अनृतन्तु वदन्दाप्यः† स्ववित्तस्यांशमष्टमम् ।
तस्यैव वा निधानस्य संख्ययाल्पीयसीं कलाम् ॥

निधिरत्र पूर्व्वनिखातचिरभ्रष्टं धनम्। षड्भागद्वादशभागयोर्मं-मायमिति वक्तृगुणवत्तागुणवत्ताभ्यां विकल्प. । अल्पीयसीं कलां यावत्या नावसीदति,अल्पीय.कलाग्रहणञ्च सर्व्वस्यापरिज्ञानपक्षे।

विष्णु. ।

स्वनिहिताद्राज्ञे ब्राह्मणवर्ज्जं द्वादशमंशं दद्युः परनि-हितं स्वनिहितमिति वदन्तस्तत्समं दण्डमावहेयुः ।

नारदः ।

स्वमप्यर्थं तथा नष्टं लब्ध्वा‡ राज्ञे निवेदयेत् ।
गृह्णीयात्तु ततः शुद्धमशुद्धं स्यात्ततोऽन्यथा§ ।

अशुद्धं¶ स्तेयशङ्कया भवेदित्यर्थः ।

इति विवादरत्नाकरे निधितरङ्गः ।

---

* मानव इति पाठान्तरम् ।

† दण्ड्य इति पाठान्तरम् ।

‡ लब्धमिति पाठान्तरम् ।

§ शुद्ध स्यादशुद्धोऽन्यथेति पाठान्तरम् ।

¶ अपद इति पाठान्तरम् ।

# अथ परनिहितः ।

तत्र वशिष्ठः ।

अप्रज्ञायमानं वित्तं योऽधिगच्छेत्, राजा तद्धरेदधिगन्त्रे षष्ठमंशं* प्रदाय । ब्राह्मणश्चेदधिगच्छेत् षट्कर्मसु वर्त्तमानो न राजा हरेत् ।

अप्रज्ञायमानमज्ञायमानस्वामिकमस्वामिकञ्च ।

गौतमः ।

निध्यधिगमो न राजधनं ब्राह्मणस्याभिरूपस्य, अब्राह्मण आख्याता षष्ठमंशं लभत इत्येके ।

अभिरूपस्य षट्कर्मनिरतस्य†, अब्राह्मणोऽभिरूपब्राह्मणादन्यः आख्याता कथयिता ।

नारदः ।

परेण निहितं लब्ध्वा राजन्युपहरेन्निधिम् ।
राजगामी निधिः सर्व्वः सर्व्वेषां ब्राह्मणादृते ॥
ब्राह्मणोऽपि निधिं लब्ध्वा क्षिप्रं राजनि वेदयेत्‡ ।
तेन दत्तन्तु भुञ्जीत स्तेनः स्यादनिवेदने ॥

याज्ञवल्क्यः ।

राजा लब्ध्वा निधिं दद्याद्द्विजेभ्योऽर्द्धं द्विजः पुनः ।

---

* षष्ठमंशमिति पाठान्तरम् ।
† षट्कर्मनिरतस्येति पाठान्तरम् ।
‡ राज्ञे निवेदयेदिति पाठान्तरम् ।

विद्वानशेषमादद्यात्स सर्व्वस्य प्रभुर्यतः ॥
इतरेण निधौ लब्धे राजा षष्ठांशमाहरेत् ।
अनिवेदितविज्ञातं* दाप्यस्तद्दण्डमेव च ॥

इतरेणाविदुषा ।

राजधर्म्मे विष्णुः ।

निधिं लब्ध्वा तदर्द्धं ब्राह्मणेभ्यो दद्याद्दत्त्वा द्वितीयमर्द्धं कोषे प्रवेशयेत् । निधिं लब्ध्वा ब्राह्मणः स्वयमादद्यात् । क्षत्रियश्चतुर्थमंशं राज्ञे दद्याच्चतुर्थमंशं ब्राह्मणेभ्यो दद्यादर्द्धमादद्यात् । वैश्यश्चतुर्थमंशं राज्ञे दद्याद्ब्राह्मणेभ्योऽर्द्धमंशमंशं स्वयमादद्यात् ।

ब्राह्मणेभ्योऽर्द्धं दद्यादित्यनुषञ्जनीयम् । अंशं परिशिष्टं स्वयमादद्यात् ।

तथा ।

शूद्रस्त्ववाप्तं द्वादशधा विभज्य पञ्चमं राज्ञे दद्यात् ब्राह्मणेभ्योंऽशद्वयमेव दद्यादवशिष्टं सर्व्वं स्वयमादद्यात् ।

विष्णुः ।

आकरेभ्यः† सर्व्वमादद्यात् ।

मनुः ।

---

* अनिवेदितविज्ञाते इति पाठान्तरम् ।

† आकरेभ्य इति पाठान्तरम् ।

 

यस्तु* पश्येन्निधिं राजा पुराणं निहितं क्षितौ ।
तस्माद्द्विजेभ्यो दत्त्वार्धमर्धं कोषे निवेशयेत् ।
निधीनान्तु† पुराणानां धातूनामाकरस्य च ।
रक्षणादर्धभाग्राजा भूमेरधिपतिर्हि सः ॥

पुराणानां चिरन्तनानां न तु विद्यमानस्वामिकानाम् । आकरा माणिक्यादिभूमयः । एतदुत्पन्नं द्रव्यमपि आकर एव अतश्च धात्वाकरयोरन्योऽन्योत्पादितस्य द्रव्यस्यार्धं राजा गृह्णीयात् ।

वशिष्ठः ।

उद्वाहकारिणस्त्वागमयेत्कस्य न सह विवाहो युज्यते
इति वर्णविभागप्रतिपादनाय‡ सम्प्रदानं रक्षेत् ।

आगमयेदातुशुद्धिं जानीयात् ।

इति विवादरत्नाकरे परनिहिततरङ्गः ।

—:०:—

* यत्त्विति पाठः क्वचिद् दृश्यते ।

† निधीनां चेति पाठान्तरम् ।

‡ उद्वाहकारिणस्त्वागमयेत् कस्य न सह विवाहो युज्यते इति वर्णमात्रप्रतिपादना-येति, उद्वाहकारिणस्त्वागमयेत्कस्य येन सह विवाहो युज्यते इति वर्णमात्रप्रतिपादनायेति च पाठान्तरम् ।

# अथ दण्डप्रणयनविधिः ।

तत्र मनुः ।

तदर्थं सर्व्वभूतानां गोप्तारं धर्म्ममात्मजम् ।
ब्रह्मतेजोमयं दण्डमसृजत्पूर्व्वमीश्वरः ॥
तस्य सर्व्वाणि भूतानि स्थावराणि चराणि च ।
भयाद्भोगाय कल्पन्ते स्वधर्म्मान्न चलन्ति च ॥
स राजा पुरुषो दण्डः स नेता शासिता च सः ।
चतुर्णामाश्रमाणाञ्च धर्म्मस्य प्रतिभूः कृतः* ॥
दण्डः शास्ति प्रजाः सर्व्वा दण्डएवाभिरक्षति† ।
दण्डः सुप्तेषु जागर्त्ति दण्डं धर्म्मं विदुर्बुधाः ॥

तथा ।

यत्र श्यामो लोहिताक्षो धर्म्मश्चरति पापहा ।
प्रजास्तत्र विवर्द्धन्ते नेता चेत्साधु पश्यति ॥

तदर्थं राज्ञो यः प्रजारक्षणेभ्यो धर्म्मस्तदर्थं धर्म्म धर्म्मव्यवस्थापकमादरार्थमभेदोपचारः, ब्रह्मतेजोमयं हिरण्यगर्भतेजःप्रकृतिकं, इयमपि स्तुतिरादराय, ईश्वरः प्रजास्रष्टा, राजा रञ्जनात्, पुरुषः परमपुरुषतुल्यः प्रजानां हृदि स्थितत्वात्, स एव नेता स्वधर्म्मप्रवर्त्तयिता, जागर्त्ति जाग्रत्कार्य्यचोरादिभ--ि-

---

* स्मृत इति पाठान्तरम् ।

† दण्डएव हि रक्षतीति पाठान्तरम् ।

कारणकारित्वात्* । यत्र श्यामो लोहिताक्षो दण्डोऽधिष्ठातृ-देवता चरति, तत्र प्रजा विवर्द्धन्ते, नेता शासनकर्त्ता सम्यक् चेत्† विचारयति ।

तथा ।

शुचिना सत्यसन्धेन यथाशास्त्रानुसारिणा ।
दण्डः प्रणयितुं शक्यः ससहायेन धीमता ॥
तस्याहुः सम्प्रणेतारं राजानं सत्यवादिनम् ।
समीक्ष्यकारिणं प्राज्ञं धर्म्मकामार्थकोविदम् ॥
असहायेन मूढेन लुब्धेनाकृतबुद्धिना ।
न शक्यो न्यायतोनेतुं सक्तेषु विषयेषु च ॥
तं राजा प्रणयन् सम्यक् त्रिवर्गेणाभिवर्द्धते ।
कामात्मा विषमः क्षुद्रो दण्डेनैव निहन्यते ॥
दण्डो हि सुमहत्तेजो दुर्द्धरश्चाकृतात्मभिः ।
धर्म्माद्विचलितं हन्ति नृपमेव सबान्धवम् ॥
ततो दुर्गञ्च राष्ट्रञ्च लोकञ्च सचराचरम् ।
अन्तरीक्षगतांश्चैव मुनीन्‡ देवांश्च पीडयेत् ॥
समीक्ष्य स धृत.§ सम्यक् सर्व्वा रञ्जयति प्रजाः ।
असमीक्ष्य प्रणीतस्तु विनाशयति सर्व्वतः ॥

---

* न्यायःकार्य्यचौरादिनिवारणकारित्वादिति पाठान्तरम् ।

† सम्यक्चेनेति पाठान्तरम् ।

‡ ऋषीनिति पाठान्तरम् ।

§ सुधृत इति पाठान्तरम् ।

समीक्ष्यकारिणं देशकालादिविमृश्यकारिणम्, मूढ़ेन सम्यगुपेक्षाहीनेन अकृतबुद्धिना अनभ्यस्तशास्त्रेण, सम्यक् विचारपूर्व्वकम्। कामात्मा स्वच्छन्दचारी, विषमः पक्षपातप्रयुक्तचेष्टः, समद्युतेजः तीक्ष्णतया, ततः सबान्धवनृपहननानन्तरम्। स्वधृतो यथार्हं धृतः।

तथा।

यदि न प्रणयेद्राजा दण्डं दण्ड्येष्वतन्द्रितः।
शूले मत्स्यानिवापक्ष्यन् दुर्व्वलान् बलवत्तराः*॥
अद्यात्काकः पुरोडाशं श्वा च लिह्याद्धविस्तथा।
स्वाम्यञ्च न स्यात्कस्मिंश्चित्प्रवर्त्तेताधरोत्तरम्॥

दण्ड्येषु दण्डार्हेषु। अधरोत्तरमुत्कर्षापकर्षवैपरीत्यम्।

अङ्गिराः।

राजा गुरुर्यमश्चैव शासन्धर्म्मेषु युज्यते।
कर्त्ता च मुच्यते पापान्न स पापेन लिप्यते॥

मनुः।

निग्रहेण च पापानां साधूनां संग्रहेण च।
द्विजातय इवेज्याभिः पूयन्ते† सततं नृपाः॥

पापाः पापयुक्ताः साधवो यथाशास्त्रवर्त्तिनः‡।

---

* दुर्व्वलान् बलिनः शूले भिन्द्युर्मत्स्यानिवाभया इति, सर्व्वोन्तात् बलिन शूले भिन्नमार्गोन्निरोधय इति च पाठान्तरम्।

† पूज्यन्त इति पाठान्तरम्।

‡ यथाशास्त्रकुशला इति पाठान्तरम्।

याज्ञवल्क्यः।

यो दण्ड्यान्दण्डयेद्राजा सम्यग्वध्यांश्च पालयेत्।
इष्टं स्यात्क्रतुभिस्तेन सहस्रशतदक्षिणैः* ॥
इति सञ्चिन्त्य नृपतिः क्रतुतुल्यफलं पृथक्।
व्यवहारान् स्वयं पश्येत्सभ्यैः परिवृतोऽन्वहम् ॥

तथा।

अधर्मदण्डनं लोके धर्मकीर्त्तिविनाशनम्†।
सम्यक् च‡ दण्डनं राज्ञः स्वर्गकीर्त्तिजयावहम् ॥

मनुः।

अधर्मदण्डनं लोके यशोघ्नं§ कीर्त्तिनाशनम्।
अस्वर्ग्यञ्च परत्रापि तस्मात्तत्परिवर्ज्जयेत् ॥
अदण्ड्यान् दण्डयन्राजा दण्ड्यांश्चैवाप्यदण्डयन्।
अयशो महदाप्नोति नरकञ्चैव गच्छति ॥

तथा।

यावानवध्यस्य वधे यावान्वध्यस्य मोक्षणे।
अधर्म्मो नृपतेर्दृष्टो धर्म्मस्त्वेव नियच्छतः ॥

नियच्छत. वध्यवधमवध्यमोक्षणञ्च कुर्व्वतः।

कात्यायनः।

---

* सुवर्णशतदक्षिणैरिति पाठान्तरम्।

† स्वर्गलोककीर्त्तिविनाशनमिति पाठान्तरम्।

‡ तु इति पाठान्तरम्।

§ लोकयशोघ्नमिति पाठान्तरम्।

राजानो मन्त्रिणश्चैव विशेषादेनमाप्नुयुः ।

धर्मासनात्तु पापानां नतानां दण्डधारणात् ।

नतानां विनीतानामदण्ड्यानामिति यावत् ।

वशिष्ठः ।

दण्ड्योत्सर्गे राजैकरात्रमुपवसेत्, त्रिरात्रं पुरोहितः*

कृच्छ्रमदण्ड्यदण्डने पुरोहितस्त्रिरात्रं राजा च ।

अदण्ड्यदण्डने दण्ड्यादण्डने । तेनानुपदेशनिमित्तकं त्रिरात्रं चरेत् पुरोहितः विपरीतोपदेशनिमित्तञ्च कृच्छ्रम् । राजा तु दण्ड्योत्सर्गे एकरात्रोपवासं कुर्यात्, अदण्ड्यदण्डने त्रिरात्रमुपवसेत् । चकाराकृष्टार्थेति द्रष्टव्यम् । क्वचित् पुनरदण्ड्यदण्डने इत्येव पठितम् ।

इति विवादरत्नाकरे [illegible] ।

---

## अथ दण्डोत्कर्षापकर्षादि ।

तत्र कात्यायनः ।

उचिष्टमपि पापस्य दण्डेत्यागस्य कारणम्* ।

तदा दण्डं प्रकल्पेत दोषमारोप्य यत्नतः ।

* [illegible]

---

* [illegible]

> प्राणात्यये तु यत्र स्यादकार्य्यकरणं कृतम्।
> दण्डस्तत्र तु नैव स्यादेष धर्मः स्मृतो भृगुः॥

आरोप्य विशेषतो निर्णय। प्राणात्यये प्राप्ते पापकर्म्म एव धर्म्मः स्मृत इति भृगुराहेति शेषः। अभिवृतोदिति पाठः स व्याप्त एव।

तथा।

> ब्राह्मणानान्तु सर्व्वेषामपराधो यदा भवेत्।
> अवशेनैव दैवात्तु तत्र दण्डं* न कल्पयेत्॥

अवशेन भयादिवशतया दैवात्प्रमादात्। अतःपरमतोऽन्येष्वपि प्रदुष्टेषु दण्डं नैव प्रकल्पयेदिति खण्डं पारिजातपठितं तत्र कामधेनौ कल्पतरौ चादर्शनाय पुरस्कृतम्।

तथा।

> सम्यग्दण्डप्रणेतारो नृपाः पूज्याः सुरैरपि।
> आरम्भे प्रथमं दद्यान्मध्यतीर्णे† मध्यमः स्मृतः।
> यस्य यो विहितो दण्डः पर्य्याप्ते स वै भवेत्॥

आरम्भे तत्कर्त्तव्यविषयकर्म्मकरणारम्भमात्र-एककर्म्मपातक-लब्धामित्यर्थः‡। प्रथमः कथितः सम्पूर्णदण्डचतुर्थभागात्मा।

---

* स्यादिति पाठान्तरम्।

† दद्ये इति पाठान्तरम्।

‡ [illegible]



प्रवृत्ते तथाविधानेककर्मफलकल्प्यां मध्यमो दण्डार्हः* । पर्य्याप्तस्य स वै भवेत्पर्य्याप्तिस्तत्पापफलकस्तत्कर्मजनकत्वतिः† तद्वतः पुरुषस्य स वै भवेत्सम्पूर्णो दण्डो भवेत् । एकपापफलावच्छिन्नानेककर्माभिप्रायमेवैतत्‡ ।

तथा ।

कल्पितो यस्य यो दण्डस्त्वपराधस्य यत्नतः ।
पणानां ग्रहणं तत्संख्यामूल्यं वाथ राजनि ॥
अपराधेषु नियतमाहु§र्गार्गीयमानवाः ।

यस्यापराधस्य संख्याविशेषवान् दण्डः प्रकल्पितः, तत्र संख्यया आकाङ्क्षायां पणो ग्राह्यः, पणमूल्यं वेति गार्गीयमानवा¶ आहुः । पारिजाते तु आहुराम्भीयमानवा इति पठितम् अम्भिर्नाम मुनिः तन्मानवास्तस्य शिष्या इति व्याख्यातम् ।

तथा ।

दण्डनीयः स मैथिल्यात्प्रथमं नेति गौतमः ।

मैथिल्याद्दण्डहेतुकर्म‖नियममैथिल्यात्तदनियमादिति यावत् ।

तथा ।

---

* दण्डार्हाविति पाठान्तरम् ।
† तत्पापफलकस्तत्कर्मजनकत्वतिरिति पाठान्तरम् ।
‡ एकपापफलावच्छिन्नानेककर्माभिप्रायमेतदिति पाठान्तरम् ।
§ अपराधे सुनियतमाहुर्गार्गीयमानवा इति पाठान्तरम् ।
¶ गार्गीयमानवा इति पाठान्तरम् ।
‖ कार्य्येति पाठान्तरम् ।

अर्थवन्तो* यतः सन्तो यथोक्तानपि ते दमान्।
दद्युर्नैवोपशाम्येयुस्तस्मात्तत्र विनिश्चयः† ॥
तस्माद्दण्डाहताः‡ पापा येन येनाशुभं पुनः।
न कुर्युस्तत्तदेवैषां कर्त्तव्यमिति निश्चयः ॥

तथा।

समूहस्थाः प्रवृत्ताश्च पापेषु पुरुषाधमाः।
यथोक्ताद्द्विगुणं दण्डमेकैकस्य प्रकल्पयेत् ॥

समूहस्था मिलिताः। यथोक्तादेकाकिनः पुरुषस्य पापे प्रवृत्तस्य यो दण्ड उक्तस्तस्मात्।

नारदः।

शारीरश्चार्थदण्डश्च दण्डस्तु द्विविधः स्मृतः।
शारीरो द्विविधः प्रोक्तो ह्यर्थदण्डोऽप्यनेकधा ॥
शारीरस्त्ववरोधादिर्जीवितान्तकरस्तथा§।
काकिन्यादिस्तु यो दण्डः स तु माषपरः स्मृतः ॥

काकिन्यादिः काकिन्यवरः, माषपरो माषान्तः। तेन यत्रापराधे काकिन्यात्मको दण्ड उक्तस्तत्रानुबन्धगौरवात्मातिशये माषपर्यन्त एव दण्डः कार्यः।

---

* सार्थवन्त इति पाठान्तरम्।

† न निश्चय इति पाठान्तरम्।

‡ तस्माद्दण्ड्याहता इति पाठान्तरम्।

§ जीवितान्तस्तथैव चेति पाठान्तरम्।

एवमुत्तरत्रेत्याह ।

मायावराद्धो यः प्रोक्तः* कार्षापणपरस्तु सः ।
द्यवरोऽष्टपणस्त्वन्यस्त्ववरो द्वादशोत्तरः ॥
कार्षापणाद्या ये प्रोक्ताः सर्व्वे ते स्युश्चतुर्गुणाः ।
एवमन्येऽपि विज्ञेयाः प्राक् चैते पूर्व्वसाहसात् ॥

पूर्व्वसाहसः पणसहस्रद्वयं सार्द्धं, तस्मात्प्राग्ये दण्डविशेषास्ते अनुबन्धगौरवात्पापातिशये चतुर्गुणा ग्राह्याः । पूर्व्वसाहसादौ तु पापातिशये चातुर्गुण्यं नास्तीत्यर्थः† ।

मनुः ।

कार्षापणं भवेद्दण्ड्यो यत्रान्यः प्राकृतो जनः ।
तत्र राज्ञो भवेद्दण्डः सहस्रमिति धारणा ॥

राज्ञामवान्तरनृपतीनाम् ।

तथा ।

ब्राह्मणं‡ बाधमानन्तु कामादवरवर्णजम् ।
हन्याच्चित्रैर्वधोपायैरुद्वेगजननैर्नृपः ॥

बाधमानमतिपीडयन्तम् । अवरवर्णजं शूद्रं, चित्रैः शूलाग्र निवेशनादिभिः ।

कात्यायनः ।

प्रव्रज्यावसितं शूद्रं जपहोमपरन्तथा ।

---

* यथात्र इति पाठान्तरम् ।

† न भवतीत्यर्थ इति पाठान्तरम् ।

‡ ब्राह्मणानिति पाठान्तरम् ।

शङ्खलिखितौ ।

> शिल्पिनः कारवः शूद्रास्तेषां व्यभिचारेष्वपि शिल्पो-पकरणानि रक्षेत् । तुलामानप्रतिमानसमुत्थानि वणिक्पथानां, चैत्रबीजभक्तगोशकटकर्षणद्रव्याणि कर्म-काणां, वाद्यभाण्डालङ्कारवासांसि रङ्गोपजीविनां, गृहशयनालङ्कारवासांसि वेश्यानां, शस्त्राणि चायुधोप-जीविनां सर्व्वेषां कारणद्रव्याणि* नाहार्य्याणि राज्ञा धार्म्मिकेणाहिपुरुषाः पापवहुलायाविधेयाय भवन्ति तेभ्यः पापांशभाग्राजा, तस्मात्धनामानुपकरणान् कुर्य्यात्तन्मूला हि वृत्तिर्भवति†, वृत्तिमूलो निवासः, तैर्निवसद्भिः स्फीतं राष्ट्रमित्युच्यते ।

शिल्पिनश्चित्रलेखादिकर्त्तारः‡ व्यभिचारेषु सर्वस्वापहार-योग्येषु अपराधेषु, तुलामानमूर्द्ध्वं मानं, प्रतिमानं सुवर्णादि-तुलनोपकरणं प्रस्थादि, भक्तं कृषिसिद्धर्थमन्नं, कर्षणद्रव्यं हलादि, वाद्यभाण्डं पटहादि, रङ्गोपजीविनां नृत्यवृत्तीनाम् ।

बृहस्पतिः ।

> वधार्हः सुवर्णशतं दण्डं§ दाप्यस्तु पूरुषः ।
> अङ्गच्छेदार्हस्तदर्द्धं सन्ध्यार्हस्तदर्द्धकम् ॥

---

* कारद्रव्याणीति पाठान्तरम् ।

† तन्मूला हि वृत्तिरिति पाठान्तरम् ।

‡ कारका इति पाठान्तरम् ।

§ दण्डमिति पाठान्तरम् ।

कात्यायनः।

सुवर्णशतमेकन्तु वधार्हो दण्डमर्हति।

अङ्गच्छेदे तदर्द्धन्तु विवासे पञ्चविंशतिम् ॥

अङ्गच्छेदे अर्हे विवासे अर्हे, क्वचित्पाठो विनाशे इति तत्रापि तद्देशवासविनाशे अर्हे इत्येक एवार्थः।

तथा।

कुलीनार्य्यविशिष्टेषु निकृष्टेष्वनुसारतः।

सर्व्वस्वं वा निगृह्यैतान् पुराच्छीघ्रं प्रवासयेत् ॥

निर्धना बन्धने स्थाप्या वधं नैव प्रवर्त्तयेत्।

सर्व्वेषां पापयुक्तानां विशेषार्थश्च शास्त्रतः॥

कुलीन उत्तमकुलः, आर्य्यः स्वधर्म्मनिरतः, विशिष्टो गुणवान्, एतेषु* निकृष्टेषु अल्पधनेषु वधार्हेषु अनुसारतः सुवर्णशतासम्भवेऽपीदं, तस्याप्यसम्भवे सर्व्वस्वम्।

तथा।

वधाङ्गच्छेदार्हविप्रो निःसङ्गे बन्धने विशेत्।

तदकर्म्मवियुक्तोऽसौ† हृतस्तस्य‡ दमोहि सः॥

कूटसाक्ष्यपि निर्वास्यो विख्याप्योऽसत्प्रतिग्रही।

अङ्गच्छेदी वियोज्यः स्यात्स्वधर्म्मे बन्धनेन तु ॥

वधाङ्गच्छेदार्हो यस्मिन्नपराधे वधोऽङ्गच्छेदो वा इति तद्वान्

* त्वेष्विति पाठान्तरम्।

† तदाकर्म्मविमुक्तोऽसाविति पाठान्तरम्।

‡ धृतस्येति पाठान्तरम्।

विप्रः अत्र सदाचारनिष्ठः, निसङ्गे क्रियायोगशून्ये, यत्र बद्ध' सन् स्वधर्म्मं कर्त्तुं न पारयति, स एव सदाचारस्य दमः यत् स्वधर्म्मवियोजनं नाम, विख्याप्यस्तेन रूपेण लोके प्रकाशनीयः। अङ्गच्छेदी परस्याङ्गच्छेत्ता।

तथा।

कर्णौष्ठघ्राणपादाक्षिजिह्वाशिश्नकरस्य च।

छेदने चोत्तमं दद्याद्भेदने मध्यमं भृगुः॥

छेदने कर्त्तने उत्तमं उत्तमसाहस पणसहस्रात्मकं भेदने विदारणे मध्यमं मध्यमसाहसम्।

तथा।

एतैः समापराधानां तत्राप्येवं प्रकल्पयेत्।

बालवृद्धातुरस्त्रीणां न दण्डस्ताडनं दमः॥

समापराधानामङ्गान्तरच्छेदभेदकर्तॄणाम्। प्रमादकृतापराध-विषयमेतत्।

मनुः।

क्षत्रविट्शूद्रयोनिस्तु दण्डं दातुमशक्नुवन्।

आनृण्यं कर्म्मणा गच्छेद्विप्रो दद्याच्छनैः शनैः॥

कर्म्मणा अर्थनिस्तारानुरूपव्यापारेण। विप्रस्तु न कर्म्मणा आनृण्य गच्छेत्, किन्तु क्रमेण दद्यादेव।

तथा।

स्त्रीबालोन्मत्तवृद्धानां दरिद्राणाञ्च रोगिणाम्।

शिफाविदलरज्ज्वाद्यैर्विदध्यान्नृपतिर्दमम्॥

र्दरिद्रोऽत्र कर्म्मण्यशक्तो निर्धनः।

कात्यायनः।

स्त्रीधनं दापयेद्दण्डं धार्म्मिकः पृथिवीपतिः।
निर्द्धना ग्रामदोषा स्त्री ताड़नं दण्डमर्हति॥

यदि धनवती स्त्री, तदा दोषे* धनं दण्डः, अधनायास्तु ताड़नमेवेत्यर्थः।

नारदः।

ब्राह्मणस्य परीहारो राज्ञ्यासनमग्रतः।
प्रथमं दर्शनं प्रातः सर्व्वेभ्यश्चाभिवादनम्॥
अग्रं नवेभ्यः शस्येभ्यो मार्गदानञ्च गच्छतः।
भैक्षहेतोः परागारे प्रवेशश्चानिवारितः॥
समित्पुष्पकुशादानेष्वस्तेयं स्वपरिग्रहात्।
अनाहूयः परेभ्यश्च सम्भाषश्च परस्त्रियाः॥
नदीष्ववितनन्तारः पूर्व्वमुत्तारणन्तथा।
तरेष्वशुल्कदानञ्च न वेदाणिज्यमस्य तत्॥

परीहारोऽदण्डः, राज्ञोऽग्रत आसनमुपवेशनं†, राज्ञे प्रातरादर्शनम्, नवशस्यानामग्रग्रहणम्, गच्छतो ब्राह्मणस्य अग्रे मार्गदानं, भैक्षहेतोः परागारेष्वनिवारितः प्रवेशश्च, निवारणे त्वपराध एव। अस्तेयमचौर्य्यमतएवानपराधः स्वपरिग्रहात् परिग्रहविषयसमिदादीनामप्यादानात्। अनाहूयः परेभ्यस

* ग्रामदोषे इति पाठान्तरम्।

† आसने उपवेशनमिति पाठान्तरम्।

मनुभ्योऽप्यन्यतो* ब्राह्मणो न दण्ड्यः। सम्भाषश्च परस्त्रिया इति भावदोषमात्राभिप्रायम्†। अवेतनो भृतिशून्यः, तारः पारगमनम्। पूर्व्वमब्राह्मणेभ्यः, तरेषु पारं प्रापणीयेषु वस्त्रादिषु, अशुल्कदानं राजग्राह्यादानम्। यदि तस्य ब्राह्मणस्य न वस्त्रादि वाणिज्यार्थं स्यात्।

इति विवादरत्नाकरे दण्डोत्कर्षापकर्षादितरङ्गः।

---

## अथ ब्राह्मणपरीहारः।

तत्र शङ्खलिखितौ।

इन्धनोदकाग्निकाष्ठ-तृणोपल पुष्प-फल पर्णादानेष्वपचयं देवतीर्थाभिगमनं गृहकोष्ठप्रवेशनं पथि शस्त्रधारणम-सम्बद्धमासनं प्रसुतेष्वनिवारणं* असद्दासश्चेति शिलोञ्छ-पद्योर्धान्यराशिग्रहणमयोत्सर्गप्रसवहृडिकर्पापण-शुल्क-नदीतरेष्वनुपरोधन परस्त्रीसम्भाषणं राजस्त्रीदर्शनं राज्ञा समासनं व्यतिक्रमणञ्च कोपात्सर्व्वमर्हति ब्राह्मणः।

---

* मनुभ्योऽप्यताड़नत इति पाठान्तरम्।

† भावदुष्टाभिप्रायमिति अदुष्टाभिप्रायमिति च पाठान्तरम्।

---

* प्रसूतेष्वनिवारणमिति पा

इन्धनेत्यादि । आरण्यकेन्धनादिविषयं, देवोऽनान्यपरिगृहीतो देवालयः । एवं तीर्थमपि । गृहकोष्ठप्रवेशनं परस्येति शेषः । पथि देशान्तरगमने । असम्बद्धमासनं प्रयोजनं विना यत्रक्वचनावस्थानम् । प्रस्तुतेषु* स्वकार्य्यार्थचेष्टितेषु† अनिवारणं तन्मध्यगमनानिवारणम् । असद्वासः कार्य्यवशादसद्भिः सह वासः । च छेदोऽव्ययानामनेकार्थत्वात्समुच्चये । शिलोञ्छपदयोः शिलोञ्छ इत्यात्मकहस्तिभ्यां‡ वर्त्तमानयोः शेषीभूतधान्यराशेर्ग्रहणम् । अग्नीत्सर्गमयत्यागपूर्व्वकमभ्यस्तनविधिना ग्रहणम् । नान्यथेति पारिजाते अधिकम् । प्रसवः स्फुट एव, वृद्धिः कुसीदं, कर्षः कर्षणं, आपणः क्रयविक्रयव्यवहारः, नदीतरः नदीतरणार्थं देयं, एतेषु यद्देयं तदप्रयच्छतोऽनुपरोधनमनाक्रमणं व्यतिक्रमणमाशालङ्घनञ्च । लक्ष्मीधरेण तु नारदवाक्यानन्तरं प्रकरणभेदः कृतः । ब्राह्मणस्य परीहार इति वाक्यं पठितम् ।

इति विवादरत्नाकरे ब्राह्मणपरीहारतरङ्गः ।

---

* कार्यार्थचेष्टितैरिति पाठान्तरम् ।

† प्रवृत्तेष्विति पाठान्तरम् ।

‡ इक्षुहस्तिभ्यामिति पाठान्तरम् ।

# अथ नगरपरीहारः।

तत्र शङ्खलिखितौ।

न वैष्टिकं जाङ्घिकं क्षेत्रद्रव्यापहरणं पुष्पमूलप्रचयनं स्वयमर्जितप्रवेशनं निष्क्रमणप्रवेशनेष्वनिवेदनं स्कन्धवाह्येषु शुल्को गणसमयश्रेणीपूगचरणव्यवहारनिष्ठा स्वामिनः परिज्ञातारोऽन्यत्र राजाभिद्रोहात् नगरनिवासिनां विप्रेतराणामपि परिग्रहाः अनपराधाः।

न वैष्टिक विष्टिः कर्मकरः तत्सम्बन्धि देयं वैष्टिकम्। जाङ्घिकं जङ्घाजन्यदेयं, स्वयमर्ज्जितस्य पण्यस्य राज्ञे अनिवेद्यापि प्रवेशनमनपराधः। निष्क्रमणप्रवेशनेष्वनिवेदनं राजपुरुषेभ्य इति शेषः। स्कन्धवाह्येषु शुल्कः स्कन्धे वहनयोग्येषु शुल्कदानम्*। गणो ब्राह्मणसमुदायः। समयः पाषण्डादीनां, श्रेणी शिल्पिसमूहः, पूगो वणिजादिसमूहः, गणादीनां चरणमाचारः व्यवहारो विवादः तत्र निष्ठा निर्णयः। स्वामिनः तत्र प्रधानभूताः परिज्ञातारः स्वे स्वे वृत्ते आचारव्यवहारप्रवर्त्तकत्वेन लक्षणपरिज्ञातारः। अन्यत्र राजाभिद्रोहाद्गणाभ्यन्तरेष्वपि राजद्रोहकारिषु न ते प्रभवः, किन्तु राजैव, तेन राजद्रोहादन्यत्र नगरवासिगणादिषु मुख्यानां स्वातन्त्र्येणाचारविवादपरिच्छेदो न दण्डायेत्यर्थः।

वृहस्पतिः।

---

* शुल्कादानमिति पाठान्तरम्।

साचिलेख्यानुमानेन सम्यग्दिव्येन वा जितः ।
यो न दद्याद्देयमर्थं स निर्व्वास्यस्ततः पुरात् ॥

अङ्गिराः ।

आत्मानं घातयेद्यस्तु रज्ज्वादिभिरुपद्रवैः* ।
मृतोऽमेध्येन लेप्तव्यो जीवेच्चेद्द्विगुणो दमः ॥

याज्ञवल्क्यः ।

राज्ञान्यायेन यो दण्डो गृहीतो वरुणाय तम् ।
निवेद्य दद्याद्विप्रेभ्यः स्वयं त्रिंशद्गुणीकृतम् ॥

अन्यायेन† अयथाशास्त्रम् ।

कात्यायनः ।

अन्यायोपार्ज्जितं न्यस्तं कोपे कोषं निवेशयेत् ।
कार्य्यार्थे कार्य्यनाशः स्याद्बुद्धिमान्नोपपातयेत्‡ ॥
दत्त्वा धनं तद्विप्रेभ्यः सर्व्वं दण्डसमुत्थितम् ।
पुत्रे राज्यं समासज्य कुर्व्वीत प्रायणं वने ॥
एवञ्चरेत्सदा युक्तो राजा धर्म्मेषु पार्थिवः ।
हितेषु चैव लोकस्य§ सर्व्वान् भृत्यान्नियोजयेत् ॥

इति विवादरत्नाकरे नगरपरीहारतरङ्गः ।

---

* रज्ज्वादिभिरुपक्रमैरिति राज्ञादिभिरुपद्रुतैरिति च पाठान्तरम् ।

† अन्यायं इति पाठान्तरम् ।

‡ बुद्धिमान्नोपपादयेदिति पाठान्तरम् ।

§ कार्य्येष्विति पाठान्तरम् ।

## अथ दण्डसंज्ञा।

तत्र शङ्खलिखितौ।

चतुर्विंशतिरेकनवतिः प्रथमसाहसः, द्विशतं पञ्चशतञ्चैव मध्यमसाहसः, षट्शतं सहस्रञ्चोत्तमः। यथासारापकारम्।

सर्वेषामाचतुर्विंशत्यादिरेकनवतिपर्यन्तः प्रथमसाहसाख्यो दण्डः। एवमुत्तरत्रापि, द्विशतादिः पञ्चशतान्तो मध्यमः, षट्शतादिः सहस्रान्त उत्तमः। यथासारापकारमर्थापराधानुसारेण, अतएव वित्तापराधलाघवगौरवाभ्यां विकल्पः।

तत्र* नारदः।

चतुर्विंशावरः पूर्व्वः परः षण्णवतिर्भवेत्।
शतानि पञ्च तु† परो मध्यमो द्विशतावरः॥
सहस्रस्तूत्तमो‡ ज्ञेयः स तु पञ्चशतावरः।
त्रिविधः साहसेष्वेवं दण्ड उक्तः स्वयम्भुवा॥

चतुर्विंशतेरारभ्य षण्णवतिपर्य्यन्तः प्रथमः। द्विशतादारभ्य पञ्चशतपर्य्यन्तो मध्यमः। पञ्चशतादारभ्य सहस्रपर्य्यन्त उत्तम इत्यर्थः।

मनुविष्णू।

---

* अत्र त्विति पाठान्तरम्।

† चेति पाठान्तरम्।

‡ सहस्रमुत्तम इति पाठान्तरम्।

पणानां द्वे शते सार्द्धे प्रथमः साहसः स्मृतः ।
मध्यमः पञ्च विज्ञेयः सहस्रन्त्वेव चोत्तमः* ॥

याज्ञवल्क्यः ।

साशीतिपणसाहस्रो दण्ड उत्तमसाहसः ।
तदर्द्धं मध्यमः प्रोक्तस्तदर्द्धमधमः स्मृतः ॥

पणसहस्रं परिमाणं यस्य स पणसाहस्रः तेन† पणसहस्रपरिमितसाशीतिपणोत्तर उत्तमसाहसः, एतेऽपि संख्याविकल्पा वित्तापराधलाघवगौरववैचित्र्यात्समञ्जसा बोद्धव्याः ।

इति विवादरत्नाकरे दण्डसंज्ञातरङ्गः ।

---

## अथ मानसंज्ञा ।

तत्र मनुः ।

लोकसंव्यवहारार्थं याः संज्ञाः प्रथिता भुवि ।
ताम्ररूप्यसुवर्णानां ताः प्रवक्ष्याम्यशेषतः ॥
जालान्तरगते भानौ यत्सूक्ष्मं दृश्यते रजः ।

---

* सहस्रन्त्वेवतूत्तम इति पाठान्तरम् ।

† तथाचेति पाठान्तरम् ।

प्रथमं तत्प्रमाणानां त्रसरेणुं प्रचक्षते ॥
त्रसरेणवोऽष्टौ विज्ञेया लिक्षैका च प्रमाणतः ।
ता राजसर्षपस्तिस्रस्ते तु द्वे गौरसर्षपः ॥
सर्षपाः षट् यवो मध्यस्त्रियवन्त्वेककृष्णलम् ।
पञ्चकृष्णलको माषस्ते सुवर्णस्तु षोडश ॥
पलं सुवर्णाश्चत्वारः पलानि धरणं दश ।
द्वे कृष्णले समधृते विज्ञेयो रूप्यमाषकः ॥
ते षोडश स्याद्धरणं पुराणश्चैव राजतः ।
कार्षापणश्च विज्ञेयस्ताम्रिकः कार्षिकः पणः ॥
धरणानि दश ज्ञेयः शतमानस्तु राजतः ।
चतुःसौवर्णिको निष्को विज्ञेयस्तु प्रमाणतः ॥

याः प्रथितास्ता लोकव्यवहारार्थं प्रवक्ष्यामि व्युत्पादयामीत्यर्थः । यवो मध्यः नातिस्थूलो नातिकृशः । दश पलानि धरणमिति सम्बन्धः । अपि धरणं राजतं पुराणश्च राजत इत्यन्वयः । कार्षापणः पण इति च द्वे संज्ञे ताम्रकर्षस्येत्यर्थः । कर्षादिशब्दाश्च लोक एव प्रसिद्धाः ।

याज्ञवल्क्यः ।

पलं सुवर्णाश्चत्वारः पञ्च वापि प्रकीर्त्तितम्[*] ।

माषाधिकारे विष्णुः ।

तद्द्वादशमञ्चार्द्धमेव चतुर्माषकं[†] सुवर्णः ।

बृहस्पतिः ।

लोके[‡] संव्यवहारार्थं संज्ञेयं कथिता भुवि ।

ताम्रकर्षकृता मुद्रा विज्ञेयः कार्षिकः पणः ॥

स एव चन्द्रिका प्रोक्ता तायतस्तु धानिकाः ।

ता द्वादश सुवर्णस्तु दीनाराख्यः स एव हि ॥

नारदः ।

माषो विंशतिभागस्तु ज्ञेयः कार्षापणस्य तु ।

काकिनी तु चतुर्भागो माषस्य च पणस्य च ॥

पञ्चनद्याः प्रदेशे तु संज्ञेयं व्यवहारिकी ।

कार्षापणप्रमाणन्तु तन्निबद्धमिहैव वा ॥

पञ्चनद्या इत्यादि, इह शास्त्रीयसंव्यवहारार्थं कार्षापण-प्रमाणं तदेवं निबद्धं, यत्पञ्चनद्याः प्रदेशे प्रसिद्धार्थम्, इतरत्तु तत्तद्दिशि लोकव्यवहारार्थमुक्तम् ।

तदिदमाह ।

---

[*] प्रकीर्त्तिता इति पाठान्तरम् ।

[†] चतुर्माषमिति पाठान्तरम् ।

[‡] लोकेति पाठान्तरम् ।

कार्षापणो दक्षिणस्यां दिशि रौप्यः प्रवर्त्तते।
पणैर्निबद्धः पूर्व्वस्यां षोड़शैव पणाः* स तु॥

कात्यायनः।

माषः पादो† द्विपादो वा दण्डो यत्र प्रकल्पितः।
अनिर्दिष्टस्तु सौवर्णं माषकं तत्र कल्पयेत्॥
यत्रोक्तो माषको दण्डो राजतं तत्र निर्द्दिशेत्।
कृष्णलैश्चोक्तमेव स्यादुक्तं दण्डविनिश्चये॥

यत्र माषको दण्ड इत्युक्तं तत्र राजतो ग्राह्यः, यत्र कृष्णलो दण्डस्तत्र सौवर्णो ग्राह्य इत्यर्थः।

इति विवादरत्नाकरे मानसंज्ञातरङ्गः।



## अथ नैगमादिसंज्ञा।

तत्र कात्यायनः।

नानापौरसमूहस्तु नैगमस्तु प्रकीर्त्तितः।
नानायुधधरव्राताः समवेताः प्रकीर्त्तिताः॥

---

* किं षोड़श इति पाठान्तरम्।

† षण्माष इति पाठान्तरम्।

समूहो वणिजादीनां पूगः सम्परिकीर्त्तित' ।
प्रव्रज्यावसिता ये तु पाषण्डा. परिकीर्त्तिताः ॥
ब्राह्मणानां समूहस्तु गण. सम्परिकीर्त्तित. ।
शिल्पोपजीविनो ये तु शिल्पिन. परिकीर्त्तिता. ॥
आर्हतसौगतानान्तु समूह सङ्घ उच्यते ।
चाण्डालश्वपचादीनां समूहो गुल्म उच्यते ॥
गणपाषण्डपूगाश्च व्राताश्च श्रेणयस्तथा ।
समूहस्थाश्च ये चान्ये वर्गाख्यास्ते हहस्पति. ॥

श्रेणयः शिल्पिसमूहः* ।

तथा ।

चातुर्वर्ण्यस्य या सृतिरसजात्यादिसम्भवा ।
तस्या धर्म्मा. समुद्दिष्टा जाति सा परिकीर्त्तिता ॥

असजा तिरसवर्ण. ।

इति विवादरत्नाकरे नैगमादिसंघातरङ्गः ।

---

* राजशिल्पिसमूह इति अमरशिल्पिसमूह इति च पाठान्तरम् ।



कल्पद्रुमे वाप्यथ पारिजाते
हलायुधे वाप्यथवा प्रकाशे।
यस्मात्समस्मादधिकश्च यत्र
दधाति रत्नाकर एक एव ॥
य कामधेनुरनुयाति स कल्पवृक्षो
य सेवते निजफलाय स पारिजातः।
तं वैरिगोत्रभिदमुच्चसहस्रदृष्टिं
चण्डेश्वर तुलयितु कतमे भवन्तु ॥
श्रीकृत्यदानव्यवहारशुद्धि-
पूजाविवादेषु गृहस्थकृत्यैः* ।
रत्नाकरा धर्मभुवो निबन्धाः
कृतास्तुलापूरुषदेन सप्त ।
रसगुणभुजचन्द्रैः सम्मिते शाकवर्षे
सहसि धवलपक्षे वाग्वतीसिन्धुतीरे ।

---

* तथा गृहस्थ इति, गृहस्थधर्म इति च पाठान्तरम् ।

अदित तुलितमुच्चैरात्मना स्वर्णराशि
निधिरखिलगुणानामुत्तरं सोमनाथ ॥

इति सप्रक्रियमहासन्धिविग्रहिकठक्कुरमन्त्रिवर श्रीवीरेश्वरात्मज
सप्रक्रियमहासन्धिविग्रहिकठक्कुरश्रीचण्डेश्वर
विरचितो विवादरत्नाकरः सम्पूर्णः ।

---